# तत्त्वचिन्तामणौ

## अनुमानखण्डः ।

प्रत्यक्षोपजीवकत्वात् प्रत्यक्षानन्तरं बहुवादिसम्मतत्वाच्चोपमानात् प्रागनुमानं निरूप्यते ।

तत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिस्तत्करणमनुमानं तच्च लिङ्गपरामर्शो न तु परामृश्यमानं लिङ्गमिति वक्ष्यते ।

अथानुमानं न प्रमाणं योग्योपाधीनां योग्यानुपलम्भाभावनिश्चयेऽप्ययोग्योपाधिशङ्कया व्यभिचारसंशयात् शतशः सहचरितयोरपि व्यभिचारोपलम्भेन लोके धूमादिदर्शनानन्तरं वह्न्यादिव्यवहारश्च सम्भावनामात्रात् संवादेन च प्रामाण्याभिमानादिति नाप्रत्यक्षं प्रमाणमिति न चाप्रमाणसाधर्म्येणाप्रामाण्यसाधने दृष्टसाधर्म्यस्यानुमानत्वात् एतद्वाक्यस्य सन्दिग्धविपर्यस्तान्यतरप्रत्ययत्वात् तयोश्च परकीययोरप्रत्यक्षत्वात् अनुमानमप्रमाणमिति वाक्यस्य प्रामाण्याप्रामाण्ययोर्व्याघाताच्च । किञ्चानुमानाप्रामाण्ये प्रत्यक्षस्याप्यप्रामाण्यापत्तेः प्रामाण्यस्यानुमे

यत्वात् स्वतश्च प्रामाण्यग्रहे तत्संशयानुपपत्तेः। व्याप्ति-ग्रहोपायश्च वक्ष्यते।

नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः न तावदव्यभिचरितत्वं तद्धि न साध्याभाववदवृत्तित्वम् साध्यवद्भिन्नसाध्याभाववदवृत्तित्वं साध्यवत्प्रतियोगिकान्योऽन्याभावासामानाधिकरण्यं सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वं साध्यवदन्यावृत्तित्वं वा केवलान्वयिन्यभावात्। नापि साध्यासामानाधिकरण्यानधिकरणत्वं साध्यवैयधिकरण्यानधिकरणत्वं वा तदुभयमपि साध्यानधिकरणानधिकरणत्वं तच्च तत्र यत्किञ्चित्साध्यानधिकरणाधिकरणे धर्मे चासिद्धम्।

अथेदं वाच्यं ज्ञेयत्वादित्यत्र समवायितया वाच्यत्वाभावो घटएव प्रसिद्धः व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वात्। नचैवं घटएव व्यभिचारः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववदवृत्तित्वं हि व्यभिचारः न च वाच्यत्वाभावस्तादृशोघटइति चेत्तर्हि तादृशसाध्याभावसामानाधिकरण्याभावोव्याप्तिः। तथाचाप्रसिद्धिः प्रतियोग्यवृत्तिश्च धर्म्मो न प्रतियोगितावच्छेदकः तद्विशिष्टज्ञानस्याभावधीहेतुत्वात् अन्यथा निर्व्विकल्पादपि घटोनास्तीति प्रतीत्यापत्तेः गवि शशशृङ्गं नास्तीतिप्रतीतेरप्रसिद्धेः शशशृङ्गं नास्तीति च शशे शृङ्गाभावइत्यर्थः। अथ साध्यासामानाधिकरण्यानधिकरणत्वे सति साधि-

करणस्य व्याप्ति' केवलान्वयिनि साध्यसामानाधिकरण्य निरधिकरणे चाकाशादौ प्रसिद्धमिति चेन्न साध्यसामानाधिकरण्य हि न साध्यानधिकरणाधिकरणत्व साध्याधिकरणानधिकरणत्व वा केवलान्वयिनि यत्किञ्चित्साध्याधिकरणानधिकरणे धूमे चाव्याप्तेः । नापि स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्य पर्वतीयवह्नेर्महानसीयधूमसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् द्रव्यत्वादेरव्याप्यस्याव्याप्यतापत्तेश्च । न च प्रतियोगिविरोधित्वं व्याप्यवृत्तित्वं वा अभावविशेषणं देय संयोगादौ साध्ये सत्त्वादेरनैकान्तिकस्याभावप्रसङ्गात् । न हि प्रतियोगिविरोधी संयोगादेरपरोऽत्यन्ताभावोऽस्ति अधिकरणभेदेनाभावभेदाभावात् । नापि साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्कत्वं व्याप्तिः मूले एव कपिसंयोगवान्नेत्यबाधितप्रतीतेः तदन्योन्याभावस्यापि तत्र सत्त्वात् । नचैवं भेदाभेद अवच्छेदकभेदेन सत् सत्त्वाभ्युपगमात् साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्त्वस्येति पर्यर्थं व्याप्यव्यापकभावानिरूपणात् साध्यसाधनयोर्व्याप्तिनिरूप्यत्वात् पर्क्कमत्पर्यंतस्य धमवभूमत्तानवनिष्ठान्योऽन्याभावप्रतियोगित्वाच्च विशेषाभावकूटादेवाभावव्यवहारोपपत्तौ सामान्याभावे मानाभावात् । नापि साधनसमानाधिकरण यावद्धर्मनिरूपितवैयधिकरण्यानधिकरणसामानाधिकरण्य साधनसमानाधिकरणस्य प्रमेयत्वादेर्वैय-

धिकरण्याप्रसिद्धेः महानसादौ समवायितया वह्निवह्नि-मतोरत्यन्तान्योऽन्याभावयोः सत्त्वात् धूमादावप्युक्तलक्षणा-भावाच्च । अथानौपाधिकः सम्बन्धो व्याप्तिः उपाधिश्च साध्यव्यापकत्वे सति साधनाव्यापकः व्यापकत्वन्तु तद्-न्निष्ठात्यन्ताभावाप्रतियोगित्वं व्यभिचारे चावश्यमुपाधिः प्रतियोगित्वं न विरोधित्वं महानवस्थाननियमलक्षणं गोत्वाश्वत्वयोरतथात्वात् अन्योऽन्याभावप्रतियोगित्वस्य सत्त्वाच्च किन्तु यथाधिकरणाभावयोः स्वरूपविशेष सम्बन्धः तथा प्रतियोगित्वमनुयोगित्वमपि अभावविरहत्वं निरूपितं चेत् यत्किञ्चित्साध्यव्यापकसाधनाव्यापकधर्म्मनिरूपणेन धूमादौ प्रकृतसाध्यव्यापकसाधनाव्यापकधर्म्मस्य सिद्धिसिद्धिभ्यां न निषेद्धुं शक्यः यावत्साध्यव्यापके प्रमेयत्वादौ साधनाव्यापकत्वं यावत्साधनाव्यापके च घटत्वादौ साध्यव्यापकत्वं निषिध्यत इति चेन्न व्यधिकरणत्वात् यावत्साधनाव्यापक-मव्यापकं यत्साध्यस्य यावत्साध्यव्यापकं व्यापकं वा यस्य तत्त्वं तदिति चेन्न सोपाधेरपि तथात्वात् तथाहि साध-नस्य वह्नेरव्यापकं यावदार्द्रेन्धनन्तत् प्रत्येकमव्यापकं सा-ध्यधूमस्य द्वितीये साध्यधूमस्य व्यापकमार्द्रेन्धनं तद्व्यापकं महानसीयवह्नेः । नापि साध्यं यावद्व्यभिचारि तदव्यभि-चारित्वमनौपाधिकत्वं साध्याव्यभिचारित्वस्यैव गमकत्व-सम्भवात् तच्च दूषितम् । नापि कात्स्न्येन सम्बन्धो व्याप्तिः एकव्यक्तिके तदभावात् नानाव्यक्तिकेऽपि सकलधूमसम्ब-

न्धस्य प्रत्येकपक्षाप्रभावात् अतएव न कार्त्स्न्येन साध्येन सम्बन्धो व्याप्तिः विषमव्याप्तेः तदभावाच्च। न च यावत् साधनाश्रयाश्रितसाध्यसम्बन्धः साधनाश्रये गगनादौ सकले प्रत्येकं वह्न्याश्रितत्वाभावात्। नापि साधनसमानाधिकरणयावद्धर्मसमानाधिकरणसाध्यसामानाधिकरण्यं यावद्धर्मसामानाधिकरण्यं हि यावत्तद्धर्माधिकरणाधिकरणत्वं तच्चाप्रसिद्धं साधनसमानाधिकरणसकलधर्माणामेकाधिकरणाप्रतीतेः। नापि स्वाभाविकः सम्बन्धो व्याप्तिः स्वभावजन्यत्वे सदाश्रितत्वादौ वा व्याप्त्यतिव्याप्तेः। नाप्यविनाभावः केवलान्वयिन्यभावात्। अथ सम्बन्धमात्रं व्याप्तिः व्यभिचारिसम्बन्धस्यापि केनचित् सह व्याप्तत्वात् धूमादिव्याप्तिस्तु विशिष्यैव निर्वक्तव्येति तत्र लिङ्गपरामर्शविषयव्याप्तिस्वरूपनिरूपणप्रस्तावे लक्षणाभिधानस्यार्थान्तरत्वात्। न च सम्बन्धमात्रं तथा तद्बोधादनुमित्यनुत्पत्तेः। नापि व्याप्तिपदप्रवृत्तिनिमित्तमिदं सम्बन्धमात्रेऽपि व्याप्तिपदाप्रयोगात्। केवलान्वयिनि केवलान्वयिधर्मसम्बन्धो व्यतिरेकिणि साध्यवदन्यावृत्तित्वं व्याप्तिः एतयोरनुमितिविशेषजनकत्वं अनुमितिमात्रे पक्षधर्मतैव प्रयोजिका। तथाऽतिप्रसङ्गः विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्य्यजनकत्वनियमादिति केचित् तदपि न साध्यवदन्यावृत्तित्वस्य धूमेऽसत्त्वात् वह्निमत्पर्वतान्यस्मिन् धूमसत्त्वात्। न च सकलसाध्यवदन्यावृत्तित्वं मध्यि-

सतां प्रत्येकं तथात्वात् सर्वत्र लक्षणे साध्यत्वसाधनत्व-तदभिमतत्वानां व्याप्तिनिरूप्यत्वेनाभाश्रयः साध्यत्वं हि न सिद्धिकर्मत्वं सिषाधयिषाविषयत्वं वा महानसीयवह्नौ तदभावात्। नच सामान्यतो व्याप्त्यवगमोऽस्त्येव परस्य कथमन्यथा दूषणे नासाधकतां साधयेदिति वाच्यं स्वार्थानुमानोपयोगिव्याप्तिस्वरूपनिरूपणं विना कथायामप्रवेशादिति।

अत्रोच्यते। प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः अन्यनिष्ठवह्नेधूमवत्पर्वतवृत्त्यत्यन्ताभावप्रतियोगित्वेऽपि तत्प्रतियोगिता न वह्नित्वेनावच्छिद्यते धूमवति वह्निर्नास्तीत्यप्रतीतेः सामान्यावच्छिन्नप्रतियोगिताकाभावः पृथगेव अन्यथा सकलप्रसिद्धरूपाभावे प्रसिद्धरूपवदन्यत्वे चावगते वायौ रूपं न वा वायूरूपवान्नवेति संशयो न स्यात् विशेषाभावकूटस्य निश्चितत्वात्।

यद्वा प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना सामानाधिकरण्यं यत्समानाधिकरणान्योऽन्याभावप्रतियोगि यद्वन्न भवति तेन समं तस्य सामानाधिकरण्यं वा स्वसमानाधिकरणान्योऽन्याभावाप्रतियोगियद्वत्कत्वं वा। अन्यवृत्तिवह्नितद्वतोरन्यवृत्तिधूमवन्निष्ठात्यन्ताभावान्योऽन्याभावप्रतियोगित्वात् व्यधिकरणवह्निधूमयोर्न-

व्याप्ति किन्तु तत्तद्रूपस्य समानाधिक  महिम्ना ।
सर्व्वत्र धूमवत्त्वे न व्याप्तिरिति वाच्यं सर्व्वधू  गत्यन्तेन
धूममात्रस्य व्याप्यत्वात् धूमसम्बन्धिवह्निव्याप्य  गुण-
सत्त्वगुणविनष्टयोश्च व्याप्तिरेव कर्म्मणि च संयोगाभाव
प्रतियोग्यसमानाधिकरण्य । यद्वा प्रतियोगिवैयधिकरण्या-
वच्छेदकावच्छिन्नत्वमत्यन्ताभावविशेषणं कर्म्मणि च संयो-
गाभावस्य प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वमेव ।
तथान्योऽन्याभावस्याव्याप्यवृत्तित्वम् अभेदस्याबाधितप्रत्य-
भिधानात् । व्याप्यव्यापकभावाभानेऽपि वस्तुतस्तथात्व-
नाज्ञायमानस्य सम्बन्धग्रहेणैव भातस्य पदार्थस्य नचैवमननु-
गमो दोषाय कस्य का व्याप्तिरित्यननुगतस्यैव लक्ष्यत्वात् ।
अथ धूमवति वह्निद्वयो भवत धूमवान् वह्निमद्भिन्नो न
भवतीति प्रतीतिप्राप्तव्याप्यवृत्तिप्रतियोगिकौ वह्निवह्निमतो-
रत्यन्तान्योऽन्याभावौ धूमवति विद्येते इति कथमेते लक्षणे
इतिचेन्न तादृशाभावानभ्युपगमात् अभ्युपगमे वा तत्र
तदुभय प्रतियोगि न वह्निवह्निमन्तौ । अथवानौपाधिकत्व
व्याप्तिः तच्च यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियो-
गितावच्छेदकावच्छिन्न यत् तत्प्रतियोगिकात्यन्ताभावसमा-
नाधिकरण्य यत् तेन सम सामानाधिकरण्यम् । अतएव
सोपाधि तत्र साधनसमानाधिकरणात्यन्ताभावप्रतियो-
गिन आर्द्रेन्धनवत्त्वादेरुपाधेर्योऽत्यन्ताभावस्तेन सम सा-
ध्यस्य धूमादेः सामानाधिकरण्याभावात् उपाधेः साध्यव्या-

पकत्वात् एतदेव यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामा-
नाधिकरण्यमनौपाधिकत्वं गीयते। यद्वा यावद्यत्समानाधि-
करणात्यन्ताभावाप्रतियोगिप्रतियोगिकात्यन्ताभावासामा-
नाधिकरण्यं यस्य तस्य तदेवानौपाधिकत्वं सोपाधौ तु सा-
ध्यवन्निष्ठात्यन्ताभावाप्रतियोगिनउपाधेर्यो ऽत्यन्ताभावस्तेन
समं हेतोः सामानाधिकरण्यम् उपाधेः साधनाव्यापक-
त्वात्। यद्वा यत्सम्बन्धितावच्छेदकरूपवत्त्वं यस्य तस्य सा
व्याप्तिः। तथाहि धूमस्य वह्निसम्बन्धित्वे धूमत्वमवच्छेदकं
धूममात्रस्य वह्निसम्बन्धित्वात् वह्नेस्तु धूमसम्बन्धेन वह्नित्व-
मनवच्छेदकं धूमासम्बन्धिनि गतत्वात् नह्यतिप्रसक्तमवच्छेदकं
संयोगादौ तथात्वादर्शनात् किन्तु वह्नावार्द्रेन्धनप्रभवव-
ह्नित्वं धूमसम्बन्धितावच्छेदकं तादृशश्च व्याप्यमेव। अथवा
यत्सामानाधिकरण्यावच्छेदकावच्छिन्नं यस्य स्वरूपं तत्तस्य
व्याप्यं वह्निसामानाधिकरण्यं हि धूमे धूमत्वेनावच्छिद्यते
सोपाधौ तूपाधिना। अतएव साधनतावच्छेदकभिन्नेन
येन साधनताभिमते साध्यसम्बन्धोऽवच्छिद्यते स एव तत्र
साधने विशेषणमुपाधिरिति वदन्ति। अतएव च साधना-
व्यापकत्वे सति साधनावच्छिन्नसाध्यव्यापकत्वं लक्षणं ध्रुवं
व्यभिचारिणि साधने एकत्र साध्यतदभावयोर्विरोधेनाव-
च्छेदकभेदं विना तदुभयसम्बन्धाभावादवश्यं साध्यसम्बन्धि-
तावच्छेदकमस्ति तदेव च साधनावच्छिन्नसाध्यव्यापकं
साधनाव्यापकं तत्रोपाधिः अतएव व्यभिचारे चावश्यमुपा-

धिरिति सद्दूषकत्वे अन्यथा व्यभिचारादेव गतार्थत्वेन व्यभिचारित्वेन न तस्यानुमानमप्रयोजकत्वात् अतएव च तस्य साध्यसम्बन्धितावच्छेदकरूपलक्षणा व्याप्तिः साधनताभि मते च कामीति स्फटिके जपाकुसुमवदुपाधिरसावुच्यते समयन्तु साध्यसाधनसम्बन्धव्यापकत्वे सति साधना व्यापकत्वं विषमव्याप्तस्तु नोपाधिपदवाच्यः प्रवृत्तिनिमित्ता भावात् दूषकता च तस्य व्यभिचारोन्नायकतया तथ व्यभि- चारोन्नायकत्वमेवोपाधित्वं अप्रयोजकसाध्यव्यापकव्यभि- चारिणोरप्युपाधित्वापत्तेरिति ।

सेयं व्याप्तिर्न भूयोदर्शनगम्या दर्शनानां प्रत्येकमहे- तुत्वात् आशुविनाशिनां क्रमिकाणां मेलकाभावात् नच तावद्दर्शनजन्यसंस्कारा इन्द्रियसहकृता व्याप्तिधीहेतव प्रत्यभिज्ञायामिन्द्रियस्य तथात्वकल्पनादितिवाच्यं समान- विषये स्मरणे प्रत्यभिज्ञाने च संस्कारो हेतुरत कथं संस्का रेण व्याप्तिज्ञानं जन्येत अन्यथातिप्रसङ्गः । किञ्च सम्बन्ध- नयोर्दर्शने भूयस्त्वं स्थानेषु दर्शनं भूयसां वा दर्शनं भूयांसि वा दर्शनानि न तथा एकत्र रूपरसयोर्द्रव्यत्वघटत्वयोश्च व्याप्तिग्रहात् एकत्रैव धारावाहिके तद्ग्रहप्रसङ्गात्, भूयस्त्वस्य त्रिचतुरादित्वेनाननुगमाच्च । अपि च पार्थिवत्वलोहलेख्यत्वादौ शतशो दर्शनेऽपि व्याप्त्यग्रहात् तर्कसहकृतस्य तथेति चेत्तर्हि सहचारदर्शनव्यभिचारादर्शनसहकृतः स एव व्याप्तिग्राहकोऽस्तु आवश्यकत्वात् किं भूयोदर्शनेन अथ तेन

विना तर्कएव नावतरति प्रथमदर्शने व्युत्पन्नस्य तर्कसम्भ॰
वात् नचैवमेवास्तु तर्कस्य व्याप्तिग्रहमूलकत्वेनानवस्थानात्
जातमात्रस्य प्रवृत्तिनिवृत्तिहेत्वनुमितिजनकव्याप्तिज्ञानं
तर्कं विनैवातोनानवस्थेति चेत्तर्हि व्यभिचारात् सोऽपि
नव्याप्तिग्रहे हेतुः नचैतद्वह्नावबान्तरजातिरस्ति सामान्य-
प्रत्यासत्त्या सर्व्वोपसंहारादविनाभावग्रहः सामान्यरूपता
च सकृद्दर्शनगम्येतिभूयोदर्शनापेक्षेति चेन्न सामान्यस्य हि
प्रत्यासत्तित्वं लाघवात् नतु सामान्यतया ज्ञातस्य तदन-
भ्युपगमाच्च । नच काकतालीयत्वादिशङ्काव्युदासार्थं द्विती-
यादिदर्शनापेक्षेति वाच्यं द्वितीयादिदर्शनेऽपि शङ्कातादव-
स्थ्यात् । नत्वनौपाधिकत्वज्ञानं व्याप्तिज्ञाने हेतुः तद्दे-
शकालतत्रावस्थितघटादीनामुपाधित्वशङ्कानिरासः कस्य-
चित् साधनव्यापकत्वज्ञानेन कस्यचित् साध्याव्यापकत्व-
ज्ञानेन स्यात् तच्च भूयोदर्शनं विना नावतरतीति चेन्न
अयोग्योपाधिव्यतिरेकस्यानुमानाधीनज्ञानत्वेनानवस्थापा-
तात् । अथ साध्यसाधनसहचरितधर्म्मान्तराणामुपा-
धित्वसंशये न व्याप्तिग्रहः अतस्तेषामनुपाधित्वज्ञानं भूयो
दर्शनाधीनसाध्याव्यापकत्वज्ञाने सतीत्येतदर्थं भूयोदर्शना-
पेक्षा अतएव यावता दर्शनेन तन्निश्चयस्तावद्भूयोदर्शनं
हेतुरिति न वारसंख्यानियमो न वाऽननुगमः यद्यपि
चान्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वसंशयो नान्यव्या-
प्तिग्रहप्रतिबन्धकस्तथापि तदाहितव्यभिचारसंशयः प्रति-

बन्धक इति तद्विधूननमावश्यकमिति चेन्न अयोग्योपाधि शङ्काधीनव्यभिचारशङ्कायास्तथाप्यनुच्छेदात् स च न भूयोदर्शनाद्व्याप्यनुमानादित्युक्तम्। अपि च भूयोदर्शना-हितसंस्कारो न बहिरिन्द्रियसहकारी तद्व्यापारं विनापि च सहचारादिज्ञानवतो व्याप्तिग्रहात् नापि मनस इन्द्रि-यादिवत् भूयोदर्शनजन्यसंस्कारस्य तज्जन्यस्मरणस्य वा प्रमा-णान्तरत्वापत्ते तस्मात् परिशेषेण सहदर्शनगम्या सा तथा ह्युपाध्यभावो व्याप्तिः अभावश्च केवलाधिकरणं तत्काल सम्बन्धो वा स्वप्रकाशरूप तज्ज्ञान वा तच्च प्रथमदर्शनेनाव-गतमेव चक्षुरादिना न चाधिकस्तदभावोऽस्ति न च प्रति-योगिज्ञानमधिकरणादिज्ञानजनक येनोपाधिज्ञान विना तन्न स्यात् एवमुपाध्यभावे ज्ञाते किञ्चिन्न ज्ञातुमवशिष्यते उपाध्यभावव्यवहारस्तु तन्नि यमपेक्षते दीर्घत्वादिव्यवहार-वदुपाधिज्ञान नचैव रासभसम्बन्धतुल्यवह्निधूमसम्बन्धज्ञा-नादेवानुमितिः स्यादिति वाच्यम् उपाधिस्मरणे सत्युपाधि-तद्व्याप्येतरसकलतदुपलम्भकसमवधाने चोपाध्यनुपलम्भस-हितस्य केवलाधिकरणज्ञानस्यानुमितिहेतुत्वात् व्यवहा-रहेतुत्वाच्च। नन्वेवं प्रथमदर्शनेन व्याप्तिनिश्चयाद्वितीयद-र्शने सति रासभादिसंशयवत् तत्संशयो न स्यादिति चेत् व्याप्तिज्ञानानन्तरं किं विद्यमान एवोपाधिर्मयोपाधिस्तेन न ज्ञात इतिशङ्कया गृहीतव्याप्तावपि भवत्य अतस्तत्र भूयोदर्शनेनोपाधिनिरासद्वारा व्याप्त्यभावशङ्कापनीयते।

यद्वा ज्ञानप्रामाण्यसंशयाद्व्याप्तिसंशयः यथा घटज्ञानसामग्र्यां सत्यां घटज्ञाने सति तत्प्रामाण्यसंशयाद्धितस्तत् संशयो न त्वग्रिमसंशयानुरोधेन तत्र घटज्ञानमेव न वृत्तमिति कल्प्यते तथेहाप्युपाध्यभावस्य व्याप्तित्वात् तस्य च केवलाधिकरणरूपस्य प्रथमदर्शनेऽपि निश्चितत्वात् व्याप्तिग्राहकान्तरस्याभावाच्च परिशेषेण सहदर्शनस्य व्याप्तिग्राहकत्वात् तन्निश्चये प्रामाण्यसंशयादेव तत् संशयः। नचैवं रासभेऽपि प्रथमं व्याप्तिपरिच्छेदः स्यादिति वाच्यं तत्र व्याप्तेरभावात् प्रत्यक्षज्ञाने विषयस्य हेतुत्वात् क्वचिदसंसर्गाग्रहात् तथाव्यवहारो दोषमाहात्म्यात् नचात्रापि तथारोपे सति निमित्तानुसरणं नतु निमित्तमस्तीत्यारोप इत्यभ्युपगमात्। केचित्तु साधनवन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं साधनवन्निष्ठान्योऽन्याभावाप्रतियोगिसाध्यवत्कत्वं वा व्याप्तिस्तदुभयमपि योग्यं प्रत्यक्षेण वह्निधूमसम्बन्धानुभवेन प्रथममवगतमेव। महानसे योऽत्यन्ताभावोऽन्योऽन्याभावोवावगतस्तस्य प्रतियोगी न वह्निर्न वा वह्निमानित्यनुभवात् रासभे तथावगमेऽप्यग्रे स बाध्यतइति तन्न एवं हि तद्वह्नितद्धूमयोरेव व्याप्तिः स्यात् नतु धूमत्ववह्नित्वावच्छेदेन नच तदनुमानोपयोगिवह्नित्वं वह्निमत्त्वं वा न प्रतियोगितावच्छेदकमिति प्रथमतो ज्ञातुमशक्यमेवेतिमैवं प्रकृतसाध्यव्यापकसाधनाव्यापकोवा साधनत्वाभिमतेन समं प्रकृतसाध्यसम्बन्धितावच्छेदकं

विशेषणं वोपाधिः उभयथापि तदभावो न व्याप्तिः सिद्धासिद्धिभ्यां तन्निषेधानुपपत्तेः किन्तु यावत्स्वव्यभिचारिव्यभिचारि साध्यसामानाधिकरण्यमनौपाधिकत्वं तस्य च प्रथमं ज्ञातुमशक्यत्वात्। किञ्च न वस्तुगत्या व्याप्तेर्ज्ञानं हेतुः किन्तु व्याप्तित्वेन तच्च उपाध्यभावत्वं नच उपाधेरज्ञाने तदभावत्वेन ज्ञानं सम्भवति विशेषणज्ञानसाध्यत्वाद्विशिष्टज्ञानस्य नच नियमतः प्रथममुपाधिधीरस्ति। यच्चोक्तं प्रतियोगिज्ञानं व्यवहारहेतुः नाभावज्ञानमित्यस्तु तावदेव तथापि तदभावो मा व्यवहारि उपाध्यभावज्ञानाधीनत्वमिति स्यादेव उपाधिज्ञानं विनापि तथैव। वस्तुतस्तु विशेषादर्शने सहचारादिसाधारणधर्मदर्शनाद्व्यभिचारसंशयात् प्रथमदर्शनेन न व्याप्तिनिश्चयः। अथ व्यभिचारसंशयो नाव्यभिचारनिश्चयप्रतिबन्धकः प्रामाण्यसंशयस्य निश्चयाप्रतिबन्धकत्वात् अन्यथा संशयोत्तरं क्वापि निश्चयो न स्यादिति चेन्न व्यभिचारसंशयः प्रतिबन्धक इति ब्रूमः किन्तु विशेषादर्शने सति सहचारादिसाधारणधर्मदर्शनात् संशयः स्यात् नतु संशयसामग्रीतो निश्चय इति। किञ्च यत्रैव सामग्री यत्र प्रतिबन्धिका विशेषादर्शने तत्र सहीरमीति व्यभिचारसंशयोऽपि प्रतिबन्धक एव भूयोदर्शनमपि सहायकतर्कस्यानवस्थाग्रस्तएवेति कथं व्याप्तिग्रहः।

अत्रोच्यते व्यभिचारज्ञानविरहसहकृतं सहचारदर्शनं व्याप्तिग्राहकं ज्ञानं निश्चयः शङ्का च सा च क्वचिदुपाधि-

सन्देहात् क्वचिद्विशेषादर्शनसहितसाधारणधर्म्मदर्शनात् तद्विरहस्य क्वचिद्विपक्षबाधकतर्कात् क्वचित् स्वतः सिद्धएव तर्कस्य व्याप्तिग्रहमूलकत्वेनानवस्थेति चेत् न यावदाशङ्कं तर्कानुसरणात् यत्र च व्याघातेन शङ्कैव नावतरति तत्र तर्कं विनैव व्याप्तिग्रहः तथाहि धूमो यदि वह्निसमव-हिताजन्यत्वे सति वह्निसमवहिताजन्यः स्यान्नोत्पन्नः स्यादित्यत्र किं धूमोऽवह्नेरेव भविष्यति क्वचिद्वह्निं वि-नापि भविष्यति अहेतुकएव वोत्पत्स्यत इति शङ्का स्यात् सर्वत्र स्वक्रियाव्याघातः स्यात् यदि हि गृहीतान्वय-व्यतिरेकं हेतुं विना कार्य्योत्पत्तिं शङ्केत तदा स्वयमेव धूमार्थं वह्नेः तृप्त्यर्थं भोजनस्य परप्रतिपत्त्यर्थं शब्दस्य चोपादानं नियमतः कथं कुर्य्यात् तेन विनापि तत्सम्भवात् तस्मात्तत्तदुपादानमेव तादृशशङ्काप्रतिबन्धकं शङ्कायां न नियतोपादानं नियतोपादाने च न शङ्का तदिदमुक्तं तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातो न भवतीति नहि सम्भवति स्वयं वह्न्यादिकं धूमादिकार्य्यार्थं नियमत उपादत्ते तत् कारणं तन्नेत्याशङ्क्यते चेति एतेन व्याघातो विरोधः सच सहानवस्थाननियमइति तत्राप्य-नवस्थेति निरस्तं स्वक्रियायाएवशङ्काप्रतिबन्धकत्वात् अत-एव व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम् । व्या-घातावधिराशङ्का तर्कः शङ्कावधिः कुतइतिखण्डनकारम-तमप्यपास्तम् । नहि व्याघातः शङ्काश्रितः किन्तु स्वक्रियैव

शङ्काप्रतिबन्धिकेति न वा विशेषदर्शनात् क्वचित् शङ्का
निवृत्तिरेव स्यात् न चैतादृशशङ्कापत्तौ भूयोदर्शनं विनेति
भूयोदर्शनादेः नतु न स्यादेव प्रयोजकः अतएव न तदा
हितसंस्कारो न मानान्तरं तर्कस्याप्रमाणत्वात् तत्र प्रत्य
क्षव्याप्तिग्रहे हेतुः तर्काभावेऽपि शब्दानुमानाभ्यां तद्
ग्रहात् । ननु सहचारदर्शनव्यभिचारादर्शनयोर्व्यभिचार-
शङ्काविरहानुकूलतर्कयोर्वा न व्यभिचारिसाधारणमिति
न ततोऽपि व्याप्तिनिश्चय इति चेन्न स्वरूपसतोरेव तयो-
र्व्याप्तिग्राहकत्वात् सन्निकर्षव्याप्तिमता तदाभासात्तत्प्रमा
विशेषदर्शनसत्त्वासत्त्वाभ्यां पुरुषज्ञानमिव । अपरे तु
यत्र तर्के व्याप्त्यनुभवो मूलं तत्र तर्कान्तरापेक्षा यत्र तु
व्याप्तिस्मरणं हेतुः तत्र न तर्कान्तरापेक्षेति नानवस्था
अस्ति च जातमात्राणामिष्टानिष्टसाधनतानुमितिहेतु
व्याप्तिस्मरणं तदानीं व्याप्त्यनुभावकाभावात् तन्मूलानु-
भवमूलापायेऽपि व्याप्तिस्मरणपरम्परेति । यत्त्वनादि-
सिद्धकार्यकारणभावविरोधादिमूलाः केचित्तर्का इति तन्न
तत्र प्रमाणानुयोगेऽनुमानएव पर्यवसानात् । नच व्याप्ति
ग्रहान्यथानुपपत्त्यैव तर्कस्यानादिसिद्धव्याप्तिकत्वज्ञानमिति
वाच्यम् अनुपपत्तेरप्यनुमानत्वात् । अन्ये तु विपक्षबाधक
तर्कादनौपाधिकत्वग्रहएव तदधीनो व्याप्तिग्रह इति तदपि
न तर्कस्याप्रमाणत्वात् । व्यभिचारादिशङ्कानिरासद्वारा
प्रत्यक्षादिसहकारी स इति चेन्न अनवस्थाभयेन तर्क

विना व्याघातात् यत्र शङ्काविरहस्तत्र व्याप्तिग्रहे तर्कस्य व्यभिचारात्। यत्तु योग्यानामुपाधीनां योग्यानुपलब्ध्याऽभावग्रहः अयोग्यानान्तु साध्याव्यापकत्वसाधनव्यापकत्व-साधनादभावग्रह इत्यनौपाधिकत्वं सुग्रहमिति तत्तुच्छम् अनुमानेन तत्साधनेऽनवस्थानात् प्रमाणान्तरस्याभावात्। ये चानुकूलतर्कं विनैव सहचारादिदर्शनमात्रेण व्याप्तिग्रहं वदन्ति तेषां पक्षेतरत्वस्य साध्यव्यापकत्वग्रहेऽनुमानमात्रमुच्छिद्येत अनुमानमात्रोच्छेदकत्वादेव पक्षेतरोनोपाधिरिति चेत् भ्रान्तोऽसि नहि वयमुपाधित्वेन तस्य दोषत्वमाचक्ष्महे साध्यव्यापकत्वेन तद्व्यतिरेकात् पक्षे साध्यव्यावर्त्तकतया व्यापकव्यतिरेके व्याप्यव्यतिरेकस्य वज्रलेपात् अपि च करवह्निसंयोगः शक्त्यतिरिक्तातीन्द्रियधर्मसमवायी जनकत्वादित्यत्राप्रयोजकत्वान्न साधकं तत्र व्याप्तस्य पक्षधर्मत्वे किमप्रयोजकं नाम तस्माद्विपक्षबाधकतर्काभावान्न तत्र व्याप्तिग्रह इत्यप्रयोजकत्वमिति।

उक्तव्याप्तिप्रकारेष्वन्योऽन्याभावगर्भैव व्याप्तिरनुमितिहेतुर्लाघवात् अतोनाननुगमः। अनौपाधिकत्वं तल्लक्षणं नन्वेवमुपाधिरसिद्ध्युपजीव्यत्वेन व्यभिचारवत् हेत्वाभासान्तरं स्यात् न तु व्याप्यभावत्वेनासिद्धिरिति चेत् तज्ज्ञानमुपजीव्यमपि न स्वतोदूषकं नान्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यस्य साध्यव्याप्यत्वज्ञाने प्रतिबन्धकमतिप्रसक्तेः व्यभिचाराज्ञानस्य तद्धेतुत्वात् तद्धीस्तथा नच्चा-

नौपाधिकत्वज्ञानं व्याप्तिज्ञाने हेतुरित्युक्तम् । तथापि व्यभिचारज्ञानद्वारा सद्दूषकः एवञ्च परमुपाधिरौपाधिकतयासिद्धसाधनस्य पृथक् नचैवमव्यभिचारस्य व्याप्तित्वे व्यभिचारवदभावत्वेनासिद्धिः स्यादिति वाच्यम् । साध्याभाववद्वृत्तित्वं हि व्यभिचारः तदभावश्च नाव्यभिचारः केवलान्वयिन्यभावात् । किन्तु व्यसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधिकरण्यं न चानयोः परस्परविरहत्वमिति ।

व्याप्तिग्रहश्च सामान्यलक्षणाप्रत्यासत्त्या सकलधूमादिविषयकः कथमन्यथा पर्वतीयधूमे व्याप्त्यग्रहे तस्मादनुमितिः सा चेन्द्रियसम्बद्धविशेषणतातिरिक्तैव वा तद्विशेष्यकप्रत्यक्षे तदिन्द्रियसन्निकर्षस्य हेतुत्वेनानागतादौ संयोगादेरभावादिति वदन्ति तदपरे न मन्यन्ते तथाहि धूमत्वावच्छिन्ना व्याप्तिः सन्निकृष्टधूमविषये धूमत्वेन प्रत्यक्षेण ज्ञायते तत्र जाता सा तृतीयलिङ्गपरामर्शे पक्षनिष्ठधूमवृत्तितया ज्ञायते ततोऽनुमितिः तदनभ्युपगमेऽपि सन्निकृष्टधूमविषये धूमत्वेन धूमो वह्निव्याप्य इत्यनुभवस्तथैव व्याप्तिस्मरणं ततो धूमवानयमिति व्याप्तिप्रकारेण धूमत्वेन पक्षवृत्तिधूमज्ञानादनुमितिः व्याप्त्यनुभवतत्स्मरणपक्षधर्मताज्ञानानामेकप्रकारकत्वेनानुमितिहेतुत्वात् । गवादिपदेष्वपि शक्त्यनुभवतत्स्मरणवाक्यार्थानुभवानामेकप्रकारकत्वेन हेतुहेतुमद्भावः प्रत्यपूर्वे वक्ष्यते तत्र योग्यतादिसत्त्वादपूर्वे-

व्यक्तिलाभोऽनुमाने तु पक्षधर्मताबलात् धूमो वह्निव्याप्य-इत्यनुभवो नतु सर्व्वो धूमो वह्निव्याप्य इति येन सर्वभानार्थं तत्स्वीकारः ।

अथ वह्निमानयमित्यनुमितिर्विशेषणज्ञानसाध्याविशिष्टज्ञानत्वादिति पर्वतीयवह्निभानार्थं तत्कल्पने धूमेऽपि तथा क्वचिद्धूमस्यापि व्यापकत्वादिति चेन्न विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्यावश्यकत्वेन हेतुत्वात् तच्च वृत्तमेव नतु विशेषणज्ञानमपि तथा गौरवात् गौरयमिति विशिष्टज्ञाने युगपद्विशेष्ये विशेषणे सन्निकर्ष एव कारणं नतु निर्विकल्पकं मानाभावात् विशिष्टज्ञानत्वमेव मानमिति चेन्न दृष्टान्ताभावात् दण्डी पुरुष इत्यत्र विशेषणधीजन्यत्वानभ्युपगमात् विशिष्टवैशिष्ट्यज्ञानत्वात् अपि च प्रमेयत्वेन व्याप्तिं परिच्छिन्दन् सर्वज्ञः स्यात् तथा च परकीयज्ञानविषये घटत्वं नवेति संशयो न स्यात् प्रमेयत्वेन तदन्यतरनिश्चयात् । प्रमेयत्वेन घटं जानात्येव घटत्वं तस्य न जानाति इति चेन्न तत् किं घटत्वं न प्रमेयं येन तन्न जानीयात् सकलघटवृत्तिधर्मस्य प्रमेयत्वेन तद्ज्ञानासम्भवात् ।

उच्यते यदि सामान्यलक्षणा नास्ति तदानुकूलतर्कादिकं विना धूमादौ व्यभिचारसंशयो न स्यात् प्रसिद्धधूमे वह्निसम्बन्धावगमात् कालान्तरीयदेशान्तरीयधूमस्य मानाभावेनाज्ञानात् सामान्येन तु सकलधूमोपस्थितौ धूमा-

न्तरे विशेषादर्शनेन संशयो युज्यते। यत्तु पाकादौ पि-लोर्वा गुणादौ इच्छा न स्यात् सिद्धे इच्छाविरहात् असिद्धस्याज्ञानात् तन्नात् उपस्थित्यादिना ज्ञातेषु सर्वेषु सिद्ध विशेषासिद्धे इच्छा भवतीत्यभ्युपेय तत्र असिद्ध-स्याज्ञानेऽपि सिद्धगोचरज्ञानादेव इच्छामशक्तिस्याभाव्यात् सिद्धे तयोरनुत्पत्तेः न व्याप्तिप्रसङ्गः समानप्रकारकत्वेन ज्ञानेच्छाशक्तीनां कार्यकारणभावात् न तु समानविषयत्वे-नापि कार्यकारणकल्पनात् समानविषयकत्वे सत्यपि समान प्रकारकज्ञानाभावेनेच्छाशक्त्योरभावात् तस्याप्रयोजकत्वेन गौरवाच्चेति परसिद्धान्तात्। अथ सर्वज्ञत्वे संशयो न स्यादिति चेत् 'घट' न इति घटत्वप्रकारकं हि ज्ञानं संश-यविरोधि तच्च न एक स्वसामग्रीविरहात् अतो घटत्वादि सकलविशेषज्ञानेऽपि न घटो न वेति संशयः इति।

उपाधिज्ञानाद्यभिचारज्ञाने सति न व्याप्तिनिश्चय-इत्युपाधिर्निरूप्यते।

तत्रोपाधि साध्यत्वाभिमतव्यापकत्वे सति साधनत्वा-भिमताव्यापकः धर्मोपाधिकत्वज्ञानञ्च न व्याप्तिज्ञाने हेतु-रतो व्यापकत्वादिज्ञानेनान्योऽन्याश्रय। यद्वा व्यापकत्व तद्धन्निष्ठात्यन्ताभावाप्रतियोगित्वं तत्प्रतियोगित्वञ्चाव्याप-कत्वं प्रतियोगित्वञ्च तदधिकरणानधिकरणत्वमिति वदन्ति तत्र साधनपक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्याप्ते अव तयोरनुपाधित्वं दूषकताबीजसाम्यात् मितातनयत्वेन

ष्यासत्वसाधने शाकपाकजत्वस्य प्रत्यक्षस्पर्शाश्रयत्वेन वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च शास्त्रे प्रयोजकत्वेनोपाधित्वस्वीकारान्नेति पक्षेतरोऽतिव्याप्तिश्च नच व्यतिरेके पर्वतेतरान्यत्वादित्यत्र इतरान्यत्वस्यासिद्धिवारणार्थं पर्वतपदं विशेषणमिति व्यतिरेके व्यर्थविशेषणत्वान्न स उपाधिः बाधोन्नीतस्याप्यनुपाधितापत्तेः न चेष्टापत्तिः इतरान्यत्वस्याप्रसिद्ध्या विशेषणं विना व्याप्यग्रहेण तत्सार्थकत्वात्। वस्तुगत्या साध्यव्यापकः पक्षेतर उपाधिरिति चेत् अस्तु तथा तथापि पक्षातिरिक्ते साध्यव्यापकताग्रहादुपाधेर्दूषकत्वं तच्च तत्राप्यस्ति अन्यथा पक्षे साध्यसन्देहादनुपाधित्वे उपाधिमात्रमुच्छिद्येत विपक्षाव्यावर्त्तकविशेषणशून्यत्वं विशेषणं तेन बाधोन्नीतपक्षेतरस्य परिग्रहः तत्र पक्षस्यैव विपक्षत्वात् नतु पर्वतेतरत्वादेरिति चेन्न नहि वस्तुविपक्षव्यावर्तकविशेषणशून्यं सर्वत्र प्रमेयत्वादेः सत्त्वात्तत्रोपात्तेति विशेषणे सिद्ध्यसिद्धिव्याघातः तथापि च साध्यव्यापकत्वसाधनाव्यापकत्वे तत्र स्त इति तद्व्यावृत्त्या पक्षे साध्यव्यावृत्तिरतो हेतोर्व्यभिचार एव व्यभिचारे चावश्यमुपाधिरिति पक्षेतरएव तत्रोपाधिः स्यात् तावन्मात्रस्यैव दूषकत्वाच्च व्यर्थं विशेषणम्। अतएवानुमानमात्रोच्छेदकतया जातित्वान्न पक्षेतरउपाधिरित्यपास्तं दूषणासमर्थत्वेन जातित्वाभावात् एतेन पक्षेतरव्यावृत्त्यर्थं प्रकारान्तरमपि निरस्तम् उपाधित्वाभावेऽपि दूषणसमर्थ-

स्यात् । पक्षोपाधि व्यतिरेकेण सत्प्रतिपक्षोत्थापकतया दूषणं पक्षेतरत्वव्यतिरेकस्य न साध्याभावसाधकोऽसाधारण्या-त् ननु व्यभिचारोन्नायकतया दूषणं यथा हि साध्यव्याप-कोपाधिव्याप्यतया हेतौ साध्याव्याप्यत्वं तथा साध्यव्याप्य-स्याव्यापकतयोपाधेर्न साध्यव्यापकत्वमपि सिध्येत् व्याप्ति-ग्राहकस्योभयत्रापि साम्येन विनिगमकविरहात् तथाच यथा साध्यव्याप्येन हेतुना साध्यं साधनीयं तथा साध्यव्यापको-पाधिव्यापकस्य साध्याभावोऽपि साधनीयो व्याप्तिपक्षतौल्या-दिति दूषकताबीजं सोऽयं सत्प्रतिपक्ष एवेति मैवं एवं हि सत्प्रतिपक्षउपाध्युद्भावनं न स्यात् सत्प्रतिपक्षान्तरवत् किञ्च बाधोन्नीतोऽपि पक्षेतरो नोपाधिः स्यात् व्यति-रेकेऽसाधारण्यात् । ननु बाधे नोपाधिनियमः धूमेन ह्रदे वह्निसाधने तदभावात् ननु हेतुमति पक्षे बाधे पक्षेतरो-पाधिनियमः प्रत्यक्षे वह्नौ रूपवत्त्वेनानुष्णत्वे साध्येऽतेज-स्त्वादेरुपाधित्वसम्भवादिति चेत् न तेजोमात्रपक्षत्वे-ऽतेजस्त्वं विनाऽन्यस्य उपाधेरभावात् किञ्च पर्वतावयववृत्त्य-न्यत्व पर्वतेतरद्रव्यस्य वह्निपर्वतसंयोगानाधारत्वं वह्निपर्वता-न्यत्वादिकमुपाधिः स्याद्व्यतिरेकेऽसाधारण्याभावात् व्य-तिरेकिणा सत्प्रतिपक्षसम्भवाच्च न चासाधारण्यं तस्यापि सत्प्रतिपक्षोत्थापकतया दोषत्वात् तस्मादुभयोरपि व्याप्ति-ग्राहकसाम्ये विरोधान्न व्याप्तिनिश्चयः किन्तूभयत्र व्यभि-चारसंशयः तथाच व्यभिचारसंशयाधायकत्वेनोपाधेर्दूषकत्व

तन्न पक्षेतरेऽप्यस्ति तदुक्तमुपाधेरेव व्यभिचारशङ्केति। भवतु वोक्तन्यायेन सकलानुमानभङ्गभिया पक्षेतरोऽनुपाधिः तथापि लक्षणमतिव्यापकम्। नापि साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वमुपाधित्वं दूषकतावीजस्य व्यभिचारोन्नयनस्य सत्प्रतिपक्षस्य वा साम्येन विषमव्याप्तस्याप्युपाधित्वात् तथा दूषकतायां साध्यव्याप्यत्वस्याप्रयोजकत्वाच्च। अथ साध्यप्रयोजको धर्म्म उपाधिः प्रयोजकत्वञ्च न न्यूनाधिकदेशवृत्तेः तस्मिन् सत्यभवतस्तेन विनापि भवतस्तदप्रयोजकत्वात् अन्यथा पक्षेतरस्याप्युपाधित्वप्रसङ्ग इति चेत् न दूषणौपयिकं हि प्रयोजकत्वमिह विवक्षितं तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमेवेति तदेव प्रयोजकं नत्वधिकं व्यर्थत्वात्। अथोपाधिः स उच्यते यद्धर्म्मोऽन्यत्र प्रतिविम्बते यथा जवाकुसुमं स्फटिकलौहित्य उपाधिः तथा चोपाधिवृत्तिव्याप्यत्वं हेतुत्वाभिमते चकास्ति तेनासावुपाधिः नच व्याप्यत्वमात्रेण दूषकत्वमिति साध्यव्यापकतापीष्यते तथाच समव्याप्त एवोपाधिरिति चेत् तत् किं विषमव्याप्तस्य दूषकतावीजाभावान्नोपाधिशब्दवाच्यत्वं तथात्वेऽप्युपाधिपदप्रवृत्तिनिमित्ताभावाद्वा नाद्यः तस्यापि व्यभिचाराद्युन्नायकत्वात् नापरः नहि लोके समव्याप्तएवान्यत्र स्वधर्म्मप्रतिविम्बजनकएवोपाधिपदप्रयोगः लाभाद्युपाधिना क्षतमित्यादौ लाभादावुपाधिपदप्रयोगात्। किञ्च न शास्त्रे लौकिकव्यवहारार्थमुपाधिव्युत्पादनं किन्त्वनुमान-

दूषणार्थं तथा साध्यव्यापकत्वे सति साधनाव्यापकत्वमात्र-
मिति शास्त्रे तदैवोपाधिपदप्रयोगः । यद्वा तु यदभावोव्य-
भिचारविरोधी स उपाधिः नच विपक्षवृत्तिस्याभावोव्यभि-
चार विरुणद्धि तस्याभावेऽपि व्यभिचारात् यथा अनि-
त्यव्यापक प्रमेयत्व तदाप्यस्य गुणस्य न चानित्यत्वगुणत्व
योर्व्याप्तिरपि समव्याप्तिकस्य च व्यतिरेक एव यदि सा-
ध्यव्यापकव्याप्यीभूतस्य व्याप्यवत्त्वात् साध्य व्यभिचरतिसाभि
चारे चान्तरा साध्यमेवोपाधिः अभेदेऽपि व्याप्यव्यापकत्वात्
साधनाव्यापकत्वादिति स्वीचकुमत्र तथापि व्यभिचारे
साध्यव्याप्यव्याप्यत्व तत्राभावव्यापकत्वासायधाश्च न साध्य
व्यापकव्याप्यमपि भवतैव व्यभिचारस्य दर्शितत्वात् नच
साध्यव्याप्यव्याप्यत्वमेवानौपाधिकत्व साध्यव्याप्यमित्यत्रापि
व्यानौपाधिकत्व तदेव वाच्य तथा चामवस्येति अनौपाधि-
कत्वे च व्याप्तिलक्षणे यावदिति पद साध्यव्यापके विशेषण
दत्तमेव किञ्च यस्मिन् सत्यनुमितिर्न भवति तदेव तत्र
दूषणं नतु यद्व्यतिरेके भवत्येवेत्येतद्गर्भं विरुद्धत्वादेरप्य-
दोषत्वापत्तेः नापि पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति
साधनाव्यापकत्वमुपाधिः साधनावच्छिन्नसाध्यव्यापकोपा-
ध्यव्यापनात् । शब्दोऽभिधेयः प्रमेयत्वादित्यत्राश्रावणत्वस्यो-
पाधित्वापत्तेश्च शब्दधर्मगुणत्वावच्छिन्नाभिधेयस्य यत्र
रूपादौ तत्राश्रावणत्वस्य व्यापक पक्षे प्रमेयत्वस्य साधनस्या-
व्यापक चेति तत् । आर्द्रेन्धनवत्त्वादावुपाधौ पक्षनियत

तादृशधर्म्माभावाच्च। अथ साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः तेन ध्वंसस्य जन्यत्वेन ध्वंसप्रतियोगित्वे साध्ये साधनावच्छिन्नसाध्यव्यापकं भावत्वमुपाधिः श्यामत्वे शाकपाकजत्वमुपाधिरिति तन्न पक्षधर्म्मावच्छिन्नसाध्यव्यापकोपाध्यव्यापनात् जलं प्रमेयं रसवत्त्वादित्यत्र रसवत्त्वावच्छिन्नसाध्यव्यापकपृथिवीत्वस्योपाधित्वप्रसङ्गात् सोपाधित्वादसाधकमित्यत्र साधनावच्छिन्नसाध्यव्यापकव्यभिचारित्वे साधनावच्छिन्नेत्यस्य व्यर्थत्वप्रसङ्गाच्च। किञ्च पक्षद्वयेऽपि विशिष्टसाध्यव्यभिचारं विशिष्टसाध्यव्यतिरेकं वा प्रसाध्य पश्चात् केवलसाध्यव्यभिचारः केवलसाध्यव्यतिरेको वा साधनीयस्तथा चार्थान्तरं केवलसाध्ये हि विवादो नतु विशिष्टे। अथ प्रकृतसाध्यव्यभिचारसिद्ध्यर्थं विशिष्टसाध्यव्यभिचारः साध्यइति चेन्न अप्राप्तकालत्वात् प्रथमं साध्यव्यभिचारएवोद्भाव्यस्तत्रासिद्धावुपाधिरिति चेत् तर्हि प्रकृतानुमाने नोपाधिर्दूषणं स्यात् किञ्च साध्यव्यभिचारहेतुत्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकव्यभिचारएवोपन्यसनीयोनोपाधिः। स्यादेतत्पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकउपाधिः पर्यवसितं साध्यं पक्षधर्मताबललभ्यं यथा शब्दोऽनित्यत्वातिरिक्तशब्दधर्म्मातिरिक्तधर्मवान् मेयत्वादित्यत्र पर्यवसितं यत्साध्यम् अनित्यत्वं तस्य व्यापकं कृतकत्वमुपाधिः यदि च तथैव कृतकत्वमपि शब्दे साध्यते तदा अनित्यत्वमुपाधिः

तदुक्तं पाक्षिकसाध्यनियमच्युतोऽपि कथमेवोपाधिरुद्भाव्य
पर्यवसितं निदर्शयन् दूषकताबीजमाम्नास्यादिति । अनेन
पक्षधर्मसाधनावच्छिन्नसाध्यव्यापकोपाधिः सङ्गृह्यते तादृश
साध्यस्य पर्यवसितत्वादिति तत्र एव हि द्व्यणुकस्य साव-
यवत्वे सिद्धे द्व्यणुकमनित्यद्रव्यासमवेतं अणुमहत्त्वानधिक-
रणद्रव्यत्वादित्यत्र निष्पर्शद्रव्यसमवेतत्वमुपाधिः स्यात्
भवति हि नित्यद्रव्यसमवेतत्वे पर्यवसितं साध्यं तस्य व्या-
पकं साधनाव्यापकञ्च किञ्च पक्षधर्मताबललभ्यसाध्यसिद्धौ
सिद्धस्य उपाधिः तदसिद्धौ च कस्य व्यापकः नहि सोपाधौ
पक्षधर्मताबलात् साध्यं सिध्यति यस्य व्यापकत्वमाधिः
स्यादिति । अत्रोच्यते यद्व्यभिचारित्वेन साधनस्य साध्य-
व्यभिचारित्वं स उपाधिः लक्षणन्तु पर्यवसितसाध्यव्याप-
कत्वे सति साधनाव्यापकत्वं यद्धर्मावच्छेदेन साध्यं प्रसिद्धं
तदवच्छिन्नं पर्यवसितं साध्यं स च धर्मः क्वचित् साधनमेव
क्वचिद्द्रव्यत्वादि क्वचित्पक्षधर्मत्वादि तथापि समव्याप्तस्य
विषमव्याप्तस्य वा साध्यव्यापकस्य व्यभिचारेण साधनस्य
साध्यव्यभिचारः स्फुटएव व्यापकव्यभिचारिणस्तद्व्याप्यव्य-
भिचारनियमात् साधनावच्छिन्नपक्षधर्मावच्छिन्नसाध्य-
व्यापकयोर्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वमेव
यथा ध्वंसस्यानित्यत्वे साध्ये भावत्वस्य वायोः प्रत्यक्षत्वे
साध्ये उद्भूतरूपवत्त्वस्य च विशेषणाव्यभिचारिणि साधने
विशिष्टव्यभिचारस्य विशेष्यव्यभिचारित्वनियमात् अतएव

नार्थान्तरं विशेषणाव्यभिचारित्वेन ज्ञाते साधने विशिष्ट-व्यभिचारः सिध्यन् विशेष्यसाध्यव्यभिचारमादायैव सिध्यति पक्षधर्म्मताबलात् अन्यथा प्रतीतेरपर्य्यवसानात् न च पक्षधर्म्मताबलात् प्रकृतसिद्धावर्थान्तरम्। यद्वा प्रत्यक्ष-स्पर्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारि द्रव्यत्वाव्यभिचारित्वे सति द्रव्यप्रत्यक्षत्वव्यापकव्यभिचारित्वान्महत्त्ववत् तथा मित्रा-तनयत्वं श्यामत्वव्यभिचारि मित्रातनयत्वाव्यभिचारित्वे सति श्याममित्रातनयत्वव्यापकव्यभिचारित्वात् अघटत्ववत् अव्यभिचारश्च तत्सामानाधिकरण्यात्यन्ताभावाप्रतियोगित्वं तच्चाभेदेऽपि। यद्वा यः साधनव्यभिचारी साध्यव्यभि-चारोन्नायकः स उपाधिः तत्त्वञ्च साक्षात् परम्परया वेति नार्थान्तरम्। किञ्च अर्थान्तरस्य पुरुषदोषत्वादाभासा-न्तरस्य तत्राभावादुपाधिरेव भावत्वादिकं दोषः नचैवं शब्दोऽभिधेयः प्रमेयत्वादित्यत्राश्रावणत्वं जलं प्रमेयं रस-वत्त्वादित्यत्र पृथिवीत्वमुपाधिः स्यात् केवलान्वयित्वसाधक-प्रमाणेन तत्र साध्यसिद्धेरुपाधेर्विशिष्टाव्यापकत्वात् न च पक्षेतरे स्वव्याघातकत्वेनानुपाधावतिव्याप्तिः तत्रानुकूल-तर्काभावेन साध्यव्यापकत्वानिश्चयात् सहचारदर्शनादेस्तेन विना संशायकत्वादित्युक्तं बाधोन्नीते चानुकूलतर्कोऽस्त्ये-वेति एवं पर्व्वतावयववृत्त्यन्यत्वादेरपि नोपाधित्वं पक्षमात्र व्यावर्त्तकविशेषणवत्त्वात् अतएव धूमे आर्द्रेन्धनप्रभववह्नि-मत्त्वं द्रव्यवह्निरिन्द्रियप्रत्यक्षत्वे उद्भूतरूपवत्त्वं मित्रातन-

उद्भावने शाकपाकजत्वं जन्यानित्यत्वे भावत्वमुपाधि तदुत्कर्षेण साध्योत्कर्षात् समव्याप्तिहान्वयव्यतिरेकतो ग्रहात् कारणतावगमेन घटोत्पत्त्यसद्भेन साध्यव्यापकतानिर्णयात् तत् किं कार्यकारणयोरेव व्याप्तिः तथा च बहुधा व्याकुलीस्यादिति चेन्न तदुपजीव्यान्वयादेरप्यनुकूल तर्केण व्याप्तिग्रहात् यत्र साध्योपाध्योर्हेतुसाध्ययोर्वा व्याप्ति ग्राहकसाम्यान्नैकत्र व्याप्तिनिश्चयमात्र सन्दिग्धोपाधित्व व्यभिचारसंशयोपधायकत्वात् यदा च साहचर्यमेकत्रानुकूलतर्कावतारस्तदा हेतुत्वमुपाधित्वं वा निश्चितं पक्षेतरस्य व्यापकत्वेन न हेतुव्यभिचारसंशायकत्वमतो न सन्दिग्धोपाधिरपि सः । ननु पक्षेतरस्य यथा साध्यव्यापकत्वं तथा साध्याभावव्यापकत्वमपि ग्राहकसाम्यात् तथा चोभयव्यापकनिरूपणया साध्यतदभावाभ्यां पक्षे निवर्तितव्यम् न चैव । तथा च पक्षेतरः साध्यव्यापकतासंशयेन सन्दिग्ध कथं परं दूषयेदिति मैवं तथापि हि साध्यव्यापकता पक्षमात्रस्य हेतुव्यभिचारसंशयाधायकत्वेन दूषणं स्यादेव । ननु यत्रोपाधिसाध्ययोरनुकूलतर्कोयदि नास्ति तदा तदभावेनैव व्याप्तेरग्रहः अथास्ति तदा साध्याव्यापकत्वेनोपाधिः साध्याव्यापकत्वनिश्चयान्नोपाधिरित्युभयथापि नोपाधिर्दूषणं न च व्याप्यभावव्याप्यमुभयमतउपाधिरपि तदभावोन्नयनेन दोषइति वाच्य उपाधेराभासाभावेऽप्यनुकूलतर्काभावोपनीतकत्वेन तस्यैव दोषत्वादिति चेन्न सोपा-

थावेकत्र साध्यतदभावसम्बन्धस्य विरुद्धत्वादवच्छेदभेदेन तदुभयसम्बन्धो वाच्यः तथाच साधने साध्यसम्बन्धितावच्छेदकरूपमनुकूलतर्कभावोपजीवनमन्तरेणोपाधिरावश्यकस्तथानुकूलतर्काभावोऽप्यावश्यकइति उभयोरपि विनिगमकाभावाद्दूषकत्वम्। अन्ये तु यद्व्यावृत्त्या यस्य साधनस्य साध्यं निवर्त्तते न धर्म्मस्तत्र हेतावुपाधिः सच धर्म्मोयस्याभावात् पक्षे साध्यसाधनसम्बन्धाभावः यथा आर्द्रेन्धनवत्त्वं व्यावर्त्तते हि तद्व्यावृत्त्या धूमवत्त्वमयोगोलके अतएव तत्र साध्यसाधनसम्बन्धाभावः पक्षे एवं भावत्वव्यावृत्त्या ध्वंसे जन्यत्वानित्यत्वयोः सम्बन्धोनिवर्त्तमानः पक्षधर्म्मतावलादनित्यत्वाभावमादाय सिध्यति तथा वायावुद्भूतरूपवत्त्वं निवर्त्तमानं वह्निर्द्रव्यत्वे सति प्रत्यक्षत्वं निवर्त्तयत् प्रत्यक्षत्वाभावमादाय सिध्यति तथा चोभयत्रापि पक्षे साध्याभावसिद्धा साध्यसाधनसम्बन्धाभावोऽस्तीति अतएव बाधाद्युन्नीतपक्षेतरस्यानुपाधित्वं स्वव्याघातकत्वेन तद्व्यतिरेकस्य साध्याव्यावर्त्तकत्वादिति। यत्तूपाधिमात्रस्य लक्षणं व्यतिरेकिधर्म्मत्वं पक्षेतरोऽपि क्वचिदुपाधिः तत्तदुपाधेस्तु तत्तत्साध्यव्यापकत्वे सति तत्तत्साधनाव्यापकत्वं नच धूमवह्निसम्बन्धोपाधिः पक्षेतरत्वं स्यादिति वाच्यम् आपाद्याप्रसिद्धेरिति तन्न अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमुपाधित्वमिह निरूप्यं तच्च न व्यतिरेकित्वमतिप्रसङ्गात् विशेषलक्षणे वह्निधूमसम्बन्धे पक्षेतरत्वस्योपाधित्वप्रस-

ङ्गाच्च। केचित्तु साधनव्यापकोऽप्युपाधिः क्वचिदत्र पक्षा-
दन्यत्रैव यथा करका पृथिवी कठिनसंयोगात् इत्यत्रानु-
ष्णाशीतस्पर्शवत्त्वं न च तत्र स्वरूपासिद्धिरेव दोषः सर्व-
त्रोपाधेर्दूषणान्तरसङ्करादित्याहुः । साध्यस्य नोपाधि-
र्व्यभिचारसाधने साध्याविशिष्टत्वात् अनुमितिमात्रोच्छेद-
प्रसङ्गाच्च । स चायं द्विविधः निश्चितः सन्दिग्धश्च साध्य-
व्यापकत्वेन साधनाव्यापकत्वेन च निश्चितोव्यभिचारनि-
श्चयाधायकत्वेन निश्चितोपाधिः यथा वह्निमत्त्वेन धूमवत्त्वे
साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वं यत्र साधनाव्यापकत्वस-
न्देहः साध्यव्यापकत्वसंशयोवा तदुभयसन्देहो वा तत्र हेतु-
व्यभिचारसंशायकत्वेन सन्दिग्धोपाधिः यथा मित्रातनय-
त्वेन श्यामत्वे साध्ये शाकाद्याहारपरिणतिजत्वं न च
तेनैव हेतुना शाकपाकजत्वमपि साध्यं तत्र श्यामत्वस्यो-
पाधित्वादुभयस्यापि साधने पर्यायेण व्याप्तत्वमात्रे विवा-
दो नत्वभयत्र नचैवं धूमाद्वह्न्यनुमानेऽपि वह्निसामग्र्युपा-
धिः स्यात् तत्र वह्निनेव तत्सामग्र्यापि सम धूमस्यानौपा-
धिकत्वनिश्चयात् अत्र तु मित्रातनयत्वश्याप्यश्यामसा-
मग्र्या व्याप्यमित्यत्र कार्यकारणभावादीनां व्याप्तिग्राह-
काणामभावात् अतएव साध्यसामग्र्या सह हेतोरपि
यत्र व्याप्तिग्राहकमस्ति तत्र सामग्री नोपाधिः यत्र तु
तन्नास्ति तत्र साप्युपाधिरित्यभिसन्धाय सामग्री च क्वचि-
न्नोपाधिर्नतु सर्वत्र इत्युक्तं यथा तुल्ययोगक्षेमयोरुपाधे-

व्यापकतासन्देहे ईश्वरानुमाने शरीरजन्यत्वागुत्वादिः यथा च शाकपाकजत्वस्य साध्यव्यापकतासन्देहे मित्रातनयत्वे। यत्तु उपाधिसन्देहो नोपाधिर्न वा हेत्वाभासान्तरमिति तदुद्भावने निरनुयोज्यानुयोगइति तन्न सन्दिग्धानैकान्तिकवद्व्यभिचारसंशयाधायकत्वेन दूषणत्वादुपाधेरिव व्यभिचारनिश्चयाधायकतया।

इदानीमुपाधेर्दूषकताबीजं निरूप्यते।

नाप्यस्य व्यतिरेकद्वारा सत्प्रतिपक्षत्वेन दूषकत्वं तदा हि सत्प्रतिपक्षे सत्प्रतिपक्षान्तरवदुपाधेरुद्भावनं न स्यात् न च प्रतिपक्षबाहुल्ये नाधिकबलार्थमुद्भावनं शतमप्यन्धानां न पश्यतीति न्यायात् एकेनापि बहूनां प्रतिबन्धाच्च व्याप्तिपक्षधर्म्मतेति बलं तच्च तुल्यमेव नतु भूयस्त्वमपि एकस्मादनुमितिदर्शनात् सन्दिग्धोपाधेरदूषकतापाताच्च तद्व्यतिरेकस्य पक्षे सन्दिग्धत्वात्। अपि चैवं बाधोन्नीतपक्षेतरस्योपाधित्वं न स्यात् व्यतिरेकेऽसाधारण्यात् पक्षधर्मस्योपाधिर्न स्यात् यथा घटोऽनित्यो द्रव्यत्वादित्यत्र कार्य्यत्वं अन्धकारो द्रव्यं स्वातन्त्र्येण प्रतीयमानत्वादित्यत्राश्रावणत्वं तद्व्यतिरेकस्य पक्षावृत्तित्वात् न च नायमुपाधिः तल्लक्षणसत्त्वात् अन्यथा दूषकत्वसम्भवाच्च। किञ्च साध्यव्यापकव्याप्यत्वेनोपाधेः साध्याव्यापकत्वे तद्व्यतिरेकेण कथं सत्प्रतिपक्ष नह्यव्यापकव्यतिरेकादव्याप्यव्यतिरेकः नापि व्याप्तिविरहरूपतया असिद्धत्वेनानौपाधिकत्वस्य व्याप्तित्वनिरासात्।

साध्यनोपाधित्वज्ञानस्य व्याप्तिधीहेतुत्वस्य तत्त्वेन व्याप्तिज्ञानकारणविघटकतया व्याप्यत्वासिद्धावन्तर्भाव । नन्वन्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यव्याप्तिज्ञानं प्रति प्रतिबन्धकमित्युक्तम् । न च साध्यव्यापकत्वसाध्यव्याप्यत्वज्ञाने विद्यमाने साधनस्य साध्यव्यापकज्ञानं नोत्पत्तुमर्हतीति वाच्यं नहि साध्यव्यापकव्याप्यत्वज्ञानं व्याप्तिज्ञानकारणं येन तत्प्रतिबन्धकं स्यात् किन्तु साध्यव्यापकव्यभिचारित्वेन साध्यव्यभिचारित्वज्ञानद्वारा नापि व्यभिचारोन्नायकत्वेन यथाहि साध्यव्यापकव्यभिचारितया साधनस्य साध्यव्यभिचारित्वमनुमेयं तथा साध्यव्याप्यव्यभिचारित्वेन साध्यव्यभिचारित्वमुपाधेरप्यनुमेयं व्याप्तिग्राहकत्वाभावात् नापि साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया साध्यव्याप्याव्यापकत्वेनोपाधेरेव साध्याव्यापकत्वसाधनात् तस्मादुपाधिर्हेत्वाभासान्तरमिति ।

उच्यते आर्द्रेन्धनवत्त्वादेस्तर्कादिना साध्यव्यापकत्वसाधने व्यापकत्वे निश्चिते दूषकताबीजचिन्तनं यदि हि साध्यसाधनसहचारदर्शनेनोपाधौ साध्यव्यापकतानिश्चयएव नास्ति तदोपाधित्वनिश्चयाभावात् दूषकतैव नास्तीति क्व वह्निभावान्तर्भावचिन्ता । किञ्च सत्प्रतिपक्षतया व्याप्यत्वासिद्धतया स्यात्तन्त्रेण वा यदि सोपाधिसर्वथा साध्यव्यापकतानिश्चयोवाच्य तेन विना तेषामभावात् । तस्मादुपाधिनिश्चयाद्व्यभिचारनिश्चय तत्संशयाभत्संशयइति व्यभि-

चारज्ञानद्वारा साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्ना-
यकतया वोपाधेर्दूषकत्वम्। यद्वा साध्यव्यापकाभाववद्‌-
वृत्तितया साध्यव्यभिचारित्वमुन्नेयं न च साधनाभाववद्‌-
वृत्तित्वमुपाधिरिति वाच्यम् उपाधिमात्रोच्छेदप्रसङ्गात्
सत्प्रतिपक्षे पूर्व्वसाधनव्यतिरेकवत् अवृत्तिगगनादौ साध्या-
व्यापकत्वात् संयोगादौ हेतौ साधनव्यापकत्वाच्च।

अथोपाध्याभासाः। असाधारणविपर्य्ययो यथान्वय-
व्यतिरेकिणि साध्ये बाधोन्नीतान्यपक्षेतरत्वम्। अप्रसिद्ध-
साध्यविपर्य्ययो यथा केवलान्वयिनि साध्ये पक्षेतरत्वादिः।
बाधितसाध्यकविपर्य्ययो यथा वह्निरनुष्णस्तेजस्त्वादित्यत्राकृत-
कत्वम्। पक्षाविपर्य्ययो यथा क्षित्यादिकं सकर्तृकं कार्य्यत्वा-
दित्यत्राणुव्यतिरिक्तत्वम् अत्राणुव्यतिरेकव्यतिरेकस्य क्षि-
त्यादेरेकदेशवृत्त्या भागासिद्धेः। पूर्व्वसाधनव्यतिरेकोयथा
शर्करारसोऽनित्योऽनित्यवृत्तिगुणत्वात् रसोनित्यो रसने-
न्द्रियजन्यनिर्व्विकल्पकविषयत्वात् रसत्ववदित्यादौ पूर्वसाध-
मतायाः प्रयोगानुरोधित्वेनाव्यवस्थितत्वात् कदाचिन्नित्य-
त्वसाधनव्यरिरेकस्योपाधित्वं कदाचिदनित्यत्वसाधनव्यति-
रेकित्वस्येति वस्तुव्यवस्था न स्यात् उपाधेर्नित्यदोषत्वाच्च।
नहि यद्येन सोपाधिसम्बद्धं तत्तेनानुपाधित्वसम्बद्धं सम्भवति
ननु सत्प्रतिपक्षोच्छेदः पूर्व्वसाधनव्यतिरेकस्यानुपाधित्वे
वीजं स्थापनाया यत्राभासत्वं तत्र पूर्वसाधनव्यतिरेकस्य
साध्याव्यापकत्वेनानुपाधित्वात् न च पूर्वहेतोस्ततएवासाध-

कत्वात् सत्प्रतिपक्षवैयर्थ्यं स्यादिति वाच्यम् अन्यप्रमाणविरोध-दशायां सत्प्रतिपक्षसम्भवात् । पूर्वसाधनव्याप्यव्यतिरेको यथा अकर्तृकत्वानुमाने नित्यत्वादि । पक्षविपक्षान्यतरान्यो यथा प्रसिद्धानुमाने पर्वतजलह्रदान्यतरान्यत्वम् । पक्षेतर-साध्याभावो यथा तत्रैव पर्वतेतराग्निमत्त्वं तथात्र व्यर्थविशे-षणत्वं दूषणं सर्वेषूपाधेराभासत्वात् । तत्तुल्यत्वं यथा-त्रैव पर्वतेतरेन्धनवत्त्वम् । एवं वह्निसामग्र्यादिकमूह्यम् ।

व्याप्त्यनन्तरं पक्षधर्मता निरूप्यते ।

तत्र न तावत् सन्दिग्धसाध्यधर्मत्वं पक्षत्वम् सन्देहो-ऽपि न विशेषणपरामर्शपूर्वं लिङ्गदर्शनव्याप्तिस्मरणादिना तस्य नाशात् नोपलक्षणम् अव्यावर्त्तकतापत्तेः नापि साधकबाधकप्रमाणाभावः उभयाभावस्य प्रत्येकसत्त्वेऽपि सत्त्वात् नाप्यभावद्वयं तथा बाधकप्रमाणाभावस्य व्यर्थत्वात् घटादेः पक्षत्वेऽपि बाधकस्य सिद्धादेरावश्यकत्वेनानुमि-त्यनुत्पादात् नापि साधकप्रमाणाभावः श्रोतव्यो मन्तव्य इति श्रुत्या समानविषयकश्रवणानन्तरं मननबोधनात् प्रत्य-क्षदृष्टेऽप्यनुमानदर्शनात् एकलिङ्गावगतेऽपि लिङ्गान्तरेण तदनुमानाच्च मन्तव्यश्चोपपत्तिभिरिति स्मरणात् । अथ सिषाधयिषितसाध्यधर्मा धर्मी पक्षः तथापि मुमुक्षोः शब्दादात्मावगमेऽपि मननस्य मोक्षोपायत्वेन सिद्धविषये-ऽप्यनुमितीच्छयात्मानुमानम् अत एव प्रत्यक्षपरिकलितम-प्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः नहि करिणि दृष्टे

चोत्कारेण तमनुमिमतेऽनुमातार इति वाचस्पतिवचन योरविरोधः अनुमित्सातद्विरहाभ्यां तदुपपत्तेरिति मैवन्न सन्देहवत्परामर्शपूर्वं सिषाधयिषाया अप्यभावात् योग्यतायाश्चानिरूपणात् सिषाधयिषाविरहेऽपि घनगर्ज्जितेन मेघानुमानात् स्वकारणाधीनतृतीयलिङ्गपरामर्शवलेनानपेक्षितानुमानदर्शनाच्चेति। उच्यते सिषाधयिषाविरहसहकृतसाधकप्रमाणाभावो यत्रास्ति स पक्षः तेन सिषाधयिषाविरहसहकृत साधकप्रमाणं यत्रास्ति स न पक्षः यत्र साधकप्रमाणे सत्यसति वा सिषाधयिषा यत्र वोभयाभावस्तत्र विशिष्टाभावात् पक्षत्वं यद्यपि पक्षत्वस्य केवलान्वयित्वात् नास्य भेदकत्वं तथापि पक्षपदप्रवृत्तिनिमित्तमुक्तम्।

पक्षधर्मस्य व्याप्तिविशिष्टज्ञानमनुमितिहेतुः। ननु व्याप्यत्वावच्छेदकप्रकारेण व्याप्तिस्मरणं पक्षधर्म्मताज्ञानं तथा लाघवात् परामर्शहेतुत्वेनावश्यकत्वाच्च एवञ्च धूमो वह्निव्याप्यो धूमवांश्चायमिति ज्ञानद्वयादेवानुमितिरस्तु। न चानुमितिं प्रति व्याप्यत्वज्ञानमेव हेतुर्लाघवात् उपजीव्यत्वाच्चेति वाच्यं तस्यानुमितेः पूर्वमसिद्धौ युगपदुपस्थित्यभावात्। अथ यथा तत्ताविशिष्टस्मरणे सतीन्द्रियसन्निकृष्टे स एवायमित्यभेदप्रत्ययो भवति तथेन्द्रियसन्निकृष्टे धूमे वह्निव्याप्यधूमस्मरणे धूमत्वासाधारणधर्मदर्शनाद्व्याप्योऽयमित्यभेदप्रत्ययः स्यात् सामग्र्याः सत्त्वादिति स एवानुमितिहेतुरिति चेत् न प्रत्यक्षसामग्रीतोऽनुमिति-

सामग्र्या बलवत्त्वात् अनुमितिरेवोत्पद्यते न तु व्याप्याभेदप्रत्यय अन्यथा तथापि परामर्शानन्तरं परामर्शान्तरम् तदनुव्यवसायो वा भवेन्नत्वनुमितिः । अथ धूमो वह्निव्याप्य इति स्मरणे पर्वतीयधूमेन्द्रियसन्निकर्षे प्रथमत एव व्याप्तिधूमत्वयोर्विशिष्य यत्र भासते विशेषणज्ञानस्य पूर्वं वृत्तत्वात् तत्र यत्र चावश्यमाद्वह्निव्याप्यवानयमिति ज्ञानं तत्रोभयत्रापि लाघवात् पक्षधर्मव्याप्यत्वज्ञानस्य हेतुत्वकल्पनादन्यत्रापि तथेति चेत् न इन्द्रियासन्निकृष्टेऽतीन्द्रिये च लिङ्गे प्रत्यक्षविशिष्टज्ञानसामग्रीविरहात्तेन विनानुमित्यनुत्पादापत्तेः । अथ स्मृतसामग्र्याश्च तथापि सत्त्वात् न चानुमानात् तत्र परामर्शोऽनवस्थानात् अथ यथा स देवदत्तो गौरो न वा परमाणुरूपाधिकरणं न वेति संशयो बहिरस्वतन्त्रेणापि मनसा कोटिस्मरणविशेषादर्शनादिसहकारिवशाज्जन्यते यथा वा निद्रासहकारेण बाह्यस्वप्नानुभवः तथेहापि ज्ञानान्तरोपनीतविशेष्ये व्याप्तिस्मरणसहकृतेन मनसा परामर्शो जन्यते तदनन्तरमनुमितिदर्शनादिति चेत् न व्याप्तिस्मरणादेः प्रमाणान्तरतापत्तेः तदेव हि प्रमाणान्तरं यदसाधारणं सहकारि समासाद्य मनो बहिर्गोचरां प्रमां जनयति यथेन्द्रियादि संशयस्वप्नौ तु न प्रमे इति न निद्रादेः प्रमाणान्तरत्वम् । नच तथापि कथं स धूमो वह्निव्याप्य इति व्यवहारः तदाभौ तद्व्याप्यत्वानुभावकाभावादिति वाच्यं तत्र स्मृतधूमे धूमत्वेन वह्नि-

व्याप्यवानुमानात् न च तन्मते धूमत्वेन व्याप्त्यनुभवः सम्भवति अतएव योवह्निव्याप्यवान् सोऽवश्यं वह्निमान् इति व्याप्तिज्ञानवतोऽनुमितिर्नान्यथा। अथ पर्वतीयधूमे धूमत्वेन ज्ञाते वह्निव्याप्योऽयं न वेति संशयेऽप्यनुमितिः स्यादिति चेन्न धूमो वह्निव्याप्यइति स्मरणे विद्यमाने धूमत्वज्ञानस्य विशेषदर्शनत्वेन संशयाभावात् अन्यथा परामर्शोऽपि कुतो न स्यात् संशयेन प्रतिबन्धादिति चेत्तुल्यं न च सामान्यनिश्चयस्य सामान्यसंशयनिवर्तकत्वाद्धूमसामान्ये एव संशयो माभूत् विशेषसंशयस्य विशेषनिश्चयनिवर्तनीय इति धूमविशेषे संशयनिरासार्थं पृथग्व्याप्तिनिश्चयो वाच्य इति वाच्यं यत्र हि यद्व्यावर्तकधर्मदर्शनं तत्र न तत्संशयः तच्च सामान्ये विशेषे वेति। वस्तुतस्तु धूमत्वपुरस्कारेण व्याप्तिस्मरणे पक्षधर्मताज्ञाने चानुमितिर्भवत्येव। ननु भावोऽभावो वा उभयथापि प्रमेयमित्यत्र भावत्वाभावत्वयोर्व्याप्यत्वावच्छेदकयोरग्रहादनुमानं न स्यात् तदन्यान्यत्वरूपस्यान्यतरत्वस्य लिङ्गत्वाभावादिति चेत् न भावत्वाभावत्वान्यान्यधर्मवत्त्वस्य तत्र लिङ्गत्वात् एवं धूमालोकान्यतरत्वमपि लिङ्गम्। अथ यद्व्यतिरेकज्ञानं यदुत्पत्तिप्रतिबन्धकं तत्तन्निश्चयसाध्यं यथा च पक्षधर्मस्य व्याप्यभेदज्ञानमनुमितिप्रतिबन्धकम् अतो व्याप्याभेदज्ञानं तद्धेतुः सिध्यतीति चेन्न धूमत्वपुरस्कारेण व्याप्तिस्मरणे पक्षधर्मताज्ञाने च सति

विशेषदर्शनमात्रं भ्रमे व्याप्यभेदज्ञानं किन्तु अनुमितेरेवो-त्पत्ति तत्कालमधीनत्वात् अतो व्याप्यभेदज्ञानं नानुमिति-प्रतिबन्धकं येन व्याप्याभेदज्ञानं तद्धेतुः स्यात न च धमस्य प्रकारेण व्याप्तिग्रहपक्षधर्मताग्रहे इव धूमव्यक्तिपञ्चि व्याप्या नेति भ्राम्यतोऽनुमित्यापत्तिरतोविशिष्टज्ञानं हेतुरिति वाच्यं धूमस्यम् विशेषस्य दर्शनेन तादृगभ्रमा-नुत्पत्तः तत्रानुमितिसामग्र्याद्वेव अन्यथा निश्चयसामग्र्यां सत्यां भ्रमानन्तरं परामर्शएव कुतो न भवति वस्तु वा व्याप्यतया पक्षधर्मतया चावगतस्य भेदाग्रहएवानुमिति हेतुः परामर्शहेतुतया तस्यावश्यकत्वात् अतएवासन्नि-कृष्टधूमज्ञानादप्यनुमितिः। न चैव गौरवं तदा विशिष्ट-ज्ञानानुपस्थितेः। न च जनकज्ञानाविरोधिनोज्ञानस्या-प्रतिबन्धकत्वात् भेदग्रहो न प्रतिबन्धक इति वाच्यम् अभेद-ज्ञानस्याजनकत्वात् तथापि लिङ्गपरामर्शे तादृशस्य प्रति-बन्धकत्वस्वीकाराच्च। अथ गोत्वं मधुरत्वाद्यन्तरजाति र्वा लिङ्गं न स्यात् तद्गतधर्मान्तरस्याभावात् अतएव तस्य विप्रलम्भत्वात् इति चेन्न अनेनैव तस्य प्रकारत्वात् नहि गौर्गोत्वमिति ज्ञानयोरविशेषः अन्यथा गोत्वमिति ज्ञानस्य निर्विकल्पकत्वापत्त्या व्याप्यत्वग्रहे परामर्शे चानु-पयोगात् गवेतरावृत्तित्वे सति सकलगोवृत्तित्वं गोत्वत्व-मित्युभयपक्षे न चैवमनवस्था तदितरावृत्तित्वे सति तद्-वृत्तित्वस्याभयेनापक्षापासम्भवात्।

अत्रोच्यते अयमालोको धूमो वा उभयथापि वह्नि-व्याप्यइति ज्ञानं ततोऽनुमितिः न च धूमत्वेनालोकत्वेन वा तत्र निश्चयः। अथ तदन्यान्यत्वमेव तत्र लिङ्गं न च तद्-ज्ञानदशायामनुमितिदर्शनात् न तथेति वाच्यं धूमालोका-न्यान्यत्वज्ञानं विना तत्रापि तत्र व्याप्यत्वानिश्चयेन तदर्थं तद्बोधावश्यकत्वादिति चेन्न नहि धूमालोकान्यान्यत्वं धूमा-न्यान्यत्वं वा व्याप्यतावच्छेदकं गौरवात् व्यभिचारावारक-विशेषणवत्त्वाच्च किन्तु धूमत्वादिकं तच्च तत्र सन्दिग्ध-मेव। ननु तदन्यान्यद्वह्निव्याप्यमेव व्यभिचाराभावेन व्याप्तिविरहसाधनस्य वाधितत्वात् पुरुषस्तु तत्र नीलधूम-वत्त्वादित्यत्रेवाधिकेन निगृह्यते न तु व्याप्यत्वासिद्ध्येति चेन्न तदन्यान्यद्धूमालोकस्वरूपमेव तच्च व्याप्यमिति सत्यं न च वस्तुगत्या व्याप्यज्ञानादनुमितिः अतिप्रसङ्गात् किन्तु व्याप्यतावच्छेदकप्रकारकज्ञानात् न च तदन्यान्यत्वं वह्नि-व्याप्यतावच्छेदकमित्युक्तम्। न चैवं तदन्यान्यत्वाद्वह्नि-व्याप्यत्वमपि तत्र नानुमेयं व्यर्थविशेषणत्वादिति वाच्यं प्रत्यक्षं हि तदन्यान्यत्वविशेषदर्शनाद्व्याप्यत्वज्ञानं जनयति विशेषणज्ञानविशेषणविशेष्यसम्बन्धविशेषणविशेष्येन्द्रियस-न्निकर्षतदसंसर्गाग्रहविशेषदर्शनानां सत्त्वेन वह्निव्याप्य-त्वप्रत्यक्षसत्त्वात् न चैवं न प्रत्यक्षेऽपि तदन्यान्यत्वज्ञानं सहकारीति वाच्यम् अन्वयव्यतिरेकाभ्यां गुरोरपि तस्य विशेषदर्शनत्वेन प्रत्यक्षसहकारित्वात् तस्मात्तदन्यान्यत्व-

ज्ञानं तत्र व्याप्यताज्ञानोपक्षीणं नतु साक्षादनुमितिहेतु-
रिति किन्तु वह्निव्याप्यवानयमिति गाढज्ञाने व्याप्यत्वज्ञानं
कारणमित्यन्यत्रापि तथा। अथ वह्निव्याप्यत्वमपि वह्नि-
व्याप्यतावच्छेदकं तथाहि वह्निनिरूपिता धूमादिप्रत्येक-
वृत्तिरेव व्याप्तिर्व्याप्तित्वेन सकलधूमादिवृत्तिव्याप्त्यवच्छे-
दिका व्याप्यभेदेनावच्छेदकभेदेन च व्याप्तिभेदादिति चेन्न
सकलधूमादिवृत्तिव्याप्तौ मानाभावात् यत्र वह्निव्याप्यस्तत्र
वह्निरिति व्याप्तिबुद्धौ वह्निव्याप्यत्वबुद्धौ च प्रत्येकवृत्ति-
व्याप्त्यन्वयस्यैव विषयत्वात् प्रत्येकवृत्तिव्याप्तिज्ञानं विना
तद्बोधाभावात्। अपि च यत्र धूमत्वव्याप्त्योर्वैशिष्ट्यं प्रथम-
मेव प्रत्यक्षेण युगपत्तद्धर्मो भासते तत्र लाघवात् व्याप्य-
त्वज्ञानस्यैव कारणतावच्छेदकं न चैवमतिरिक्तविशिष्टज्ञा-
नकारणत्वे गौरवं दोषाय सप्रमाणकत्वात् कारणताग्रह-
दशायां फलमुखगौरवस्य सिद्ध्यसिद्धिभ्यामदोषत्वात् न चा-
सन्निकृष्टे धूमे तदभाव अयमनुमितिहेतुव्याप्तिस्मरण-
धूमत्वज्ञानसहितेन मनसा तदुत्पादनात् यथा परमाणुर्निर-
वयवद्रव्यं नित्यपरिमाणवत्त्वात् आकाशवदित्यादौ प्रत्येका-
नुमानोपनीतातीन्द्रियसाध्यसाधनयोराकाशवृत्तितया स्म-
रणे व्यभिचाराज्ञाने मनसा व्याप्त्यनुभवः। अनुमानयो
प्रत्येकतदुभयसहचाराविषयत्वेन व्याप्तिग्राहकत्वात् न चाती-
न्द्रियव्याप्यस्यातीन्द्रियेऽनुमेये तत्रापि व्याप्तिग्राहकाभावात्
अथ तदुपनयसहितस्य मनसो बहिरर्थप्रमाहेतुत्वे उपनयस्य

प्रमाणान्तरत्वम् इन्द्रियादेः सन्निकर्षवदुपनयस्य नियत-व्यापाराभावेन प्रमायामकरणत्वात् सहकारिता च तद-भावेऽपि भवति वह्निरिन्द्रियलिङ्गसादृश्यादिव्यापारं विना-पि चिन्तोपनीतपदार्थानां बाधकानवतारे मनसा संस-र्गानुभवस्य सकलजनसिद्धात् वायसन्यया कविकाव्यादिक-मिति। स्यादेतत् पक्षधर्मस्य व्याप्यताज्ञानं नेन्द्रियेण वह्नेरसन्निकर्षे तन्नियतसामानाधिकरण्यस्य व्याप्यत्वस्या-योग्यत्वात्। न च धूमत्वेन सकलधूमव्याप्यतावगमात् धूम-विशेषे संस्कारात् स्मरणाद्वोपनीतव्याप्याभेदग्रहः प्रत्यभि-ज्ञाने तत्ताविशिष्टस्येवेति वाच्यम् एवं हि धूमवत्त्वेन वह्नि-मत्त्वज्ञानात् धूमवद्विशेषे पर्व्वते संस्कारवशात् प्रत्यक्षेण व्याप्तिज्ञानापेक्षेण वह्निमद्भेदग्रहोवह्निमत्त्वसंसर्गग्रहो वास्तु किमनुमानेन पृथक् वह्निमत्त्वस्मरणं तत्र नास्ति किन्तु व्याप्यवच्छेदकतयेति चेन्न वह्निमान्न वेति संशया-नुरोधेन स्वतन्त्रवह्निमत्त्वस्मरणात्। न च विशिष्टज्ञाने स्वतन्त्रविशेषणज्ञानत्वेन हेतुत्वं गौरवात्। अथ योयत्र विशिष्य पूर्व्वमवगतः स तत्र संस्कारवशाद्यथार्थप्रत्यक्षे भासते यथा तत्ताप्रत्यभिज्ञाने न च पर्व्वते विशिष्य पुरा वह्निरवगतः यत्र चन्दने सौरभमुपलब्धं तत्र संस्कारवशा-च्चक्षुषा सुरभि चन्दनमिति ज्ञानमन्यथानुमितिरिति चेत् तर्हि पक्षधर्म्मधूमेऽपि न पुरा विशिष्य व्याप्तिरवगतेति कथं संस्कारवशात्तद्गतव्याप्तिबोधः प्रत्यक्षेण। न च सहचार-

दर्शनजन्यसंस्कारसहितेनेन्द्रियेण व्यभिचारज्ञानाभावे सति महानसीयधूमपर्वतीयधूमे व्याप्तयगमो वक्रेस्तु न प्रत्यक्षसामग्री सन्निकर्षाभावादिति साध्य हेतुसाध्य-साक्षात्कारं विना प्रत्यक्षेण व्याप्तग्रहात्। न च पर्वते वह्निसाक्षात्कारं न च पक्षधर्मस्य साध्यसामानाधिकरण्य-विशेषोव्याप्तिः पक्षे साध्यग्रहं विनेत्युक्तम्। उच्यते विशे-षणज्ञान तस्य विशेष्ये सम्बन्धयोरसंसर्गाग्रहोविशेष-दर्शन विशेषणविशेष्येन्द्रियसन्निकर्षो गौरयमित्यादिविशिष्टप्रत्यक्षकारणम् अस्ति चात्रापि व्याप्तिस्मरणं धूम-व्याप्ते पक्षवृत्तिधूमे अन्यम् एकैव हि सा व्याप्तिः तयोर-संसर्गाग्रहोपनतविशेषदर्शनं व्याप्तिविशिष्टधर्मेन्द्रियसन्नि-कर्षश्च व्याप्तिविशिष्टज्ञानकारणं न च वह्निविशिष्टज्ञान-सामग्री वह्नेरसन्निकर्षात्। कश्चित्तु धूमत्वे परम्परा-सम्बन्धेन वह्निव्याप्यत्वं पूर्वं गृहीतं तथा च संस्कारोपनीत वह्निव्याप्यत्वं परम्परासम्बन्धेन पक्षवृत्तिधूमत्वे प्रत्यभिज्ञा-यते तद्वृत्तित्वेन पूर्वमनुभवात् एवञ्च धूमत्वव्याप्यत्वपरा-मर्शादेवानुमितिरिति प्राह। अपरस्तु तावदेव तथापि जातिरेव लिङ्गं स्यात् न तु व्यक्तिः तथा च सर्वोपसंहा-रेण व्यक्तौ व्याप्तिग्रहार्थं सामान्यलक्षणप्रत्यासत्त्युपादान-मफलं स्यात् दृश्यते च परम्परासम्बन्धज्ञानं विना जाति-व्याप्तिमविदुषोऽपि धूमाद्वह्न्यनुमानं नहि व्याप्यतावच्छेद-कतया भासमानस्यापरस्य व्याप्यताप्रकं भानाभावात्

तस्मात् पक्षधर्मे व्याप्तिविशिष्टज्ञानं तदनन्तरविशिष्टवैशिष्ट्य ज्ञानं पक्षे वा तृतीयलिङ्गपरामर्शः। अन्ये तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं व्यापकत्वं तत्सामानाधिकरण्यञ्च व्याप्यत्वं तथा च लाघवात् व्यापकताज्ञानमनुमितिहेतुः साध्यस्य पक्षधर्मव्यापकताज्ञानञ्च परामर्शः नतु साध्यव्याप्तस्य पक्षधर्मताज्ञानं साध्यव्याप्यवत्पक्षधर्मताज्ञानं वा गौरवात् अतएव योयोधूमवान् सोऽग्निमानित्युदाहरणवाक्ये साध्यायोगव्यवच्छेदेन धूमव्यापकता वह्नेरुपदर्श्यते अन्यथा वह्निमानेव धूमवानित्यन्ययोगव्यवच्छेदेनोदाहरणशरीरं स्यात् दोषोऽपि व्यभिचारादिर्न पक्षधर्मव्यापकं साध्यमित्येवोद्भाव्यः। अथ पर्वतवृत्तिधूमव्यापको वह्निरितिपरामर्शो यदि तदा पर्वतीयधमं प्रति व्यापकतायाः पर्वतधूमसामानाधिकरण्यनैयत्यात् पर्वतवह्निः परामर्शविषयएवेति किमनुमेयमिति चेत् तर्हि पर्वतीयधूमे नियतसाध्यसामानाधिकरण्यस्य व्याप्यत्वस्य भानं साध्यसामानाधिकरण्यभाननियतमिति व्याप्यत्वभानेऽपि तुल्यम्। यदि च स्मृता व्याप्तिर्धूमेऽवगम्यते तदा व्यापकत्वेऽपि समानं वस्तुतस्तु व्यापकत्वं तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं नतु धूमसामानाधिकरण्यं व्याप्यत्वन्तु सामानाधिकरण्यविशे .- इति तवैवानुमितिरफला स्यात्। न चैवं परामर्शस्य चाक्षुषत्वं न स्याद्व्यापकस्य विशेष्यस्येन्द्रियासन्निकर्षादिति वाच्यम् इष्टत्वात् असन्निकृष्टधूमादाविव मानसएव हि

सर्वत्र परामर्शे पक्षान्वयव्यतिरेकानुविधानस्य पक्षवृत्ति-धूमोपनयोपयोगम्। अथ जनकज्ञाने उपसर्जनतया भातस्य पक्षस्य पर्वतादेरनुमितौ प्राधान्येन भानं न स्यात् नहि जनकज्ञाने उपसर्जनतयावगतं जन्यज्ञाने प्राधान्येन भासते तथादर्शनात् न चानुमितेरेवायात्मसिद्ध पर्वतोऽयं वह्निमानित्यनुमितेर्लौकिकसिद्धत्वादिति चेन्न पुरुषस्य दण्डदृति ज्ञानानन्तरं दण्डी पुरुषइतिज्ञानजन्यज्ञानदर्शनात् अन्यथा तथापि कथं पक्षविशेष्यकत्वनियमः नहि कारणीभूतज्ञाने यद्विशेष्यतया भासते तत्कार्य्यभूतेऽपि तथा इह-भूतले घटो नास्तीति ज्ञानजन्ये घटाभाववद्भूतलमितिज्ञाने तत्र च व्यभिचारात् तस्मात् पक्षवृत्तिलिङ्गपरामर्शस्यायं स्वभावो यत्स्वाश्रयविशेष्यिकामनुमितिं जनयति नातया भूतामेव समापि तुल्यमिति ।

एवं लिङ्गपरामर्शः कारणं नतु परामृश्यमानं लिङ्गम्। अथ परामर्शमात्रं न हेतुरपि तु लिङ्गपरामर्शं तथाच लिङ्गमपि हेतुः विशिष्टकारणतायाएकमानेन बाधकं विना विशेषणस्यापि हेतुत्वप्रत्ययात् न च लिङ्गं परामर्श-परिचायकत्वे नान्यथासिद्ध परिचये विशेषणान्तराभावेन लिङ्गमेव विशेषकं तथाचानन्यथासिद्धत्वात् तदपि हेतुः अन्यथा परिचायकतया स्वयोगेनान्यथासिद्धमिन्द्रियमपि कारणं न स्यात् अपि च धूमवान् वह्निमानिति धूम-समानकालवह्निविषयया अमविशेषणिकानुमितिः न्याय-

मानविशेषणाजन्या विशेषणसमानकालतया विशेष्यविषयेऽशाब्दविशिष्टज्ञानत्वात् दण्डी पुरुष इति प्रत्ययवत् अतएव ज्ञायमानविशेषणजन्यत्वेन विशेषणकालवृत्तितया विशेष्यभाननैयत्यं यथा दण्डी पुरुषइतिप्रत्यक्षे तेन धूमसमानकालीनवह्निसिद्धिः अन्यथा तत्तद्धूमकालवृत्तिवह्न्यनुमानं न स्यात् समयविशेषमन्तर्भाव्य व्याप्त्यग्रहात्। किञ्च लिङ्गकारणत्वपक्षे परामर्शएव तद्व्यापारः परामर्शस्य तु न व्यापारान्तरमस्ति चरमकारणत्वादिति न तत् कारणम्।

अत्रोच्यते।

अतीतानागतधूमादिज्ञानेऽप्यनुमितिदर्शनान्न लिङ्गं तद्धेतुः व्यापारपूर्व्ववर्त्तितयोरभावात् न च विद्यमानं लिङ्गान्तरमेव तद्धेतुः तदा तस्यापरामर्शात् परामर्शाविषयस्य कारणताग्राहकाभावात् भाविनि पक्षे व्यक्त्यैक्यमेव वा यत्र लिङ्गं तत्र लिङ्गान्तराभावाच्च यदि च वर्त्तमानमेव तत्र लिङ्गं तदा वर्त्तमानवह्न्यनुमानोपपत्तिः अथ भाविभूतं वा धूमादि न लिङ्गं किन्तु तत्प्रागभावध्वंसस्तु वर्त्तमानएव तयोरपि वह्निसमानदेशत्वनियमादिति चेन्न अतीतभाविदिनवृत्तितया निश्चितात् वर्त्तमानतया सन्दिग्धात् धूमादनुमितौ हि न प्रागभावध्वंसौ लिङ्गे तयोः सन्दिग्धत्वात् नापि धूमस्तस्यावर्त्तमानत्वात् किञ्च भूतभाविवर्त्तमानत्वाविषयात् पर्व्वते धूमइति ज्ञाना-

त्पादनसमयेऽनुमित्युत्पादनात् नापि तर्कः व्याप्तिग्राहकस्य विषयपरिशोधकस्य वा तस्य तदजन्यत्वादिति ।

तच्चानुमानं त्रिविधं केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् । तत्रासद्विपक्षं केवलान्वयि तथाहि केवलान्वयिनोऽभिधेयत्वस्य न विपक्षः अभिधानेऽनभिधाने च विपक्षत्वव्याघातात् । अथ यथा आकाशशब्दाच्छब्दाश्रयत्वमनभिधेयमप्युपतिष्ठते तथाभिधेयत्वविपक्षस्यानभिधेयत्वेऽपि पदादुपस्थितिः स्यात् एवञ्चाभिधेयत्वं कुतोऽपि व्यावृत्तं धर्म्मत्वात् गोत्ववदिति चेन्न व्यावृत्तत्वस्याव्यावृत्तत्वे व्यावृत्तत्वमेव केवलान्वयिव्यावृत्तत्वे यतएव व्यावृत्तं व्यावृत्तत्वं तदेव केवलान्वयीति धर्म्मत्वस्यानैकान्तिकत्वात् एवमत्यन्ताभावप्रतियोगित्वस्यात्यन्ताभावाप्रतियोगित्वे अत्यन्ताभावप्रतियोगित्वमेव केवलान्वयि अत्यन्ताभावप्रतियोगित्वे यन्निष्ठात्यन्ताभावप्रतियोग्यत्यन्ताभावप्रतियोगित्वं तदेव केवलान्वयि नचात्यन्ताभावप्रतियोगित्वं व्यावृत्तत्वञ्च नानेति वाच्यम् अनुगतप्रतीतिबलेन गोत्ववत्तयोः सिद्धेः तत्र न तावद्व्याप्यवृत्त्यत्यन्ताभाव केवलान्वयी तस्य प्रतियोग्यवच्छिन्नेप्यत्यन्ताभावात् अत्यन्ताभावप्रतियोगिनश्च केवलान्वयित्वात् नाप्याश्रयनाशजन्य गुणानाशात्यन्ताभावः तस्य नाशस्य सर्व्वत्रात्यन्ताभावादिति वाच्यं यत्र हि प्रतियोगिप्रागभावो वर्त्तते तत्र न तदत्यन्ताभावो वर्त्तते तथाच नाशस्य प्रागभावो यत्र नाशप्रति-

योगिसमानदेशे वर्त्तते तत्र घट नाशात्यन्ताभावो वर्त्तता
तर्हि नाशस्य तत्र वृत्तिः स्यादिति चेन्न पूर्व्वं तत्र नाश-
प्रागभावस्यैव अस्यादुत्तरकाले चान्वयस्यैवाभावात् ।
गगनाकाशात्यन्ताभावः केवलान्वयी तस्यापि प्रतियोगि-
रूपात्यन्ताभावप्रतियोगित्वात् अभावात्यन्ताभावस्य भाव-
त्वात् । अथाभावात्यन्ताभावो न प्रतियोगिरूपमन्यथाऽत्य-
न्योऽन्याभावात्यन्ताभावः प्रतियोगिरूप इति प्रतियोगि-
समानदेशोऽन्योऽन्याभावो न स्यादिति चेत् अत्यन्ताभा-
वात्यन्ताभावः प्रतियोग्येव अन्योऽन्याभावात्यन्ताभावस्तु
प्रतियोगिवृत्तिरसाधारणो धर्म इति । उच्यते वृत्तिमदत्य-
न्ताभावाप्रतियोगित्वं केवलान्वयित्वं आकाशात्यन्ताभावो
यद्यपि प्रतियोगिरूपात्यन्ताभावप्रतियोगी तथापि स न
वृत्तिमानित्याकाशात्यन्ताभावएव केवलान्वयी तथा प्रमेय-
त्वाभिधेयत्वादि केवलान्वयि वृत्तिमतोऽत्यन्ताभावस्याप्रति-
योगित्वात् । ननु प्रमेयत्वं प्रमाविषयत्वं तच्च न केवला-
न्वयि प्रमायाविषयत्वस्य चाननुगमादिति वाच्य प्रमात्व-
मेव हि परम्परासम्बन्धात् घटादौ प्रमेयत्वमनुगतं प्रमा-
ज्ञातीयविषयत्वं वा तथापि केवलान्वयिनि संशयाभावात्
कथमनुमितिः प्रमेयत्वमत्र वर्त्तते न वेति संशयश्च न प्रमे-
यत्वपक्षकः किन्तु प्रमेयत्वपक्षको भिन्नविषयकः प्रमेयत्वपक्षके
चास्तित्वसाध्यस्यान्वयव्यतिरेकित्वं तथाच घटः प्रमेयो न
वेति संशयो जन्यते स च नास्त्येव । अथ पक्षः साध्यवान्

वा पक्षे साध्यमस्ति न वेति संशयौ समानविषयकावेव तदस्यास्त्यस्मिन्निति मतुपोविधानादिति चेन्न विशेषणविशेष्यभावभेदेनार्थभेदात् मैवं य एव हि संशयः पक्षे साध्यसिद्धिविरोधी स एवानुमानाङ्गमावश्यकत्वात् लाघवाच्च न तु समानविषयकत्वमपि तत्र तन्त्वं गौरवात् प्रमेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगि न वेति संशयश्च घटः प्रमेय इति साध्यसिद्धिविरोधी भवत्येव यद्वा संशययोग्यतैवानुमानाङ्गं संशयस्य तदानीं विनाशात् न च सापि साधकबाधकप्रमाणाभावः प्रमेयत्वाभावासिद्धौ तत्प्रमाणासिद्धेस्तदभावासिद्धिरिति वाच्यं पक्षनिष्ठात्यन्ताभावाप्रतियोगित्वज्ञानस्यैव साध्यसाधकत्वेन तदभावस्यैव योग्यतात्वात् प्रमेयत्वमत्यन्ताभावप्रतियोगीति भ्रान्त्यतः संशय इत्यन्ये। नन्वेकरूपविकलमिदं कथं गमकं तत्त्वे वा व्यतिरेकविकलवत् रूपान्तरविकलमपि गमकं स्यादिति चेन्न अन्वयव्यतिरेकव्याप्त्योरन्यतरनिश्चयेनानुमित्यनुभवात् युगपदुभयव्याप्त्युपस्थितौ विनिगमकाभावेन उभयोरपि प्रयोजकत्वे व्यतिरेकोपासना व्यतिरेकस्य विपक्षवृत्तित्वशङ्कानिवृत्तिद्वारा व्यतिरेकव्याप्तावुपयुज्यते अत्र तु विपक्षाभावेन शङ्कैव नोदेति।

केवलव्यतिरेकी त्वसत्सपक्षो यत्र व्यतिरेकसहचारेण व्याप्तिग्रहः। ननु व्यतिरेकी नानुमानं व्याप्तिपक्षधर्मताज्ञानस्य तत्कारणत्वात् अत्र व्यतिरेकसहचारात् तत्र

व्याप्तिरन्वयस्य पक्षधर्मता न च व्याप्तपक्षधर्मत्वं साध्याभावव्यापकाभावप्रतियोगित्वरूपमुभयमप्यनुमितिप्रयोजकमिति वाच्यम् अननुगमात् प्रत्यक्षान्तरत्व तथा एकप्रमाणपरिशेषापत्ते न च तृणारणिमणिन्यायेनानुमितिविशेषे मद्दे तु त्वमिति वाच्य व्यतिरेकिसाध्यानुमितित्वासिद्धे उभयसिद्धस्यतत्कारणस्याभावात् न च साध्याभावव्यापकाभावप्रतियोगित्वमेवानुमितिप्रयोजकमिति वाच्य गौरवात् केवलान्वयिन्यभावाच्च । अथ साध्याभावव्यापकाभावप्रतियोगित्वेन साध्यव्याप्यत्वमनुमेयम् एव व्यतिरेकव्याप्त्यान्वयव्याप्तिमनुमाय तत्रानुमिति मतएव व्यतिरेकीत्युच्यते तत्र अन्वयव्याप्तेर्गमकत्वे व्यतिरेकव्याप्त्युपन्यासस्यार्थान्तरतापत्ते अन्वयव्याप्त्यनुपकारकतया च तदुपन्यासे अन्वयव्याप्तिमनुपन्यस्य तदुपन्यासस्याप्राप्तकालत्वमिति । उच्यते निरुपाधिव्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते प्रतियोग्यनुयोगिभावस्य नियामकत्वात् अन्वयव्यतिरेकवत् । नन्वेव व्याप्तिग्रहएव पृथिवीतरभिन्नेति भासित नियतसामानाधिकरण्यरूपव्याप्तेरिति साध्य गन्धवत्त्वावच्छेदेनेतरभेदस्य साध्यत्वात् अतएवाचार्य्यै पक्षतावच्छेदकस्य न हेतुत्वमनुमेने पृथिवीत्वमितरभेदव्याप्यमितिप्रतीतावपि सर्व्वा पृथिवीतरभिन्नेति पृथिवीविशेष्यकानुमित्यर्थ्व्यतिरेकि साध्यत्वाच्च । यद्वा व्यतिरेकव्याप्तेरेवान्वयेन गम्यगमकभाव साध्याभावव्यापकसाधनाभावाभावेन साधनेन सा

ध्याभावाभावस्य साध्यस्य साधनात् व्यापकाभावेन व्याप्याभावस्यावश्यम्भावात्। अथैवं न सानुमितिः क्लृप्तहेतुलिङ्गपरामर्शाभावादन्यथाननुगम इति चेन्न अनुमितिमात्रे व्याप्तिज्ञानस्य प्रयोजकत्वात् नचैवमतिप्रसङ्गः अनुमितिसामान्यसामग्र्या सत्यामप्यनुमितिविशेषसामग्रीविरहादनुमित्यनुत्पत्तेः विशेषसामग्रीसापेक्षायाएव सामान्यसामग्र्या जनकत्वात् अन्वयिव्यतिरेकिविशेषद्वयसामग्री च नास्त्येव। ननु पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादिति व्यतिरेकिणि साध्यमसिद्धं तथा च न व्यतिरेकिनिरूपणं न वा पक्षत्वं न वा लिङ्गजन्यसाध्यविशिष्टतज्ज्ञानं तेषां साध्यज्ञानजन्यत्वात्। अथ साध्यं प्रसिद्धं तदा यत्र प्रसिद्धं तत्र हेतोरवगमेऽन्वयित्वं अनवगमे असाधारण्यम्। किञ्च इतरभेदो न स्वरूपं अधिकरणप्रतियोगिनोः पृथिवीजलाद्योरनुमानात् प्रागेव सिद्धेः नापि वैधर्म्यं जलादिनिष्ठात्यन्ताभावप्रतियोगिमत्त्वं तद्धि पृथिवीत्वादिकं तच्च सिद्धमेव न च जलादिनिष्ठात्यन्ताभावप्रतियोगित्वेन पृथिवीत्वं न सिद्धमिति वाच्य जलादौ पृथिवीत्वात्यन्ताभावग्रहदशायां पृथिवीत्वेऽपि तत्प्रतियोगित्वग्रहात् अन्योऽन्याभावस्तु भेदो यद्यपि साध्यं सम्भवति वैधर्म्यज्ञानसाध्यत्वादन्योऽन्याभावग्रहस्य तथापि जलादिप्रतियोगिकान्योऽन्याभावस्याप्रसिद्धिः न च जलादिप्रत्येकान्योऽन्याभावः साध्योऽसाधारण्यप्रसङ्गात्। अथ पृथिवी तेजोभिन्ना न वेतिसंश-

देन तेजोभिन्नत्वेऽवगते पृथिवी तेजोभिन्ना सती जलादि द्वादशभिन्ना न वेति संशये तेजोभिन्नत्वे सति जलादि-द्वादशभिन्नत्वस्य प्रसिद्ध तदेव साध्यम् एकविशेषणविशिष्टे विशेषणान्तरबुद्धेरेव विशिष्टवैशिष्ट्यज्ञानात् एवञ्च ²सर्वत्र प्रसिद्ध साध्यमादाय व्यतिरेकादिनिरूपणम्। यद्वा पृथिवी इतरभिन्ना नवेति प्रत्येकं तयोदशपदार्थविषयाणां त्रयो-दशान्योऽन्याभावानां समुदायः पृथिव्यामवगतो व्यतिरेका-दिनिरूपकः नचैवं पृथिव्यामेव साध्यप्रसिद्धेर्व्यतिरेकि-वैयर्थ्यं साध्यनिश्चयार्थं व्यतिरेकिप्रवृत्ते न चासाधारण्यं समुदितान्योऽन्याभावानां साध्यत्वे सपक्षाभावादिति चेन्न साध्यनिश्चये हि साध्यव्यतिरेकनिश्चयोभयत्वेव साध्यसन्देहे तद्व्यतिरेकसंशयस्य वक्तव्येपत्वात् तथा च संशयरूपासाध्य-सिद्धिरिति शिष्यवचनम् एतेन पृथिवी जलादिभ्योभिन्नेति विप्रतिपत्तिरूपवादिवाक्यादाकाङ्क्षादिमतोऽपूर्वार्थप्रतिपा-दकत्वात् साध्यप्रसिद्धिरिति परास्तम् वाक्यादेव पृथिव्यां साध्यसिद्धेर्व्यतिरेकिवैयर्थ्यात्। न च तदुक्तौ वादिवाक्य जन्यत्वेनाप्रामाण्यसंशयात् निश्चयेऽपि संशयइति तन्निश्च-यार्थं व्यतिरेकीति वाच्य तर्हि संशयप्रसिद्ध साध्य तस्य च न व्यतिरेकनिश्चायकत्वमित्युक्तत्वात् स्वार्थानुमाने तद-भावाच्च।

उच्यते घटादावेवेतरसकलभेदस्य प्रत्यक्षं प्रसिद्धि घटो न जलादिरितिप्रतीतेः। नन्वयमन्योऽन्याभावो न

प्रत्यक्षः अतीन्द्रियप्रतियोगिकाभावत्वात् परमाणुसंसर्गा-
भाववत् योग्यानुपलब्धेरभावग्राहकत्वात् नयनोन्मीलना-
नन्तरं स्तम्भः पिशाचो न भवतीति प्रतीतेर्बाधकत्वेन
वायुर्वातीतिवल्लिङ्गग्रहोपक्षीणत्वादिति चेन्न योग्यानुपल-
म्भोऽधिकरणे प्रतियोगिसत्त्वविरोधी सोऽभावं ग्राहयति
न तु योग्यानुपलब्धिमात्रम् अन्यथा वायौ रूपाभावप्रती-
तिवत् जलपरमाणौ पृथिवीत्वाभावग्रहप्रसङ्गात् अधिक-
रणे प्रतियोगिसत्त्वञ्च तर्कितं यदि हि स्तम्भः पिशाचः स्यात्
स्तम्भवदुपलभ्येतेति पिशाचानुपलम्भः स्यात् न च पृथिवी-
जलाद्भिद्यते जलावृत्तिधर्म्मवत्त्वात् तेजोवत् एवमन्येभ्योऽपि
भेदसिद्धौ द्वादशभिन्नेतिविशेषणदत्वासमवायभेदसाधनाद्-
न्वयिन एव पृथिव्यां त्रयोदशभेदसिद्धिरिति किं व्यति-
रेकिणेति वाच्यं जलादिभिन्ना सती समवायभिन्नेति
बुद्धावपि त्रयोदशभिन्नेतिबुद्धेर्व्यतिरेकिसाध्यत्वात् न च
घटस्यापि पक्षत्वादंशतः सिद्धसाधनं सर्व्वा पृथिवीतरभि-
न्नेत्युद्देश्यप्रतीतेरभावात् पक्षतावच्छेदकनानात्वे हि तत्
अतएवानित्ये वाङ्मनसे इत्यत्रानित्या वागितिबुद्धेरुद्दे-
श्यायाः सिद्धत्वादंशतः सिद्धसाधनम् अन्यथानुमानमात्रो-
च्छेदात् पक्षस्य सिद्धस्यैव साध्यत्वात् न च घटः कथं पक्षः
साध्यनिश्चयेन संशयसिषाधयिषयोरभावादिति वाच्यं
सर्व्वा पृथिवी इतरभिन्ना न वेति संशयस्य तत्प्रकारक-
सिषाधयिषयोश्च सामान्यतो घटविषयत्वात् घटत्वेन विशेष-

दर्शने सिद्धिर्भा भतसोन सामयसिपाधयिपे न श' पृथिवी-त्वेन ते भवत' एव धूमवान् वह्निमानिति धूमत्वेन वह्नि निश्चयेऽपि पर्व्वते वह्निसाध्यवत् यद्वा सर्व्वत्वेन रूपेण न पक्षता सर्व्वत्राविप्रतिपत्ते घटाद्येकदेशे इतरभेदस्य प्रत्यक्षसिद्धत्वात् तथाचैकदेशे विप्रतिपत्तौ सामान्ये इतर-भेदसाधने अर्थान्तर किन्तु सामान्येन पृथिवीत्वेन याव देव विप्रतिपत्तिविषयत्वावतामेव पक्षता विशेष्यानुग-मात् । नहि पृथिवी इतरभिन्ना पृथिवीत्वाद्घटवदित्यन्व यिनैवेतरभेदस्य सिद्धत्वात् कि व्यतिरेकिणा घटसाधारण-पक्षत्वेऽप्यभेदानुमानवत् पक्षस्यापि दृष्टान्तत्वाविरोधात् पक्षान्यत्व ए तवातन्त्र किन्तु साध्यवत्तया निश्चितत्व प्रयोजक न च पृथिवीत्वाग्रहे पूर्व्वं गृहीत यत्र साध्य पक्षात् स्मर्यते तत हेतुसाध्यसामानाधिकरण्याग्रहात्व्यतिरेकप्रय-तार इति वाच्य हेतोरेव पक्षतावच्छेदकत्वेन घटे पृथिवी-त्वग्रहदशायामितरभेदसामानाधिकरण्यग्रहायश्चम्भावादि-ति चेत् सत्य अन्वयितुल्यतया व्यतिरेकिणोऽपि सामर्थ्या-दन्वयाप्रतिसन्धानदशाया व्यतिरेकमुपन्यासस्यापि पर्य्यनु-योज्यत्वात् तदुक्तमाचार्य्या तावदय इत्युपदेश' केवलव्यति-रेकिलक्षण तावन्निरूद्यम् । अथ या जलादीनां त्रयोद-शान्योऽन्याभावा' त्रयोदशत्व प्रसिद्धा' पृथिव्यां साध्यन्ते भतएवाकाशे व्यतिरेकिणा जलादिमिलितप्रतियोगिका-न्योऽन्याभावाप्रतीतावपि तयोदशान्योऽन्याभावा: साध्या-

इति नान्वयित्वासाधारण्ये। यद्वा जल तेजःप्रभृति द्वाद-शभिन्नप्रतियोगिकान्योऽन्याभाववत् द्रव्यत्वात्तेजोवदित्य-नुमानात्त्रयोदशभिन्नस्य सामान्यतः सिद्धौ पृथिव्या त्रयो-दशभिन्नत्वं साध्यं न चान्वयित्वसाधारण्यं वा पश्चादन्यत्र साध्याप्रसिद्धेः वस्तुगत्या पृथिव्यामेव साध्यसिद्धिः किं व्यतिरेकिणेति चेन्न पृथिवी त्रयोदशभिन्नेति व्यतिरेकिणं विना अप्रतीतेः। नन्वेवं पृथिवी जलादित्रयोदशभिन्न-प्रतियोगिकान्योऽन्याभाववती द्रव्यत्वादिति पृथिवीभिन्न-तद्भिन्नादिसिद्धिः स्यादिति चेन्न अप्रयोजकत्वात् प्रकृते चानुभूयमान जलादिवैधर्म्यस्य पृथिवीत्वाश्रयगन्धाश्रयत्वा-देरतिरिक्तं विनानुपपत्तेः। नन्वितरभेदो यद्यन्योऽन्या-भावस्तदा भावाद्भेदो न सिद्ध्येत अभावस्याभावान्तराभा-वात् यदि च तेन समं स्वरूपभेदएव साध्यः तदाननुगमा-दनुमानाप्रवृत्तिः भावोऽभावो न भवतीत्यबाधितप्रतीति-बलादभावस्यापि अन्योऽन्याभावोऽस्तीति केचित् तन्न अप-सिद्धान्तात् नन्वतिप्रसक्ताधिकरणस्वरूपमात्रेणैवाभावप्र-तीत्युपपत्तौ चाधिकाभावेमानाभावाच्च इति चेन्न इतर-भावान्योऽन्याभावस्य साध्यत्वात् न चैवमभावादविवेकता-दवस्थ्यं तेन समं स्वरूपभेदस्यान्वयिना व्यतिरेकिणा वा साध्यत्वात्। अन्ये तु पृथिवीत्वभिन्नधर्मात्यन्ताभावएव साध्यः जलत्वादिप्रतियोगिकास्तावन्तोऽत्यन्ताभावा वा तत्तदसाधारणतत्तद्धर्मात्यन्ताभावयोगो वा एते चाभाव

जलत्व न घटा ... घटादिसत्त्वात्यन्ताभाववदिति मत्वाहे कचित्तत्तद्व्यक्त्यादेव प्रसिद्धा इति नाप्रसिद्धि' तावता सभापानां वैशिष्ट्य न प्रसिद्धमिति चेत् किमेतावता नहि तावद्वैशिष्ट्यमत्र साध्यते किन्तु जलत्वादीनां यावन्तोऽभावा इह साध्यास्ते च तत्र तत्र प्रसिद्धाएव तावद्वैशिष्ट्य-धीस्तु फलम् अन्यथा विह्नसाधनात् मिलितानामपि साध्यत्वेनाप्रसिद्धि किञ्चिदेकधर्मायच्छेदे हि बलाद्विषयो-लक्षार्थं तथ नासिद्ध' न च हेतोरसाधारण्य तावदभाव योगीत्यत्र सपक्षो भवति न तु तदेकदेशकतिपयाभाववान् साध्यतायाशावत्यपर्याप्ते । यद्वा जलत्वात्यन्ताभावत्वेन-न्यात्यन्ताभावाधिकरणवृत्ति' अत्यन्ताभावत्वात् घटा-त्यन्ताभाववत् एवमत्यन्ताभावान्तरसामानाधिकरण्यमपि साध्यमिति क्वाप्रसिद्धि । किञ्चेतरे तावत् प्रसिद्धाएव ते च भेदप्रतियोगिनो मेयत्वादितीतरभेदोऽपि प्रत एव । ननु पृथिवी नेतरभेदवती गुणत्वादिभ्यो जलवदिति चेन्न इतरभेदनिषेधो हीतराभेद न च तेन प्रभरत्र्यभेदोऽनन इति दृष्टान्तस्य साध्यवैकल्यात् चतुर्दशाभेदाना चैकत्र विरो-धेनासम्भवात् चतुर्दशभेदानां चैकत्र वृत्तौ न विरोध । यत्तु साध्यप्रसिद्धौ पृथिवीतरभिन्ना तत्साध्याधिकरणपृथि-व्यन्यतरत्वात्सदधिकरणवत् पृथिव्यां तत् साध्यमन्वयिनएव सेत्स्यतीति तन्न अन्यतरत्वस्यासिद्धत्वादित्युक्तत्वात् सिद्धत्वे वा जलादावपि तत्सिद्धिप्रसङ्गात् एव तर्हि पृथिवी जल

पृथिवीत्वात् यन्न जलं तन्न पृथिवी यथा तेज इति सत्प्रति पक्षोऽस्त्विति चेत् न अजलस्य घटादेः प्रत्यक्षतएव पृथिवीत्वनिश्चये व्यतिरेकव्यभिचारादस्य न्यूनत्वात् तदनवधारणे तु सत्प्रतिपक्षत्वमिष्टमेव। ननु जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् इच्छादिकार्य्यवत्त्वाद्वेति व्यतिरेकिणि साध्याप्रसिद्धौ कथं व्यतिरेकादिनिरूपणं नैरात्म्यञ्च घटस्य न प्रत्यक्षवेद्यं तस्य तत्रासामर्थ्यात् नानुमानगम्यं नैरात्म्याप्रतीतावन्वयिनोऽभावात् सात्मकत्वप्रतीतिं विना व्यतिरेकिणोऽनुपपत्तिः। अथेच्छा समवायिकारणजन्या कार्य्यत्वात् तच्च समवायिकारणं पृथिव्याद्यष्टद्रव्यभिन्नं पृथिव्यादित्वे बाधकसत्त्वादिति पृथिव्यादिभिन्नात्मसिद्धौ तद्वत्त्वं जीवच्छरीरे साध्यत इति चेत् यदि सात्मकत्वमात्मसंयोगवत्त्वन्तदा घटादौ तदस्तीति ततो हेतुव्यावृत्तावसाधारण्यं ज्ञानसमानाधिकरणज्ञानकारणीभूतसंयोगाश्रयकार्यत्वं सात्मकत्वं शरीरात्मसंयोगस्य ज्ञानकारणत्वात् आत्ममनसोस्तथात्वेऽप्यकार्य्यत्वादिति चेत् न शरीरादन्यत्रासिद्धे तत्र प्रसिद्धौ सिद्धसाधनात् इच्छाया असमवायिकारणसंयोगावच्छेदकत्वस्याभावो घटादौ दृष्टः तद्व्यतिरेकः शरीरे साध्यत इति चेन्न इच्छाया असमवायिकारणसंयोगावच्छेदकत्वस्य शरीरएव प्रसिद्धेः सिद्धसाधनात् अन्यथा असिद्धिव्यतिरेकाद्यनिरूपणात् अप्रसिद्धसाध्यसंसर्गमेव साध्यमप्रसिद्धं साधयति व्यतिरेकीति चेत् न व्यतिरेकाद्यनिरूपणात्

असाधारणधर्मेणाप्रतीतपदार्थानुमाने घटत्वादिनापि स्वे-
च्छाकल्पितछिन्नप्रद्युमानप्रसङ्ग इति । उच्यते इच्छाया
असमवायिकारणसिद्धाविच्छात्व संयोगासमवायिकारणक
वृत्ति नित्येन्द्रियग्राह्यविशेषगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजा
तित्वात् शब्दत्ववत् सचासमवायिकारण संयोग' किञ्चिदव-
च्छिन्न' संयोगत्वात् आत्मसंयोगभावस्येच्छाजनकत्वेऽति-
प्रसङ्गादितीच्छाऽसमवायिकारणसंयोगावच्छेदकत्व मात्म-
कस्य शरीरे साध्यते । यद्वा आत्मनीच्छाधारता आत्मस-
योगावच्छेद्या अन्यविभुविशेषगुणाधारतात्वात् वाय्वादिस-
योगाद्यवच्छेद्यशब्दाधारत्ववदिति सामान्यत' सिद्धमिच्छा
धारताघटकेच्छासमवायिकारणद्रव्यसंयोगवत्त्व सात्मकत्वम्
अतएव ज्ञानसमानाधिकरणज्ञानकारणीभूतसंयोगाश्रय-
कार्य्यत्व वा सात्मकत्व स्वशरीरे प्राणादिमत्त्वस्य इच्छादि-
मत्त्वस्य च चेष्टावयवोपचयादिव्याप्यत्वग्रहात् घटादौ चेष्टा-
द्दिविरहेण प्राणादिमत्त्वेच्छादिमत्त्वविरहानुमानमिच्छा-
द्दिविरहात् इच्छादिप्रयोजकेच्छाद्याधारताघटकेच्छाद्यसम-
वायिकारणसंयोगविरहानुमान कार्य्याभाववति कारणा-
भावनियमात् । न च सात्मकत्व शरीरवृत्ति शरीरे बाध-
काभावात् शरीरत्ववदित्यन्वयिनैव साध्यसिद्धे किं व्यति-
रेकिणेति वाच्य शरीर सात्मकमिति शरीरविशेष्यकबुद्धे-
र्व्यतिरेकिण विनानुपपत्ते रुपायान्तरस्योपायान्तरा-
दूषकत्वाच्च यद्वा चेष्टा संयोगासमवायिकारणिका संस्का-

राजन्यक्रियात्वादिति चेष्टाया असमवायिकारणसंयोगसिद्धौ प्रयत्नवदात्मसंयोगएव पर्य्यवस्यति प्रयत्नान्वयव्यतिरेकानुविधायित्वात् एवं चेष्टाया असमवायिकारणसंयोगाश्रयत्वे सति शरीरत्वं सात्मकत्वं जीवच्छरीरे साध्यं चेष्टावत्त्वादिति हेतुः चेष्टाविरहश्च घटादौ प्रत्यक्षसिद्धः चेष्टा विरहात्तदसमवायिकारणसंयोगविरहोऽपि सुग्रहः । यद्वा जीवच्छरीरं तदवयवो वा आत्मभिन्नत्वे सत्यात्मविशेषगुणकारणभोगानधिकरणवृत्तिसंयोगवत् प्राणान्यत्वे सति ज्ञानकारणीभूतप्राणसंयोगवत्त्वात् यन्नैवं तन्नैवं यथा घटः आत्मप्राणसंयोगः प्राणमनःसंयोगो वा शरीरप्राणसंयोगेनैवान्यथासिद्धौ न कारणं भोगाधारवत्त्वं भोगसमवायिकारणातिरिक्तवृत्तिसकलभोगाधिकरणवृत्तित्वात् प्रमेयत्वादिवदिति तार्किकनीतिः । अथेच्छाष्टद्रव्यातिरिक्तद्रव्याश्रिता अष्टद्रव्यानाश्रितत्वे सति गुणत्वात् यन्नैवं तन्नैवं यथा नाश्रितमष्टद्रव्याश्रितं वेति कथं व्यतिरेकी अष्टद्रव्यातिरिक्तद्रव्यस्य तद्वृत्तित्वस्य चाप्रतीतेर्व्यतिरेकाद्यनिरूपणात् । स्यादेतत् इच्छाया द्रव्याश्रितत्वेऽनुमिते पृथिव्यादौ बाधानवतारदशायां विप्रतिपत्तेर्गुणत्वादाश्रितत्वादिसाधारणधर्मदर्शनाद्वा तद्द्रव्यमष्टद्रव्यातिरिक्तं न वेति सन्देहेनाष्टद्रव्यातिरिक्तद्रव्योपस्थितिः । यद्वा इच्छाया अष्टद्रव्यातिरिक्ताश्रयोपस्थितौ पश्चादिच्छाश्रयोऽष्टद्रव्यातिरिक्तद्रव्यं न वेति संशयादष्टद्रव्यातिरिक्तद्रव्योपस्थितिः । अथ सा द्रव्या-

श्रिता इच्छा अष्टद्रव्यातिरिक्तद्रव्यवृत्तिर्नवेति पूर्ववत् संश-
यादष्टद्रव्यातिरिक्तद्रव्यवृत्तित्व प्रसिद्धमिच्छाया' साध्यते
स्वयमसिद्धमपि साध्य व्यतिरेकादिनिरूपक साध्यज्ञान-
मात्रस्य कारणत्वात् नचैव संशयादेव पक्षे साध्यसिद्धेर्व्य
तिरेकिवैयर्थ्यं निश्चयार्थं तदुपयुक्तेरिति मैवं संशयेन साध्य
प्रसिद्धावपि तद्व्यतिरेकनिश्चयासम्भवात् साध्यव्यतिरेक
तद्व्याप्तिनिश्चयस्य साध्यनिश्चयसाध्यत्वात् साध्यसन्देहे तद्व्य-
तिरेकादिसंशयावश्यम्भावात् । किञ्च संशयोपस्थितसाध्यस्य
व्यतिरेकनिरूपणं न योग्यानुपलम्भात् साध्यनिश्चयं विना
योग्यानुपलम्भासम्भवात् नापि व्यापकाभावात् साध्यनिश्चयं
विना तद्व्यापकत्वनिश्चयाभावात् न च यदीच्छा अष्टद्रव्याति
रिक्तद्रव्याश्रिता न स्यादष्टानाश्रिता सती द्रव्याश्रिता न
स्यात् रूपवदिति साध्यविपर्ययकोटौ प्रतिकूलतर्कसहकृत
साध्यसंशय एव निश्चयकार्यं करोति अत एवैतादृशसंशयोप-
स्थितकल्पितडित्थादिसाधनमप्यपास्तं तद्विपर्यये प्रतिकूल-
तर्काभावादिति वाच्यं साध्यनिश्चयं विना साध्यव्यतिरेक
निश्चयतन्मूलतर्कानवतारात् अन्यथा अष्टद्रव्यातिरिक्तद्रव्य-
वृत्तित्वनिरूपणे तर्कोदये च तत् सहकृतसाध्यसंशयस्य
साध्यव्यतिरेकनिश्चायकत्वमिति । उच्यते । इच्छाश्रयद्रव्य-
सिद्धौ पृथिव्याद्यनिच्छाधारता भवेत् द्रव्यं पृथिव्याद्यष्टद्र-
व्यभिन्नम् अष्टद्रव्यावृत्तिधर्मवत्त्वात् पृथिव्यादित्वे बाधक-
सत्त्वादेतदष्टद्रव्यातिरिक्तद्रव्यसिद्धाविच्छायामष्टद्रव्यातिरि-

क्तद्रव्यवत्त्वमष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वं वा साध्यते साध्यप्रसिद्धिर्द्रव्यत्वे इच्छाविशेष्यकाष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वप्रतीतेर्व्यतिरेकिसाध्यत्वात् तथापीच्छाष्टद्रव्यातिरिक्तद्रव्याश्रिता अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात् अष्टद्रव्यातिरिक्तद्रव्यत्ववदिति साध्यप्रसिद्धेव दृष्टान्तप्रसिद्धेरन्वयी हेतुः स्यादिति चेन्न अन्वयव्याप्त्यप्रतिसन्धाने व्यतिरेकव्याप्तिप्रतिसन्धानदशायां व्यतिरेकिसम्भवात् न च द्रव्यत्वादेः सपक्षात् व्यावृत्तावसाधारण्यं तद्धि साध्यतदभावोभयसाधकत्वेन सत्प्रतिपक्षोत्थापकतया दोषावहं प्रकृते न च हेतोः साध्याभावसाधकत्वं विपक्षे बाधकाभावात् साध्यसाधकत्वे तत्सत्वाच्च अतएव यावदेकत्वानुकूलतर्को नावतरति तदैव दशाविशेषेऽसाधारण्यं दोष इत्युक्तं सुवर्णतैजसत्वसाधकव्यतिरेकिणि शब्दोऽनित्यः शब्दत्वादित्यादावपि तथा। अथाष्टद्रव्याधारत्वबाधानन्तरमिच्छादौ गुणत्वादेवाष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वं सिद्ध्यति पक्षधर्म्मताबलात् प्रसिद्धविशेषबाधे सामान्यज्ञानस्य तदितरविशेषविषयत्वनियमात् अतएवासर्वविषयानित्यज्ञानबाधानन्तरं क्षित्यादौ कार्यत्वेन ज्ञानजन्यत्वं सिद्ध्यन् नित्यसर्वविषयत्वं ज्ञानस्यादायैव सिद्ध्यतीति चेन्न बाधानन्तरमष्टद्रव्यातिरिक्तद्रव्यविषयाप्यनुमितिर्द्रव्याश्रितत्वप्रकारिका स्यात् अनुमितेर्व्यापकतावच्छेदकमात्रप्रकारकत्वनियमात् नत्वष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वप्रकारिका तस्य पूर्वमप्रतीतत्वेन प्रकार-

त्वसम्भवादिति तत्प्रकारिकानुमितिर्व्यतिरेकिण्येव अनाद्य नन्तद्व्यणुकादियावत्पक्षीकरणेऽनाद्यनन्ततावदुपादानागो-चरापरोक्षज्ञानत्वमेव नित्यसर्वविषयकत्वमेतदन्यनित्यसर्व-विषयत्वं व्यतिरेकिण एव सिद्ध्यति पक्षधर्मताबलेनापि व्यापकतावच्छेदकप्रकारेण साध्यसिद्धिर्भवति न तु साध्यगत विशेषप्रकारिका अतिप्रसङ्गात्। नन्वष्टद्रव्यानाश्रितेच्छा द्रव्याश्रितेति यदि साध्यते तदाष्टद्रव्यातिरिक्तद्रव्याश्रितत्व-मन्तरेण प्रतिज्ञार्थ एव नोपपद्यते सत्यम् एवमप्यष्टद्रव्याना-श्रितेच्छायां द्रव्याश्रितत्वं सिद्ध्यतु तस्याष्टद्रव्यातिरेकस्य कुतः सिद्धेत् अथ सामान्यव्यभिचारमादाय मानान्तरेण नीतं तत्तदन्यत्वमुपजीव्याष्टद्रव्यान्यद्रव्यवृत्तित्वेनेच्छादेः परि-च्छिद्यते मानान्तरोपस्थितविशेषणविशिष्टज्ञानस्य सुरभि चन्दनमित्यादौ दर्शनादिति चेत् न मानान्तरान्नियमे-नानुपस्थितेः ये चेच्छाश्रये पृथिव्यादिभिन्नत्वं न जानन्ति इच्छायाश्च पृथिव्याद्यनाश्रितत्वं न जानन्ति तेषामप्यनु-मानादित्यप्याहुः। अथ व्यतिरेकी नानुमानं सर्वत्र प्रमे-यत्वादिना सत्प्रतिपक्षग्रस्तत्वादिति चेन्न विपक्षबाधकेन व्यतिरेकिणो बलवत्त्वात्। अन्ये तु व्यतिरेकिस्वभाव एव साध्यं तथाप्रसिद्ध एव सिद्ध्यति यस्याभावस्य व्यापको हेत्वभावो गृहीतस्तस्याभावं पक्षे व्यापकाभावाभावरूपेण हेतुना सिद्ध्यति व्यापकाभाववत्तया ज्ञाते व्याप्याभावज्ञा-नावश्यम्भावात् तथा हि पृथिवी इतरेभ्यो भिद्यते पृथिवी-

त्वादित्यत इतरस्य जलादेर्व्यापकः पृथिवीत्वाभावो गृहीतस्तदितिपृथिवीत्वाभावाभावरूपेण पृथिवीत्वेन पृथिव्यामितरान्योऽन्याभावोऽप्रसिद्धएव सिद्ध्यति प्रतियोगिज्ञानस्य हेतुत्वात् प्रत्यक्षेण भूतले घटाभाववत् एवमन्यत्राव्याप्यवृत्तीच्छायाः स्वाश्रयत्वे सिद्धे स्वाश्रये योऽत्यन्ताभावस्तदवच्छेदकं घटादि सर्वं तदवच्छेदेनेच्छानुपलम्भात् जीवच्छरीरन्तु न तथा तदवच्छेदेन तदाश्रये इच्छोपलम्भात् तथा चेच्छात्यन्ताभावाश्रयतावच्छेदकत्वरूपस्य नैरात्म्यस्य घटादौ प्राणादिमत्त्वाभावो व्यापको गृहीतस्तदिति जीवच्छरीरे प्राणादिमत्त्वेन इच्छात्यन्ताभावाश्रयत्वावच्छेदकत्वस्याभावः सात्मकत्वं साध्यते एवं प्रामाण्यसाधकव्यतिरेकिण्यपि व्यधिकरणप्रकारावच्छिन्नत्वस्य व्यापकः समर्थप्रवृत्तिजनकत्वाभावोऽप्रमायां गृहीतोऽतो विवादाध्यासितानुभवे समर्थप्रवृत्तिजनकत्वेन व्यधिकरणप्रकारावच्छिन्नत्वस्याभावः सिद्ध्यति व्यधिकरणप्रकारानवच्छिन्नत्वमेव प्रमात्वम्। ननु साध्याप्रसिद्धौ कथं साध्यविशिष्टज्ञानं विशेषणज्ञानजन्यत्वाद्विशिष्टज्ञानस्येति चेन्न पक्षे साध्यानुमितिसामग्रीसत्त्वात्पक्षविशेषणकः साध्यविशेष्यकएव प्रत्ययो जायते भूतले घटोनास्तीत्यभावविशेष्यकप्रत्ययवत् तथापि साध्याभावव्यापकाभावाभावरूपहेतुमत्तया पक्षज्ञानं व्यतिरेकिणि गमकतौपयिकं न च साध्यप्रसिद्धिं विनैतादृशप्रतिसन्धानं सम्भवति नच वस्तुगत्या यः साध्याभावस्तद्व्यापकाभावप्रति-

योगिमत्तया ज्ञानं प्रत्यक्षमिति वाच्यं व्यतिरेकव्याप्त्यनुप-
पत्तेरिति चेत् न योऽभावो यस्य भावस्य व्यापकत्वेन
गृहीतः तदभावाभावेन तस्य व्याप्यस्याभावः पक्षे साध्यत-
इत्यनुगतानतिप्रसक्तस्य गमकत्वौपयिकत्वात् अयञ्च व्यति-
रेकिप्रकारः स्वार्थएव परं प्रति साध्याप्रसिद्ध्या प्रतिज्ञाद्य-
सम्भवादिति सर्वं समञ्जसम् ।

व्यतिरेक्यनुमानसिद्धावर्थापत्तिर्न मानान्तरं तेनैव
तदर्थसिद्धेः स्यादेतत् ज्योतिःशास्त्रात्कथितसिद्धाद्वा
देवदत्तस्य शतवर्षजीवित्वमवगतं परम् शतवर्षजीवी गृह
एवेति नियमे प्रत्यक्षेणावगते पश्चाद्योग्यानुपलब्ध्या निश्चि-
तो गृहाभावो जीवननियमग्राहकप्रमाणयोर्वैयधिकरण्यानिरू-
पणाद्बहिःसत्त्वकल्पनं विना नियमद्वयविषयसंशयं जन-
यित्वा जीवति न वेति संशयमापाद्य जीवनसंशयापत्तये
जीवनोपपादकं बहिःसत्त्वं कल्पयतीति यथोक्तसामग्र्य-
नन्तरं बहिरस्तीति प्रतीतेः तत्रान्वयव्यतिरेकाभ्यां संशय-
द्वारा गृहाभावः तदुत्पादितनियमद्वयविषयकसंशयो वा
करणं जीवनसंशयएवाकरणे सव्यापारकत्वानियमात्
प्रमाणयोर्विरोधज्ञानं तदाहितसंशयद्वारा करणमिति
कश्चित् । तदा जीवितस्य चिह्नविशेषपक्षस्य सन्दिग्धत्वेना-
नुमानासम्भवादर्थापत्तिर्मानान्तरम् । ननु संशयस्य
कल्पकत्वे स्थाणुपुरुषसंशयादपि तदेककोटिनिर्णायकस्य-
नापत्तिः न च प्रमितसंशयः कल्पनाङ्गं जीवनस्य तदानीं

प्रमितत्वे संशयाभावप्रसङ्गात् जीवित्वनिश्चयेऽनुमानादेव वहिःसत्त्वनिश्चयाच्च कदाचित् प्रमितत्वे च प्राक्प्रमितपुरुषस्यान्तरा तत्संशये कल्पना स्यात् किञ्च जीवनसंशयस्य मृतेऽपि दृष्टत्वान्न व्यभिचारेण वहिःसत्त्वगमकमिति चेत् न यथोक्तसामग्रीप्रभवसंशयस्य कल्पनाङ्गत्वात् अतएव मृतजनिष्यमाणयोर्गृहाभावनिश्चयो न यथोक्तसंशयमापादयतीति न वहिःसत्त्वकल्पकगृहाभावो योग्यानुपलब्धिनिश्चितो न संशय इति। अथ जीवननियमग्राहकप्रमाणयोर्यदि च तुल्यबलत्वमवगतं क्व तर्हि वहिःसत्त्वकल्पना विशेषदर्शनविरहात् कल्पने वा प्रमितजीवननिर्वाहकवहिः सत्त्ववद्गृहनियमनिर्वाहकमरणस्याप्युचितत्वेन तत् कल्पनापि स्यात् जीवनमरणयोः संशयाविशेषात् अथ तयोरेकं वलीयोऽपरमबलं तदैकेनापरस्य बाधएवेति न संशयः तस्माद्यत्र शतवर्षजीवित्वमवधारितं गृहाभावश्च निश्चितः तत्र वहिःसत्त्वकल्पनं न तु जीवनसंशये एवञ्च देवदत्तो वहिः सन् जीवित्वे सति गृहनिष्ठात्यन्ताभावप्रतियोगित्वादिति व्यतिरेकिणा वहिःसत्त्वज्ञानेनार्थापत्त्या लिङ्गविशेषण जीवित्वसंशये वहिःसत्त्वकल्पना च नास्त्येव किञ्च गृहाभावनिश्चयः प्रमाणद्वयविषयसंशयं जनयित्वा जीवनसंशयमापाद्य वहिःसत्त्वं कल्पयतीति न युक्तं न हि यतएव यत्संशयः सएव तन्निश्चयाय प्रभवति अतिप्रसङ्गात्। मैवम्। यथोक्तसामग्रीजनितसंशयवानेवं तर्क-

यति योग्यानुपलब्धिस्तदोतो गृहाभावइति तन्निश्चय गृहद
इति जीवननियमग्राहकयोरेव बाध विरुद्धयोरप्रमाण-
त्वात् तदिह मरणं कल्पयित्वा जीवनग्राहक बाध्यतां
जीवो बहिःसत्त्वं कल्पयित्वा गृहनियमग्राहक तत्र बहिः-
सत्त्वकल्पने गृहनियमग्राहकमात्रबाधा मरणकल्पने तु
शतवर्षजीवी देवदत्तः शतवर्षजीवी गृह एवेति नियमद्वय
स्यापि बाधा स्यात् तदाह जीवनग्राहे तन्नियमबाधस्याव-
श्यकत्वादिति । किञ्च यदा जीवति गृहे जीविष्यतीत्यादि-
बहुतरक्षणसम्मुहूर्तादिसमयोपाधिनियत जीवनमुपल-
ब्धमितितद्बाधे बहुतरव्याप्तिबाधः देवदत्तादयायगृह-
सत्त्वव्याप्तिधाभ्यां तदाभावरूपमरणापेक्षया बहिःसत्त्वस्य
भावत्वं लघुत्वं यदि च गृहान्योऽन्याभावाश्रययदि पदार्थ-
वृत्तिसंयोगाश्रयत्वं बहिःसत्त्वमिति तदपेक्षया मरणमेव
लघु तथापि मरणापेक्षया जीवनमात्रं भविति तदेव
कल्पयितुमर्हम् । ततोऽर्थापत्तिकल्पित जीवित्वमुपजीव्यानु-
मानाऽपि बहिःसत्त्वप्रान भविष्यतीत्यतोऽर्थापत्तिफलपरता
दयोरुभाभयोरमय स्वार्थयो बहिःसत्त्व कल्पयति । न च
बाध्य तर्काणां विपर्ययपर्यवसायित्व आभासत्व तत्पर्यव-
साने तदेवानुमानमेतत्प्रक्रमे तदाय बहिःसत्त्वमनुमापयिष्य
तीति यतोऽस्त्रायगौरवतर्कयोः विपर्ययपर्यवसायिनामेव
प्रमाणसहकारित्वमतएव प्रत्यक्षशब्दादावपि सहकारी स,
न च तस्यां दशायामेव प्रमाणान्तरमस्ति ततोऽर्थापत्ति

सहकारित्वं तर्कस्य। ननु स्वकारणाधीनस्वभावविशेषात्त-र्कानुगृहीतयथोक्तसंशयस्य यदि वह्निःसत्त्वप्रमापकत्वं तदा श्रुते गृहस्थिते वा तादृशसंशयादत्र वह्निःसत्त्वकल्पना सापि प्रमा स्यादिति चेन्न यथाहि प्रमापकस्येन्द्रियस्य दोषेण प्रमाशक्तितिरोधानादैन्द्रियकभ्रमः तथा यथोक्तसंशयस्यापि दोषेण प्रमाशक्तितिरोधानादग्रहरूपभ्रमसम्भवात् परोक्ष-ज्ञानानां जनकज्ञानाविभ्रमत्वे यथार्थत्वनियमइति चेत् सत्यं प्रकृतेऽपि जीवनगृहाभावनियमग्राहकप्रमाणयोरन्य-तराभासत्वेनाभासत्वसम्भवात् यद्वा दोषाभावसहकृतस्य यथोक्तसंशयस्य वह्निःसत्त्वप्रमापकत्वमिति। उच्यते। अनयो-रेकं बाध्यं विरुद्धार्थग्राहकत्वादिति सामान्यतो दृष्टादेव तर्कसहकृताद्गृहनियमग्राहकबाधे लिङ्गविशेषेण जीवित्व-निश्चयेऽनुमानाद्वह्निःसत्त्वसिद्धिः तथाहि जीवनप्रमाणबाधे गृहनियमप्रमाणोत्थापितलिङ्गेन मरणानुमानात् प्रमाण-त्वाभिमतयोर्द्वयोरपि बाधा स्यात् गृहनियमग्राहकबाधे च निष्प्रतिपन्थिजीवनप्रमाणालिङ्गविशेषणजीवित्वनिश्चये वह्निःसत्त्वानुमानादेकप्रमाणबाधा वेत्यादि तर्कसहकृतात् सामान्यतो दृष्टादेवानयोरेकं बाध्यमिति जायमानानु-मितिः परम्परामरणज्ञापकं विषयीकरोति नतु वह्निःसत्त्व-परम्परासाधकं जीवनप्रमाणं तथा च सामान्यतोदृष्टा-देव गृहनियमग्राहकबाधे जीवनप्रमाणालिङ्गविशेषणजी-वित्वनिश्चयेऽनुमानादेव वह्निःसत्त्वज्ञानमिति किमर्था-

ज्ञानं जायमानं संशयस्य कारणत्वं व्यवस्थापयतीति चेन्न यदेव हि विरुद्धाग्राहकत्वं तर्कविनाकृतमनिर्द्धारितैकाप्रामाण्यानुमितिमजीजनत्तदेव तर्कसहकृतं पुनरनुसन्धीयमानं गृहनियमग्राहकप्रमाणमित्यनुमितिं वहि:सत्त्वज्ञानानुकूलां जनयति सहकारिवैचित्र्येणैकस्यापि विचित्रफलजनकत्वात् न च जीवनसंशयानन्तरं तदनुसन्धानमसिद्धं गृहनियमग्राहकस्य जीवनग्राहकविरुद्धार्थग्राहकत्वानुसन्धानं विना वहि:सत्वकल्पनेऽप्यबाधप्रसङ्गात्। अथ यदि पर्य्यवसन्नमपि प्रमाणं पुनरनुसन्धीयमानं सहकारिविशेषात् फलान्तरजनकं तदेच्छा द्रव्याश्रिता कार्यत्वादिति सामान्यतोदृष्टद्रव्याश्रितत्वानुमितौ पश्चादष्टद्रव्यवृत्तित्वबाधे व्यतिरेकिणात्मसिद्धिरिति भज्येत अष्टद्रव्यवृत्तित्वबाधसहकृतात् सामान्यतोदृष्टादेव पुनरनुसन्धीयमानात् तत्सिद्धेरिति चेन्न अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमेन तत्प्रकारकबुद्धेर्व्यतिरेकिसाध्यत्वात् व्यतिरेकिणोऽप्यन्यत्र सामर्थ्यावधारणेनोपायान्तरस्यादोषाच्च। अपि च देवदत्तो जीवनमरणान्यतरप्रतियोगी प्राणित्वान्मद्वदिति सामान्यतोदृष्टं लाघवसहकारेण जीवनप्रतियोगित्वं विषयीकरोति तथा च लिङ्गविशेषणनिश्चयादनुमानादेव वहि:सत्त्वसिद्धि:। अथ लाघवसाचिव्यात् सामान्यतोदृष्टस्यापि विशेषविषयत्वात् नियमग्राहकप्रमाणोत्थापितलिङ्गकमरणानुमानेन जीवनग्राहकस्येवास्यापि सत्प्रति-

पक्षत्वम् एकेनापि भूयसामपि प्रतिबन्धकमप्रमात् न च तत्कार्यसामान्यजोदृष्टस्य पक्षधर्मता व्याप्तिपक्षधर्मते हि पन तत्र तुल्यमेव प्रात कार्यकारणतकेऽस विशेषभावपर्यवसाय-कालेन व्याप्तिग्राहकत्वस्य तुल्यत्वादिति चेत् तर्हि पक्षता-बलाद्विशेषसिद्धिः क्वापि न स्यात् सर्वत्र सामान्यमुखप्र-वृत्तप्रमाणस्य विशेषपर्यवसानेऽन्यसाधर्म्येण सत्प्रतिपक्ष-त्वप्रसङ्गात् अप्रयोजकत्वाच्च विपरीतसाधनमिति तुल्य नियमग्राहकस्याप्रयोजकत्वात् जीवत्प्राणकस्य तु सामा-न्यतोदृष्टस्य ज्योतिःशास्त्राद्यार्थत्वमेव विपक्षबाधक व्याप्ति ग्राहकमस्ति तस्मात् सामान्यमुखप्रवृत्तस्य सहकारिविशे षाद्विशेषपरस्यानुमानस्य तद्विशेषविलक्षणग्राहकप्रमाणेन सत्प्रतिपक्षत्वम् । न च प्रमाणाविरोधेनास्य तर्को न सह-कारीति वाच्य तर्कानवतारे विशेषपरस्याभावेनाविरोधात् तदवतारे तदधिकरणस्यादेव अन्यथा तर्कानवतारे सत्प्र तिपक्षस्य तदवतारेऽपि तस्य न निवर्त्तते किञ्चैवमथाप भावपि तद्विरोधेन न सहकारी स्यात् । यदुक्तं मरण-कल्पने गतपर्यायच्छिन्नजीवी गृहवृत्त्यस्यापि बाधइति तत्र विशिष्टबाधो न विशेष्यबाधात् मरणेऽपि जीवी गृह-वृत्त्यस्य विशेष्यस्याबाधात् किन्तु विशेषणबाधात् स च गतपर्यन्तजीवित्वबाधएव विशेषणाभावापत्तौ विशिष्टाभावो ऽप्यस्तीति चेन्न विशेष्यवति विशिष्टाभावस्य केवलविशेष-णाभावात्मकत्वात् विशिष्टस्यातिरिक्तस्यानभ्युपगमात्। अन्ये

तु शतवर्षजीवी देवदत्तो जीवी गृहएव नास्तीतिप्रमाणेषु द्वयोरविरोधेऽपि तृतीयमादाय विरोधज्ञानमस्ति तत्र जीवी गृहएवेत्यत्र प्रमाणघटितप्रमाणद्वयविरोधज्ञानजनिताप्रामाण्यसंशयाहितजीवनसंशयात् प्रमाणयोरविरोधापादकप्रमाणविरोधि वहिःसत्त्वं कल्प्यते यथोक्तसंशयस्यायमेव स्वभावो यद्वस्तुगत्या अप्रमाणं तद्विरोधि कल्पयति विरोधघटकस्य वस्तुगत्या अप्रमाणत्वेनैव विनिगमकत्वमिति तन्तुच्छम् अप्रमाणस्यापि प्रमाणत्वेन ज्ञानात् तर्कादिभिर्विशेषदर्शनं विना यथोक्तसंशयानन्तरं वहिरस्तीति ज्ञानमस्त्विष्टमतो न फलबलेन तथार्थापत्तिकल्पनम्। किञ्च मृते गृहस्थिते वहिःस्थितैतादृशसंशयादेव वहिःसत्त्वं गृहसत्त्वं मरणञ्च कल्प्येत कस्यचित् क्वचिद्वस्तुगत्या अप्रमाणत्वात् अर्थापत्त्याभासश्चैवं न स्यात्। स्यादेतत् माभूत् संशयः कारणमर्थापत्तावनुपपत्तिस्तु स्यात् तथाहि जीवी देवदत्तो गृहे नास्तीति ज्ञाने सति वहिःसत्त्वं विना जीवतोगृहासत्त्वमनुपपन्नमिति ज्ञानानन्तरं वहिरस्तीति धीरस्ति तत्रान्वयव्यतिरेकाभ्यामनुपपत्तिज्ञानं कारणम्। न च देवदत्तो वहिरस्ति विद्यमानत्वे सति गृहासत्त्वात् घटवदित्यनुमानाद्विद्यमानत्वे सति यत्र यन्नास्ति तदन्यदेशे तदस्ति यथा गृहएव कोणेऽवस्थितं मध्ये नास्तीतिव्याप्तिप्रभवानुमानाद्वा वहिःसत्त्वसिद्धेः किमर्थापत्त्येति वाच्यं हेतुसाध्ययोः सहचारज्ञानदशायामनु-

पपत्तिज्ञानेऽपि बहिःसत्त्वज्ञानात् सामान्यतो व्याप्तिग्रहानु
माने उपसर्जनमगत्येति तदन्यदेशसिद्धिरर्थापत्त्यैव । ननु
जीविनो गृहासत्त्वमनुपपद्य किं देवदत्तबहिःसत्त्वं विना
उत बहिःसत्त्वमात्रं विना नाद्य प्रथमं देवदत्तबहिःसत्त्वा-
प्रतीतौ तेन विनेदमनुपपन्नमिति ज्ञानाभावात् प्रतीतौ
वा किमर्थापत्त्या अर्थापत्तितएव तत्प्रतीतावन्योऽन्याश्रय
तदुक्तं तत्पक्षसन्निधेरप्रे तदसिद्धेरिति । नान्त्य अन्य
दीयबहिःसत्त्वज्ञानं विनानुपपत्त्यभावात् बहिःसत्त्वमात्र-
सिद्धावपि देवदत्तबहिःसत्त्वासिद्धेरिति चेन्न सामान्येन
हि विनानुपपत्तिज्ञानं कारणं सामान्याकारेणार्थोपज्ञानं
फलं तथाहि जीवतो बहिःसत्त्वं विना गृहासत्त्वमनुपपन्न-
मिति ज्ञानं यस्य गृहासत्त्वमनुपपन्नं तस्य बहिःसत्त्वं कल्प
यति मान्यस्य देवदत्तस्य तथेति सिद्धे देवदत्ते बहिःसत्त्व
कल्पयतदिति देवदत्तबहिःसत्त्व पर्यवस्यति न तु तेन रूपेण
कल्पना न वा तेन विनानुपपत्तिज्ञानं कारणं यथा वह्नि
मात्रव्याप्याद्धूमात् पर्वते वह्निसिद्धिरेव पर्वतीयवह्निसि-
द्धिर्न तु पर्वतीयत्वेनैव धूमात्तत्सिद्धिः तेन रूपेण व्यापक-
त्वाग्रहात् । अथोपपादकाभाववत्युपपाद्याभावनियमोऽनुप-
पत्तिर्नत्वभावमात्रमतिप्रसङ्गात् एवञ्च व्यतिरेकव्याप्तिमत
उपपाद्याद्व्यतिरेक्यनुमानमुद्रयैव साध्यसिद्धेः किमर्थापत्त्या
तथाहि देवदत्तो बहिः सन् जीवित्वे सति गृहासत्त्वात्
यन्नैवं तन्नैवं यथा मृतो गृहस्थितो वा न चान्यव्याप्यान्यस्य

गमकत्वेऽतिप्रसङ्गः साध्याभावव्यापकाभावप्रतियोगित्वस्य नियामकत्वात् न चार्थापत्तौ स्वरूपसती व्याप्तिर्लिङ्गं नानुमानइति वाच्यम् अनुपपत्तेर्ज्ञानं विना कल्पनानुदयात् अर्थापत्त्याभासानवकाशाच्च। नैवम् अत हि व्यतिरेकव्याप्तिरन्वयस्य पक्षधर्म्मत्वमिति व्याप्तिधीजन्यमपि वह्निःसत्त्वज्ञानं नानुमितिः तस्या व्याप्तपक्षधर्म्मताज्ञानजन्यतानियमात्। न च साध्याभावव्यापकाभावप्रतियोगित्वेन पक्षधर्म्मस्य ज्ञानमनुमितिप्रयोजकमित्यप्यस्तीति वाच्यं केवलान्वयिनि तदसम्भवात् तदपेक्षया साध्यव्याप्यत्वज्ञानस्य लघुत्वाच्च। अथ व्यतिरेकसहचाराद्धेतोरेव व्याप्तिर्दृश्यते एवञ्चान्वयस्य व्यतिरेकस्य उभयस्य वा सहचाराद्व्याप्तिग्रहत्रैविध्येऽनुमानत्रैविध्यम् अतएव धूमो दशाविशेषेऽन्वयीव्यतिरेकी अन्वयव्यतिरेकी चेति अस्तु तावदेवं तथापि जीविदेवदत्ताभावो गृहे वर्त्तमानो न वह्निःसत्त्वे अङ्गं देवदत्तावृत्तित्वात् वह्निःसत्त्वगृहनिष्ठाभावयोर्व्यधिकरणत्वेन नियतसामानाधिकरण्यरूपव्याप्त्यभावाच्च। उपरि सविता भूमेरालोकवत्त्वादित्यत्र भूमेरुपरि सन्निहितसवितृकत्वेनानुमानात् नापि गृहनिष्ठाभावप्रतियोगित्वं तत्प्रतियोगित्वस्य देवदत्तधर्म्मतया तदसन्निकर्षे प्रत्यक्षेण ज्ञातुमशक्यत्वात् अतएव विशेष्यासन्निकर्षात्तृतीयलिङ्गपरामर्शोऽपि न प्रत्यक्षेण। न च व्यतिरेकव्याप्तिग्रहनिष्ठाभावयोर्ज्ञानं सहकार्य्यासाद्य लनस्यैव सजन्यत इति वाच्यं सह-

कारिणएव मानान्तरत्वप्रसङ्गात्। अथ व्याप्तिज्ञानान न्तर स्मर्यमाणधूमात् कथमनुमितिः उक्तन्यायेन तत्रापि लिङ्गपरामर्शाभावादिति चेत् न कथञ्चित् 'कथं तर्हि वह्नि-ज्ञान' प्रश्नधर्मधूमव्याप्तिसन्दिग्धतात् धूमो वह्निं विना नास्ती त्यनुपपत्तिज्ञानादिति ब्रूमः अतएव दृश्यमानोधूमो वह्निं विनाऽनुपपन्नइति यदा ज्ञायते तदार्थापत्तिरेव यदा त्वनुपपत्तिज्ञानं विना व्याप्यत्वेन प्रतिसन्धीयते तदाऽनु मानं त्वयापि त्रिविधानुमानस्वीकारात् तस्माद्व्यतिरेक-व्याप्तिमुपजीव्य जीविदेवदत्तगृहाभावो बहिः सत्त्वं कल्प यति। उच्यते। देवदत्तासन्निकर्षेऽपि तस्य गृहनिष्ठा-भावप्रतियोगित्वं प्रत्यक्षेण गृह्यते तथाहि गृहे देवदत्त-स्याभावइति प्रत्यक्षं देवदत्तं पक्षधर्मत्वाभावसम्बन्धं प्रति-योगित्वलक्षणं गोचरयति सम्बन्धज्ञानस्य सम्बन्धिद्वयविष-यत्वात् प्रतियोगिना सममभावस्य सम्बन्धान्तराभावात् गृहनिष्ठाभावप्रतियोगित्वे च प्रत्यक्षोपस्थिते ज्ञातव्याप्ति-वैशिष्ट्यमपि प्रत्यक्षेण सुग्रहम्। न च देवदत्तविशेष्यकं बहिःसत्त्वव्याप्यगृहनिष्ठाभावप्रतियोगित्वज्ञानं नास्तीति वाच्यं पक्षदृष्टिसिद्धिलिङ्गपरामर्शमात्रस्यानुमितिजनकत्वात् च धिकस्य गौरवपराहतत्वात्। अथ या अप्रतिप्रसक्तासप्र-कारिकयाऽमसैव ज्ञातदेवदत्तविषयकतृतीयलिङ्गपरामर्शं यथा च न सप्रकारि मानान्तरं तथोपपादितमपक्षात्। ननु मयूरः पर्वतेतरे न नृत्यति नृत्यति चेतिज्ञानानन्तर

पर्व्वते नृत्यतीति ज्ञानमस्ति न च व्यतिरेकिणस्तत्सम्भवति पर्व्वतनृत्यस्य साध्यस्याप्रतीतौ व्यतिरेकव्याप्त्यनिरूपणात् न च पर्व्वतनृत्याप्रसिद्धौ तेन विनानुपपत्तिप्रतिसन्धानमपि नेति कथमर्थापत्तिरपीति वाच्यम् अधिकरणं विनानुपपद्यमानं नृत्यं प्रसिद्धाधिकरणबाधसहकृतं प्रसिद्धेतरमधिकरणं कल्पयतीति चेन्न मयूरनृत्यं साधिकरणं नृत्यत्वादिति सामान्यतोदृष्टं प्रसिद्धाधिकरणबाधसहकृतं प्रसिद्धेतरं पर्व्वतमधिकरणमादायानृत्यज्ञानं जनयति। यद्वा पर्व्वतेतरे न नृत्यतीतिशब्देन नृत्याभावबोधानन्तरं मयूरो नृत्यतीतिशब्दाज्जायमानं ज्ञानं पर्व्वतनृत्यं गोचरयति प्रसिद्धविशेषबाधसहकृतसामान्यज्ञानजनकप्रमाणस्य प्रसिद्धेतरं पर्व्वतमधिकरणविशेषमादाय ज्ञानजनकत्वनियमात्। अतएवानित्यज्ञानबाधानन्तरं क्षित्यादौ ज्ञानजन्यत्वं सिद्धनित्यत्वमादाय सिद्ध्यतीत्याचार्य्याः। यद्वा मयूरनृत्यं पर्व्वताधिकरणकं पर्व्वतेतरानधिकरणत्वे सति साधिकरणत्वात् पर्व्वतत्ववदित्यन्वयव्यतिरेकी अथ वा यः सम्भावितत्तदितरावृत्तिः सन् तदतिरिक्तावृत्तिर्न भवति न तद्वृत्तिर्भवतीति सामान्येन यत्तदर्थान्तर्भावेन व्याप्त्या नृत्यस्य पर्व्वतवृत्तित्वं सिद्ध्यति। एवं पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्रापि अप्रसिद्धरात्रिभोजनसाध्यपीनत्वज्ञानं रात्रिभोजनमादाय सिद्ध्यति। अथ यथा अभोजी पीनइत्यत्रायोग्यताज्ञानं तथा पीनो दिवा न भुङ्क्तइत्यत्रापि दिवाभोज-

नस्य बाधाद्योग्यताघटकरात्रिभोजनस्याप्रतीतेः अतो यो- ग्यताघटकोपस्थितिं विना अन्वयमलभमानमिदं वाक्यं योग्यताघटकरात्रिभोजनोपपादकं रात्रौ भुङ्क्ते इति वाक्यं कल्पयित्वा तेन सहान्वयबोधं जनयति। न चैव लाघवाद्रा- त्रिभोजनमेव कल्पयितुं युक्तं शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यत इति न्यायेन शब्दोपस्थापितमादाय शब्दस्यान्वयबो- धजनकत्वात् अपस्य श्रूयमाणशब्दस्यान्वयबोधकत्वे योग्य ताघटकोपस्थापकेन शब्देन विनानुपपद्यमानं तं कल्पयित्वा अन्वयबोधं जनयति तत् श्रुतार्थापत्तिः। द्वारमित्यादौ पिधेहीतिशब्दकल्पनं श्रुतार्थापत्तिरेव शब्दस्य यद्यपि श्रूय माणोऽबाधितत्वाद्यभिप्रायस्य कल्प्यते यथा गुरुमते स्वर्ग कामो यजेतेत्यत्र साक्षात्साधनताबाधे परम्पराघटकस्या- नुपस्थित्या परम्परासाधनताज्ञानविरहेऽयोग्यताज्ञानभा- वात् प्रसिद्धपदसामानाधिकरण्यानुपपत्तेरिति योग्यता- धानाय परम्परासाधनताघटकमपूर्वं लिङादिवाक्यं कल्प यति ततः स्वर्गसाधनं याग इति ज्ञानं जायते अन्यथा अपू- र्वमपि वाच्यं न स्यादिति। उच्यते। बाधकप्रमाणाभा- वोऽन्वयविरोधिरूपविरहो वा योग्यता अतो दिवा अभो- जने रात्रिभोजनाप्रतीतावपि भोजनसाध्यपीनत्वाद्दिवा न भुङ्क्त इति शब्दाद्बोधोत्पद्यते न प्रतीत्यनुपपत्तिः किन्तु प्रती- तानुपपत्त्या रात्रिभोजनं कल्प्यते अत एवापूर्वमपि न वाच्य- मिति] वक्ष्यते तथाश्रुतार्थापत्तिरनुमानान्नातिरिच्यत इति।

तत्रानुमानं परार्थं न्यायसाध्यमिति न्यायस्तदवयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि निरूप्यन्ते। तत्र न समस्तरूपोपपन्नलिङ्गप्रतिपादकवाक्यं न्यायः अत्रैव वाक्येऽतिव्याप्तेः किन्त्वनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशब्दज्ञानजनकवाक्यं न्यायः प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते तेन च विशिष्टवैशिष्ट्यावगाहिमानान्तरमुत्थाप्यते तेन च चरमपरामर्श उत्पाद्यत इति न्यायजन्यशाब्दज्ञानस्य परामर्शप्रयोजकता अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजक शाब्दज्ञानजनकवाक्यत्वमवयवत्वम् अतएव वह्निव्याप्यधूमवानयमितिवाक्ये तदवयवे च न न्यायतदवयवलक्षणातिव्याप्तिः तेन परामर्शस्य, तदवयवेन परामर्शजनकस्य जननात्। यत्तु संक्षेपतः परामर्शप्रयोजकवाक्यत्वेन विशेषाभावात् सोऽपि न्यायएवेति तन्न 'कथायामाकाङ्क्षाक्रमेणाभिधानमिति प्रथमं विशिष्टवैशिष्ट्यआकाङ्क्षा नास्तीति तदभिधाने निग्रहादिति वक्ष्यते अन्यथा चक्षुरादेरपि परामर्शजनकतया न्यायत्वापत्तिः आकाङ्क्षाविरहस्तुल्यएव। अन्ये तु पञ्चावयववाक्याद्विजातीयमेव शाब्दज्ञानमुत्पद्यतइति तद्धीजनकवाक्यत्वं न्यायत्वम् एवं प्रतिज्ञाद्यवयवादपि प्रत्येकं विजातीयं शाब्दज्ञानमिति तत्तद्धीजनकशब्दत्वमेव तत्तल्लक्षणमिति तन्न ज्ञानविशेषजनकत्वं तत्तज्ज्ञानजनकत्वं वा न्याये प्रतिज्ञादौ चाननुगतरूपमन्तरेण दुर्निरू-

बोधयितुमीष्टे । नच वादिवाक्येऽनुपस्थितमपि योग्यतया अन्वेति अतिप्रसङ्गात् । नच विप्रतिपत्तितः साध्योपस्थितिः तस्याः प्रतिवादिविप्रतिपत्त्या प्रमाणादिव्यवस्थया चान्तरितत्वात् परविप्रतिपत्तिं समयबन्धञ्च विना स्थापनाया अभावात् विप्रतिपत्तिवाक्यस्य पक्षग्रहेण पर्यवसिततया निराकाङ्क्षत्वाच्च आवृत्तौ तु सैव प्रतिज्ञा । न चावयवान्तराक्षेत्वन्वययोग्या साध्योपस्थितिः । नाप्यवयवान्तरेणाक्षेपात् साध्यान्वये तदभिधानं तदभिधाने च साध्यान्वय इत्यन्योन्याश्रयात् । तस्मात् प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या वा नेहाक्षेपः । अन्ये तु शब्दानित्यत्वे प्रमाणं वदेति यदि मध्यस्थस्यानुयोगः तथापि प्रमाणमात्रे नाकाङ्क्षा किन्तु विशिष्टे विशिष्टन्तु विशेषणं साध्यमनभिधाय न शक्याभिधानं न च वस्तुतो यत्साध्यं तत्र प्रमाणं वदेति मध्यस्थनियोगः वादिद्वयमध्ये तदसम्भवात् तस्मात्साध्याभिधानं विना न हेतोराकाङ्क्षा नवान्वयबोधकत्वमिति प्रतिज्ञा साधनाङ्गमिति । साध्यनिर्द्देशानन्तरं कुतइत्याकाङ्क्षायां साधनताव्यञ्जकविभक्तिमल्लिङ्गवचनमेवोचितं अन्यथा नाकाङ्क्षाभिधाने निग्रहापत्तेः लोके तथैवाकाङ्क्षानिवृत्तेरिति व्युत्पत्तेरिति प्रतिज्ञानन्तरं हेतूपन्यासः हेतुत्वञ्चानुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकसाध्याविषयकशाब्दधीजनकहेतुविभक्तिमच्छब्दत्वं हेतुत्वप्रतिपादकविभक्तिमन्यायावयवत्वं वा उदाहरणप्रयो-

सकाकाङ्क्षाजनकशाब्दज्ञानजनकन्यायावयवत्वं वा साध्या-
विषयकज्ञानजनकहेतुपञ्चम्यन्तानुमितिपरत्वं वा प्रति-
ज्ञावाक्यधीजन्यकारणाकाङ्क्षानिवर्तकज्ञानजनकहेतुविभ-
क्तिमद्वाक्यत्वं वा पञ्चम्यन्तत्वाद्यविषयकपदवदनुमितिपर-
वाक्यत्वं वा हेतुपदेन ज्ञानलक्षणात् अन्यथा लिङ्गस्या-
हेतुत्वेन हेतुविभक्त्यर्थानन्वयात् तथैवाकाङ्क्षानिवृत्ते अनु-
मितिहेतुज्ञानकारणधूमवत्त्वादितिशब्दजन्यज्ञानवृत्तिप्रति-
ज्ञादिजन्यज्ञानावृत्तिजातियोगिज्ञानजनकवाक्यत्वं हेतुत्व-
मित्यन्ये जाति विना केन रूपेण ज्ञानस्यानुमितिजनकत्व
वाच्यविशेषणजन्यत्वस्यापि जन्यतावच्छेदकरूपापरिचये दुर्ग्र-
हत्वादित्यपरे। अन्वयव्याप्त्यभिधायकावयवाभिधानप्रयोज-
कज्ञानजनकहेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वमन्वयि
हेतुत्वं एतदेव व्यतिरेकव्याप्त्यभिधायकपदप्रक्षेपाद्व्यति-
रेकि हेतुत्वम् अन्वयव्यतिरेकोदाहरणाकाङ्क्षाप्रयोजक
तथाभूतावयवत्वमन्वयव्यतिरेकि हेतुत्वं यद्वा पक्षसपक्षसतो
विपक्षासतो हेतुवचनमन्वयव्यतिरेकि अत्यन्ताभावाप्रति
योगिसाध्यसमानाधिकरणपक्षसपक्षसद्धेतुवचनं केवला-
न्वयि यद्वा अनुमितिकारणीभूतपरामर्शप्रयोजकशाब्द
ज्ञानकारणसाध्याविषयकशाब्दधीजनकप्रतीतान्वयसाध्यसा
धनवाचकहेतुविभक्तिमच्छब्दत्वमन्वयिहेतुत्वम् एतदेवा-
प्रतीतान्वयसाध्यसाधनेतिविशेषणाद्व्यतिरेकिहेतुलक्षणाक्ष-
यायां धूमादित्येव प्रयोक्तव्य नतु धूमवत्त्वादिति मतुपोऽर्थ

त्वात्। केचित्तु सामान्यवत्त्वे सति वाह्यकरणप्रत्यक्षत्वादित्यपार्थकं विभक्त्युपस्थापितहेतुत्वेन सामान्यवत्त्वस्य विभक्त्यन्तरावरुद्धस्यानन्वयादिति केचित् तन्न सतिसप्तमीवलात् सामान्यवत्त्वस्य वाह्यकरणप्रत्यक्षत्वस्य च सामानाधिकरण्योपस्थितौ विशिष्टे हेतुत्वान्वयात् तथैव व्युत्पत्तेः नह्ययमर्थोऽस्मान्नावगम्यते।

हेतावुक्ते कथमस्य गमकत्वमित्याकाङ्क्षाया व्याप्तिपक्षधर्मतयोः प्रदर्शनप्राप्तौ व्याप्तेः प्राथम्यात् तत्प्रदर्शनायोदाहरणं तत्रानुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानजनकव्याप्यत्वाभिमतवन्निष्ठ नियतव्यापकत्वाभिमतसम्बन्धवोधजनकशब्दत्वमुदाहरणत्वं सामान्यलक्षणे साध्यसाधनसम्बन्धवोधकत्व साध्यसाधनाभावसम्बन्धवोधकत्वञ्च विशेषलक्षणद्वयम्। न्यायावयवदृष्टान्तवचनमुदाहरणमिति तु न दृष्टान्तप्रयोगस्य सामयिकत्वेनासार्व्वत्रिकत्वात् योयोधूमवान् सोऽग्निमानित्येव व्याप्तिप्रतीतेः नापि प्रकृतानुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानविषयव्याप्त्युपनायकं वचनं तत्, उपनयातिव्याप्तेः अत उपनयाभिधानप्रयोजकजिज्ञासाजनकवाक्यमुदाहरणम् एतदेवान्वयव्यतिरेकिव्याप्तिविषयत्वविशेषितं विशेषलक्षणद्वयमित्यन्ये अत्र च व्यभिचारवारणाय वीप्सामाहुः यत्र च सामानाधिकरण्यादेव व्याप्तिस्तत्र न वीप्सा केवलान्वयिन्यभेदानुमाने च वीप्सायामपि व्यभिचारतादवस्थ्यमिति तु वयं, वीप्सा च

शेऽप्रयोजकशाब्दज्ञानकारणव्याप्तिपक्षताधीप्रयुक्तसाध्यधीजनकं वाक्यम्। न च व्याप्तिपक्षधर्मतायाश्चतुर्भिरेवावयवैः पर्य्याप्तेः किं तेनेति वाच्यम् अबाधितासत्प्रतिपक्षत्वयोरलाभे चतुर्णामप्यपर्य्यवसानात्। अथाभिधानाभिधेययोर्व्याप्तिपक्षधर्मतावल्लिङ्गप्रतिपादनादेव पर्य्यवसानेनावयवान्तराणां निराकाङ्क्षत्वं विपरीतशङ्कानिवृत्तेरपि ततएव लाभात्, अन्यथा निगमनेनापि तदवारणात् न हि तद्विशेषदर्शनमनाहृत्यैव तन्निवर्त्तकम्। सिद्धनिर्द्देशतया वारयतीति चेन्न स्वरूपमात्राभिधानात् साध्यत्वानुपस्थितौ तस्मादिति हेतुविभक्त्यनन्वयप्रसङ्गाच्चेति चेन्न व्याप्तिपक्षधर्मताज्ञानेऽपि बाधसत्प्रतिपक्षबुद्धेः साध्यज्ञानानुत्पत्तिदर्शनात् तदभावावबोधने समीहितानिर्व्वाहात्। अथ बाधादिविरहस्य प्रयोजकत्वं न तु तद्बोधस्य, मानाभावादसिद्धेश्च इति किमर्थं बाधादिविरहो बोधनीय इति चेन्न यदवगमे सति यन्न भवति तत्तदभावज्ञानसाध्यमिति व्याप्तेः न चानन्वयः, तस्मादित्यन्वयबलादेव हेत्वनाकाङ्क्षितत्वलक्षणसिद्धत्वज्ञानात् न त्वन्वयात् पूर्व्वम्। इह केचित् यथा तस्मादिति सर्व्वनाम्ना हेतोः परामर्शः पूर्व्वोक्ताशेषरूपलाभाय तथा साध्यांशस्यापि तथा इति सर्वनाम्ना सिद्धस्य लड्व विरोधादिवारणाय युक्तइत्याहुः तन्न तथेति स्वरूपे, प्रकारे, सादृश्ये, वा आद्ये तथाचायमिति प्रकान्तात् तथेति हेतुमानित्यर्थः स्यात् तथाचानन्वयः न हि

हेतुमत्त्वादेव हेतुमत्त्वमित्यस्मिन् न द्वितीयं सामान्येन पक्षस्यापि अन्वयव्याप्तौ प्रवेशात् तत्प्रकारान्वयव्यतिरेकस्य सम्भवात् अतएव न तृतीयोऽपि अभेदानुमाने चान्वयिनि तन्मात्रत्वेति साहचर्याभावात् व्यतिनाद्य प्रकृते विशेष्याम-म्भवात् वादिवाक्ये च योग्यतान्वयेऽतिप्रसङ्गात् तस्मादि ष्टस्य विभक्त्यर्थानन्वयादेव नियम तस्मादनित्य इत्यभि धाने विशिष्टसिद्धतापगम्यते पूर्वं साध्यतयोक्तस्य समर्थ-हेतुमत्त्वेन पुनरुत्कीर्त्तनात्, अन्यथा तद्वैयर्थ्यात् । एवं प्रयोजनादयस्त्ववयवलक्षणाभावादेव नावयवा किन्तु न्यायाङ्गतयोपयुज्यन्त इति नाधिक्यं कण्टकोद्धारस्य च न सार्वत्रिकत्व समयविशेषोपयोगित्वादिति ।

अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरू-प्यन्ते ।

तत्रानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानवि-षयत्व यद्विषयत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्व ज्ञाय मान तदनुमितिप्रतिबन्धक यत् तस्य वा हेत्वाभासत्व व्यभिचारे हेत्वोरेवासाधारणसत्प्रतिपक्षयोराभासत्वात् तद्बुद्धेरप्यनुमितिप्रतिबन्धकत्वम् । यद्यपि बाधसत्प्रति-पक्षयो प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वान्न लिङ्गाभासत्व तथापि ज्ञायमानस्याभासत्वान्न लक्षण यदा प्रत्यक्षादौ बाधेन न ज्ञान प्रतिबध्यते किन्तूत्पन्नज्ञानेऽप्रामाण्य ज्ञा-प्यते अनुमितौ तूत्पत्तिरेव प्रतिबध्यते ।

ते च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च स-
व्यभिचारोऽपि त्रिविधः साधारणासाधारणानुपसंहारिभे-
दात् तत्र सव्यभिचारः साध्यतदभावप्रसञ्जकइति न त्रितय-
साधारणं लक्षणम् एकस्योभयं प्रत्यसाधकत्वात् अनापादक
त्वाच्च नाप्युभयपक्षवृत्तित्वं उभयव्यावृत्तं वा तत्त्वम् अननु-
गमात्। अथ साध्यसंशयजनककोटिद्वयोपस्थापकपक्षधर्मता-
ज्ञानविषयत्वे सति हेत्वभिमतः सः, विप्रतिपत्तिस्तु प्रत्येकं
न तथा न वा पक्षवृत्तिः, साधारणमन्वयेन असाधारणं
व्यतिरेकेण अनुपसंहारी पक्षएवोभयसाहचर्य्येण कोटिद्व-
योपस्थापकः। केवलान्वयिसाध्यकानुपसंहारी अयं घट
एतत्त्वादित्यसाधारणश्च सद्धेतुरेव तदज्ञानं दोषः पुरुषस्य।
अतएवासाधारणप्रकरणसमयोरनित्यदोषत्वम् अन्यथा स-
द्धेतौ बाधादिज्ञाने हेत्वाभासाधिक्यापत्तिः न च प्रमेय-
त्वेनाभेदानुमाने शब्दोऽनित्यः शब्दाकाशान्यतरत्वादित्यत्र
च साधारणेऽव्याप्तिः तयोः साध्यवदवृत्तित्वेन विरुद्धत्वा-
दिति चेन्न एतदज्ञानेऽपि साधारण्यादिप्रत्येकस्य ज्ञानादु-
द्भावनाच्च स्वपरानुमितिप्रतिबन्धात् उद्भावितैतन्निर्वाहार्थं
साधारणादेरवश्योद्भाव्यत्वेन तस्यैव दोषत्वाच्च। एतेन
पक्षवृत्तित्व सत्यनुमितिविरोधिसम्बन्धाव्यावृत्तिरनैका-
न्तिकः सपक्षविपक्षवृत्तित्वमुभयव्यावृत्तत्वमनुपसंहारित्व-
ञ्चानुमितिविरोधि, तत्सम्बन्धः प्रत्येकमस्ति विरुद्धोऽप्यनेन
रूपेण सव्यभिचारएव उपाधेश्च न सङ्करइति वच्यतइति

निरस्तम् एतज्ज्ञाने ज्ञानेऽपि बाधव्यापकप्रत्येकज्ञानस्य दोष-
त्वात् असाधकतानुमितौ व्यर्थविशेषणत्वाच्च अतएव
साध्यव्याप्यत्वे सति साध्याभावव्याप्यहेत्वाभासत्वं साध्य-
वद्व्यावृत्तत्वे सति साध्याभाववद्व्यावृत्तत्वं चेति
परास्तं व्यर्थविशेषणत्वात् प्रथमे हेत्वाभासत्वाभावाच्च
गगनमनित्यं शब्दाश्रयत्वादित्यादिबाधविरुद्धसङ्कीर्णासा-
धारणाव्याप्तिरिति क्वचित् नापि सपक्षविपक्षगतसर्व-
सपक्षविपक्षव्यावृत्तान्यतरत्वं व्यर्थविशेषणत्वात् अनुप-
संहार्यव्याप्तेश्च । किञ्च पक्षातिरिक्तसाध्यवत्त्वं अपक्षत्वे
प्रमेयत्वेनाभेदसाधनेऽनुपसंहार्यव्याप्तिः पक्षातिरिक्तसा-
ध्यवतोऽप्रसिद्धेः साध्यवत्सपक्षत्वे विपक्षेऽप्रसिद्धि-
र्व्याप्तिमतो धर्मस्य साध्यवद्विपक्षान्यतरवृत्तित्वनियमात् ।
नापि पक्षातिरिक्तसाध्यवद्व्यावृत्तत्वे सति पक्षाति-
रिक्तसाध्याभाववद्व्यावृत्तिमत्त्वम् अनुपसंहार्यव्याप्तेः
धूमादावतिव्याप्तेश्च तस्य पक्षे साध्यवति एव नापि
पक्षवृत्तित्वे विरुद्धान्यत्वे च सत्यनुमित्यौपयिकसम्बन्धशून्यत्वं
व्यर्थविशेषणत्वात् एतेनानुगतं सर्वमेव लक्षणं प्रत्युक्तं
प्रत्येकमेव दूषणत्वात् उद्भावने वादिनिग्रहश्च । उच्यते ।
उभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं तच्च साधार-
णत्वादिविरुद्धान्यपक्षवृत्तित्वे सत्यनुमितिविरोधिसम्बन्धा-
व्याप्तिर्वा तेनैव रूपेण ज्ञातस्य प्रतिबन्धकत्वात् परस्य
तथैवोद्भावनाच्च लक्षणानुरोधेन प्रत्येकमेव हेत्वाभास-

त्वम्। यद्वा साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्र-वृत्त्यन्यत्वं तेनासाधारणस्य साध्यतदभावोपस्थापकतया दूषकत्वपक्षे नाव्याप्तिः नचैवमाधिक्ये विभागव्याघातः स्वरूपसतानुगतरूपेण तयागामेत्रीकृत्य महर्षिणा विभा-गकरणात् नचैवं साध्याभावज्ञापकत्वेन बाधप्रकरणसमयो-स्तद्ज्ञापकतयान्येषामुपसंग्रहः कुतोन कृत इति वाच्यं स्वतन्त्रेच्छस्य नियोगपर्य्यनुयोगानर्हत्वात्। तत्र साधार-णत्वं न साध्याभाववद्गामित्वं सर्व्वमनित्यं मेयत्वादित्यनु-पसंहार्य्ये भूर्नित्या गन्धवत्त्वादित्यसाधारणे संयोगादिसा-ध्यकद्रव्यत्वे चातिव्याप्तेः अतएव न साध्यवत्तदन्यवृत्तित्वं नापि निश्चितसाध्यवत्तदन्यवृत्तित्वं साध्यवदन्यवृत्तित्वस्य दूषकत्वेन शेषवैयर्थ्यात् अतएवामुकेनायमनैकान्तिक इत्ये-वोद्भाव्यते ततएव वादिनिवृत्तेश्च न तु सपक्षगतत्वमपि। अनुपसंहार्य्योर्व्यावर्त्त्यौऽन्यथा तस्यैतद्विशेषत्वापत्तिरिति चेत् त्यज तर्हि तमधिकं कृप्तेऽन्तर्भावात्। नापि सप-क्षविपक्षगतत्वं व्यर्थविशेषणत्वात्। विरुद्धोव्यावर्त्त्य इति चेन्न विपक्षगामित्वस्यैव दूषकत्वे तस्याप्येतदन्तर्भावात्। अथ पक्षान्यसाध्यवत्तदन्यवृत्तित्वं साधारणत्वं तेन सर्व-मनित्यं मेयत्वादित्यनुपसंहार्य्ये नातिप्रसङ्गः न च व्यर्थ-विशेषणता घटोऽनित्यो घटाकाशोभयवृत्तिद्वित्वाश्रयत्वा-दित्यनुपसंहार्य्यस्य विरुद्धस्यानैकान्तिकभिन्नस्य व्यवच्छे-द्यत्वादिति चेन्न दूषकताप्रयोजकरूपभेदमन्तरेण भेदस्यै-

पानुपपत्तेः। साध्यवद्वृत्तित्वे सति सर्वसाध्यवदन्यवृत्तित्व मित्यपि न व्यर्थविशेषणत्वात् एकव्यक्तिकसाध्ये तदभावाच्च एतेन हेत्वाभासान्तरव्यवच्छेदार्थं लक्षणान्तरेऽपि विशेषण व्यर्थमिति। अपि च विपक्षवृत्तित्वं साधारण्यं तस्यास्य दूषकत्वात् विरुद्धस्यापि तथाज्ञाने विपक्षवृत्तिताज्ञान- दशायां साधारणत्वम् अन्यथा तस्य हेत्वाभासान्तरतापत्ते रुपाधेरसद्दूषणत्व। सर्वमनित्यं ज्ञेयत्वादित्यनुपसंहारी शब्दो नित्यः शब्दत्वात् भूर्नित्या गन्धवत्त्वादित्यसाधारणश्च वस्तुगत्या साध्याभाववद्वृत्तित्वेन साधारणोऽपि पक्षता- दशायाम् उद्भावयितुं न शक्यतइत्युभयोर्भेदेनोपन्यास।

सर्वसपक्षविपक्षव्यावृत्तोऽसाधारणः। ननु सपक्षस्य न साध्यवत्त्वमात्रस्य विपक्षाद्व्यावृत्तिमतः साध्यवद्वृत्तित्वनियमात् नापि पक्षातिरिक्तसाध्यवत्त्वस्य शब्दोऽनित्यः शब्दत्वादित्यादे- र्व्याप्तिधीदशायामप्यसाधारणतापत्तेः न चेष्टापत्तिः साध- प्रतिरोधी विना व्याप्तिपक्षधर्मतया ज्ञातादनुमितिनि- यमादिति चेन्न सर्वनिश्चितसाध्यवद्विपक्षव्यावृत्तत्वस्य तत्त्वात् शब्दत्वानित्यत्वव्याप्तिग्रहे सति शब्दे साध्यनिश्चया न्नातिव्याप्तिः न च पटोऽयमेतस्मादिति सद्धेतावतिव्याप्ति साध्यसन्देहदशायां तस्य हेत्वाभासत्वात्। यद्यपि भूर्नित्या गन्धवत्त्वादित्यादिर्वस्तुतः साधारणः शब्दो नित्यः शब्द- त्वादितिविरुद्धः शब्दोऽनित्यः शब्दत्वादिसद्धेतुरेव व्याप्ति ज्ञानस्य गुरुपदोपस्थादित्युदाहरणाभावादसाधारणो न

पृथक् तथापि पक्षतादृशाया साध्यतदभावानिश्चयेन तस्य दोषत्वम् अन्यथा पक्षत्वभङ्गप्रसङ्गात् । अथ सर्व्व सपक्षव्यावृत्तिरेव दोषो न विपक्षव्यावृत्तिरपि तस्यानुगुणत्वात् प्रत्युत विपक्षव्यावृत्तत्वेन व्यतिरेकितया परसाध्यसाधकमेवोपन्यस्तं स्यात् न च संशायकतया दोषत्वं तस्योभयव्यावृत्तत्वज्ञानादिति वाच्यं व्याप्तिग्राहकं सहचारज्ञानं तदभावद्वारेण सपक्षव्यावृत्तिमात्रस्य दोषत्वात् किञ्च शब्दोऽनित्यः शब्दत्वादित्युक्ते निवृत्ते तावन्नेदमुद्भाव्यं न्यूनत्वेनैव वादिनिग्रहात् तदुद्भावने वादिनिवृत्तेश्च न च न्यूनत्वे तदुपजीव्यम् असाधारण्यव्यतिरेकेणापि तदुद्भावनात् नच व्यतिरेकिप्रयोगे तदुपन्यासः व्याप्तिपक्षतयोरप्रतिक्षेपेऽविशिष्टाकारत्वात् स्वार्थानुमाने च सर्व्वसपक्षव्यावृत्तिरेव दोषइत्युक्तमिति । उच्यते । शब्दत्वं साध्यवतस्तदभाववतश्च निवृत्तत्वेन ज्ञातमर्थाद्व्यतिरेकितया वा पक्षे साध्यं तदभावञ्च साधयेत् अविशेषात् अन्यथा पक्षवृत्तित्वानुपपत्तिरिति साध्यतदभावोपस्थापकतया स्वार्थानुमानेऽसाधारणोदोषः सत्प्रतिपक्षे द्वौ हेतू तथा अत्र त्वेकएवेति तयोर्भेदः असाधारणेन व्यतिरेकिप्रयोगे परस्य सर्व्वसपक्षव्यावृत्तत्वमात्रमुद्भाव्यं साध्याभावोपस्थापकत्वात् न विपक्षव्यावृत्तत्वमपि प्रतिकूलत्वात् व्यर्थत्वाच्च यद्वा विपक्षव्यावृत्ततया साध्यमिव सपक्षव्यावृत्ततया साध्याभावमपि साधयेदिति दृष्टान्ततया प्रतिबन्धितया च तदुद्भावनमपि

लक्षणन्तु सर्वसपक्षव्यावृत्तत्वं न तु विपक्षव्यावृत्तत्वमपि व्यर्थविशेषणत्वात् विरुद्धमप्यनेनोपाधिनाऽसाधारणमेव अन्यथैतदवगमे विरुद्धत्वाज्ञाने हेत्वाभासान्तरतापत्ते । अनुपसंहार्य्यो नासपक्षविपक्षः सिद्धसिद्धिविरोधात् नापि केवलान्वयिधर्मावच्छिन्नपक्षकः केवलान्वयिसाध्यकस्य सद्धेतुत्वात् व्यतिरेकिसाध्यकस्य तु साध्यतदभाववद्गामित्वेन साधारणत्वात् अन्यथा शब्दादेर्हेतुत्वेनानैकान्तिकता न स्यात् सर्वं क्षणिकं सत्त्वादिति साध्यासिद्धा व्याप्यत्वासिद्धमपार्थकं वा साध्यप्रसिद्धौ तु साधारणमेव न च पक्षान्यसाध्यवत्तदन्यावृत्तित्वं पक्षातिरिक्तसाध्याभाववद्वृत्तित्वं वा साधारणत्वे व्यर्थविशेषणत्वात् न च विरुद्धविशेषणस्य व्यावर्त्तनीयत्वमुक्तं नात्यन्ताभावप्रतियोगिसाध्यकत्वे सति केवलान्वयिधर्मावच्छिन्नपक्षकत्वं सर्वमभिधेयं मेयत्वादित्यत्र विप्रतिपत्त्या पक्षतादशायां पक्षे साध्याभिचारेणानुपसंहारित्वस्याव्यापकत्वात् । अथ पक्षातिरिक्ते व्याप्तिग्रहानुकूलाप्रतीतसहचारोऽनुपसंहार्य्यं यदि च पक्षे व्याप्तिग्रहः कथञ्चित्तदा शब्दोपदर्शितव्याप्तिकानुमानवद्भेदानुमानवच्च सद्धेतुरेवेति चेन्न तथैव सद्धेतावतिव्याप्तेः सर्वस्य पक्षत्वे पक्षातिरिक्ताप्रसिद्धेः असाधारणविरुद्धयोरतिव्याप्तेश्च दूषणतायां व्यर्थविशेषणत्वाच्च न च दूषकतानैकान्तिकत्वेन न प्रत्येकमिति वाच्यम् अर्थगत्या व्यर्थविशेषणत्वात् नापि विप्रतिपत्तिविषयमात्रवृत्तित्वं केवला-

न्वयिसाध्यके अव्याप्तेः सर्वस्य पक्षत्वे मात्राथभावा-
दिति। उच्यते व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावो यत्र
स हेत्वभिमतोऽनुपसंहारी सचान्वयेन व्यतिरेकेण वा
सर्वस्य पक्षत्वे दृष्टान्ताभावात् घटोऽनित्यो घटाकाशोभ-
यवृत्तिद्वित्वाश्रयत्वादित्यादौ साध्यसाधनसाहचर्य्याज्ञाना-
त्तस्य विरुद्धत्वाज्ञानदशायामनुपसंहारित्वेनेष्टत्वात् केव-
लान्वयिधर्म्मावच्छिन्नपक्षको वा सर्वमभिधेयं प्रमेयत्वादि-
तिसद्धेतौ न केवलान्वयी पक्षतावच्छेदको वा निश्चितसा-
ध्यवद्वृत्तित्वात् विप्रतिपत्त्या साध्यानिश्चयदशायां पक्षत्वे
तदनुपसंहार्य्येव व्यतिरेकिसाध्यके साध्याभाववद्वृत्तित्वाज्ञा-
नदशायामिदं दूषणं तदवगमेऽपि साधारणसङ्कर एव एवं
व्याप्यत्वासिद्धेर्ज्ञाने तदुद्भावने चायं व्यभिचारवदुपजीव्य-
त्वाददोषः घटाकाशोभयवृत्तिद्वित्वाश्रयत्वञ्च विरुद्धमेव एते-
नानुपसंहारित्वप्रतिसन्धाने यदि व्याप्तिग्रहस्तदानुमिति-
रेव तदभावे व्याप्यत्वासिद्धिरेवेति निरस्तमुपजीव्यत्वा-
दिति।

विरुद्धो न साध्याभावव्याप्यः संयोगसाध्यके सद्धेताव-
तिव्याप्तेः नापि साध्यवन्निष्ठात्यन्ताभावप्रतियोगिव्याप्यत्वं
तत्त्वम् इदं द्रव्यं गुणवत्त्वादित्यादौ संयोगादिव्याप्येऽति-
व्याप्तेः किन्तु साध्यासमानाधिकरणसाध्याभावव्याप्यः सा-
ध्यवदन्योऽन्याभावव्याप्योवा साध्याभावत्वं साध्यविरोधित्व-
मात्रं भावाभावसाधारणं तेनाभावे साध्येऽभावाभावस्य भा-

पक्षेऽपि साध्यासिः अभावाभावोऽभावप्रतियोगिनिरूप्यत्वेन भावभिन्नएव वा अथ भावत्वेनोपपत्तौ किमधिकेनेति वाच्य बाधक विना भावप्रतीते प्रमाण्यात् अन्यथा अत्यन्ताभावा- न्योन्याभावयोरप्रसिद्धिः । अथ साध्यहेत्वोर्विरोधे पक्षे साध्यसत्त्वे हेत्वसिद्धिः हेतुसत्त्वे साध्याभावसिद्धौ बाध । अथ प्रमाणान्तरेण साध्याभावसिद्धौ बाधो न हेतुत्वेनैवेति वाच्य विशेषणवैयर्थ्यादिति चेन्न हेतौ पक्षे साध्याभाव- बाधानुपस्थापनेऽपि प्रथमोपस्थितविरोधस्यैव उपजीव्यत्वेन दोषत्वात् ननु साध्याभावसम्बन्धो व्यभिचारएव दोषो ननु तन्नियततत्वमपि गौरवात् असाधकत्वे व्यर्थत्वाच्च अथ साध्या- सहचरितस्य साध्याभावसहचरितस्य वा गमकत्वभ्रम- दशायामगतौ विशेषोऽस्ति येनावान्तरविशेषोद्भावकतया न व्यर्थविशेषणता न चानैकान्तिकसामान्यलक्षणे विपक्षगा- मित्व न विशेषणम् असाधारणाद्व्याप्ते साधारणन्तु उभयदर्शित्वसर्वितमिति वाच्य विपक्षगामित्वस्यैव साधा- रणत्वात् अधिकस्य व्यर्थत्वात् न च विरुद्ध व्यावर्त्त्य विपक्ष- गामित्वेनात्यैव सदन्तभावात् । अथानैकान्तिके विपक्ष- सम्बन्धेनैव दूषकताबीजम् असाधारणाद्व्याप्ते न च तत्रान्यदेव बीज हेत्वाभासाधिक्यापत्तेरिति चेदस्तु ताव देव तथापि साधारणे विरुद्धसमावेशो यत्नलेपएव । अन्ये तु विरुद्धलक्षणेन व्यर्थत्व साधारणस्य व्यवच्छेद्यत्वात् साध्य साधकतानुमितौ एतस्यापि व्याप्यत्वात् नीलधूमादौ च

व्याप्तिरस्त्येवेति न स्वार्थानुमाने दोषः परस्य तु व्यर्थत्वमधिकं न च विरुद्धत्वादित्यत्र शब्दाधिक्यमिति तन्न अर्थो हि लिङ्गं न च व्यभिचारावारकविशेषणावच्छेदेनापि व्याप्तिगौरवादिति वक्ष्यते नचार्थानुगत्या व्यर्थत्वेऽपि विरुद्धत्वादित्यत्र उद्भावनाशक्यत्वम् आवश्यकतद्विवेचने तदुद्भावनस्य शक्यत्वादिति हेतुद्वयोपन्यासे चाधिकं प्रथमेन द्वितीयस्य कृतकर्त्तव्यताया दुष्टिवीजत्वात् न च नीलधूमादित्यादौ विशिष्टकर्त्तव्यमन्येन कृतं धूमवत्त्वादित्यनेन कृतमिति चेन्न तथानुपन्यासात् अन्यथा नीलानन्वयापत्तिः। अपरे तु साध्यानवगतसहचारः साध्याभावसहचारी विरुद्धः अन्यथा पृथिव्यां मेयत्वेनेतरभेदानुमानं न विरुद्धं स्यात् साध्याभावाव्याप्यत्वात् न च तत्साधारणं सपक्षासत्त्वात् न च साध्यसहचाराज्ञानदशायां साधारणातिव्याप्तिः तदा तस्यापि विरुद्धत्वादिति तन्न विपक्षगामित्वमात्रं दूषकमित्युक्तत्वात् अतएवाव्यभिचरितो व्यतिरेक्यनैकान्तिकएव नापि साध्याभावसाधकत्वं तत्प्रमापकत्वं वा साध्याभावसम्बन्धबुद्धिं विना तदज्ञानात् नापि साध्यवदन्यत्वव्याप्यत्वं व्याप्यत्वविवेचने व्यर्थविशेषणत्वात् नापि स्वव्यापकाभावप्रतियोगिसाध्यकत्वं साध्याभावस्य हेतुव्यापकत्वप्रतीतौ हेतुसाध्याभावसम्बन्धभानस्यावश्यकत्वात्। उच्यते। साध्यव्यापकाभावप्रतियोगित्वं विरुद्धत्वं न च प्रतियोगिनोरनन्वये भासमान एव तदभावयोर्व्याप्तिग्रहः भिन्नग्राहक-

सामग्रीकत्वात् अन्यथा व्यतिरेकिविलयापत्तेः यद्वा हेतु
मतः साध्यवद्वृत्तित्वं साध्यवद्वृत्तित्वानधिकरणत्वं साध्या-
समानाधिकरणधर्मत्वं साध्यवद्वृत्तित्वानधिकरणधर्मत्वं
वा तत्त्वं न च व्यतिरेक्यव्याप्तिः तत्र साध्याप्रसिद्ध्या
तद्व्याप्यज्ञानविरहात् असाधारण्ये च सद्धेतुत्व धर्मेणापि
रूपेण तस्य दोषत्वात् न च साध्यवद्वृत्तित्वे सति प्रति-
बन्धज्ञानात् साध्याभाववद्गामित्वज्ञानमावश्यकं तेन
विना साध्यवद्वृत्तित्वाज्ञानादिति वाच्यम् उपजीव्यत्वेन
भिन्नत्वात् उपजीव्यस्यापि साध्यवति न वर्तत इति
ज्ञाने न व्यतोद्रूपकमिति चेन्न अव्यभिचारज्ञानस्य विरो-
धितया व्याप्तिग्रहप्रतिबन्धकत्वात् व्यभिचारज्ञानविरो-
धित्वेन व्यभिचारज्ञानवत् । ननु विरुद्धस्य स्वार्थानु-
मानदोषत्वेऽपि परार्थानुमानेऽपार्थकस्य अयोग्यताज्ञानेन
निश्चितानन्वयादिति चेन्न अयोग्यताज्ञानस्य विरुद्धत्व-
ज्ञानोपजीवकत्वेन तस्यैव दोषत्वात् बाधेऽप्येवम् । सचाय
विधिना साधने त्रिविधः साक्षात्साध्याभावव्याप्यत्वात्
साध्यव्यापकाभावव्याप्यत्वात् साध्यव्यापकविरुद्धोपलम्भात्
तथा अधूमवानयं योग्यधूमवत्तया अनुपलभ्यमानत्वात् नि
रग्निकत्वात् जलाशयत्वात् अत्र सर्वत्र साध्यव्यापकविरु-
द्धोपलम्भ इति न द्वैविध्यम् एतज्ज्ञानेऽपि साध्याभावव-
द्व्यापकाभावव्यापकाभावव्याप्यत्वेनापि ज्ञातस्य दोषत्वात् न
च धूमवानयं तदभाववत्त्वादित्यधिक व्यसमानाधिकरणा-

त्यन्ताभावाप्रतियोगित्वं हि व्यापकत्वं तच्चाभेदेऽपि धूमवा-
नयं धूमाभाववत्तयोपलभ्यमानत्वात् तद्वत्तयानुपलभ्यमान-
त्वादित्यनैकान्तिकमेव। निषेधसाधनेऽपि त्रिविधः प्रति-
योग्युपलम्भात् साध्यव्यापकाभावोपलम्भात् साध्यव्यापक-
विरुद्धोपलम्भात् यथा निरग्निकोऽयमग्नित्वात् धूमाभाव-
शून्यत्वात् धूमवत्त्वात् सर्वश्चायं विशेषणद्वारापि यथा क्ल-
ष्णागुरुप्रभववह्निमानयं कटुकासुरभिपाण्डुरधूमवत्त्वात्।
अयञ्च बाधाश्रयासिद्धस्वरूपासिद्धासाधारणसंकीर्णः क्व-
चित्। सत्प्रतिपक्षत्वं न समानबलबोधितसाध्यविपर्य्ययलि-
ङ्गत्वं परस्परप्रतिबन्धेनोभयोरबोधकत्वात् बलञ्च न सपक्ष-
सत्त्वादिव्यतिरेकिण्यभावात् नापि समानव्याप्तिपक्षधर्म्म-
तावत्त्वं विरोधिनैकत्र तद्भङ्गनियमात् नापि व्याप्तिपक्षधर्म्म-
तया ज्ञातत्वं विरोधि व्याप्तिपक्षधर्म्मताविशिष्टज्ञानयोरन्य-
तरभ्रमत्वनियमेन नित्यत्वव्याप्तश्रावणत्वादिवैशिष्ट्याप्रसि-
द्धारोपयितुमशक्यत्वात्। नच साध्यव्याप्यस्य पक्षधर्म्मता
पक्षधर्म्मस्य वा साध्यव्याप्यतारोप्येति वाच्यम् एकत्र तदु-
भयाभावाविशिष्टस्याप्रसिद्धा तद्वैशिष्ट्यस्यारोपासम्भवात्
नाप्यनिर्द्धारितविशेषेण बोधितसाध्यविपर्य्ययत्वम् उभयो-
रबोधकत्वात् विशेषश्च न व्याप्तिभङ्गाभङ्गरूपः एकत्र तद्भ-
ङ्गनियमात्। उच्यते। साध्यविरोध्युपस्थापनसमर्थसमान-
बलोपस्थित्या प्रतिरुद्धकार्य्यलिङ्गत्वं तत्त्वं बलञ्च व्याप्तिपक्ष-
धर्म्मते विरोधिबोधकान्यगमकतौपयिकरूपसम्पत्तिमत्तया

बाध्यमानेन प्रतिरुद्धकार्य्यत्वं वा तस्य व्यापकतया व्याप्तिपक्षधर्म्मत्वमुभयथापि सिद्धं बाधेन तदभावानुपन्यासात् द्वितीयस्य तत्त्वमन्यतरासिद्धमिति प्रथमेन द्वितीयं बाधितमिति न्यायानुमानएवायं दोषः इत्येके तन्न एकत्र निरन्तरयोर्भयोर्व्याप्तिपक्षधर्म्मतया ज्ञातयोः प्रतिपक्षत्वात् युगपदुपस्थितेः कारणवशेन स्वपरसाधारणत्वात् । अथ वस्तुनोऽद्यात्मकत्वेन व्याप्तिपक्षधर्म्मताभङ्गः एकत्रावश्यक इति बाध एव दोषः । न च तयोर्विरोधभङ्गेऽप्युपपत्तेर्व्याप्त्यादिभङ्गनियम इति वाच्यम् अविरोधेऽप्यनुमित्यविरोध विरोधे तु व्याप्तिभङ्गनियमादिति चेन्न प्रतिरुद्धत्वज्ञानानन्तरं व्याप्त्यादिभङ्गज्ञानमित्युपजीव्यत्वेन व्यभिचारस्यस्यापि दोषत्वात् । ननु साध्यतदभावयोरपि तद्व्याप्यमात्रवाधितयोर्विरोधादैक्यं न निश्चयः किन्तु संशय निश्चये चान्यतरव्याप्तिसंशय इति व्याप्त्यसिद्धिरिति चेन्न उभयोरैक्य निश्चयानन्तरमन्यतरव्याप्तिसंशय इत्युपजीव्यत्वेनास्य भिन्नत्वात् दूषकतावीज समबलविरोधिसामग्रीप्रतिबन्धेन निर्णयाजनकत्वं न तु व्याप्तिपक्षधर्म्मताविरह एव सद्धेतावपि सत्प्रतिपक्षत्वात् एकत्र व्याप्तिभङ्गज्ञानद्वारा चास्य दूषकत्वं पक्षरादेव नानुमानेन प्रतिरोधः तदुपस्थितावपि पक्षदर्शनेन तस्याधिकबलत्वात् । नन्वेवं वादिवाक्यमात्रस्य प्रतिरोधकत्वेनानुमानमात्रोच्छेदः न च विरोधिवाक्यस्य न्यूनबलत्वे सत्प्रयोगः समा-

रैकदानुत्पादात् कथं प्रतिरोधः क्रमोत्पन्नयोरैकदासत्त्वादिति चेन्न एकानन्तरमपरहेतुव्याप्ति पक्षधर्मताज्ञानाभ्यामग्निसव्याप्तिविशिष्टज्ञानोत्पत्तिकाले पूर्व्वपरामर्शनाशात् न चोभयहेतुव्याप्तिपक्षधर्मताज्ञानानां परस्पराप्रतिबन्धात् परामर्शोत्पाद इति वाच्यं व्याप्त्यादिज्ञानचतुष्टययौगपद्याभावात्। यत्तु व्याप्तिद्वयसंस्कारोद्बोधकहेतुद्वयज्ञानयोः परस्परप्रतिबन्धात् नोभयव्याप्तिस्मृतिरिति दूषकताबीजं तन्न व्याप्तिस्मृतिं विना सत्प्रतिपक्षाभावात् वादिभ्यां व्याप्त्युद्भावनाच्चेति। मैवम्। हेतुद्वयसन्दर्शनाद्युगपदुभयव्याप्तिस्मृतावुभयपरामर्शरूपं ज्ञानमुत्पद्यते अतएकदा विरुद्धकार्य्यद्वयकारणान्नैकमपि कार्य्यमुत्पद्यते तादृशपरामर्शस्य स्वार्थानुमाने प्रत्यक्षादितः परस्य तु वाद्युपन्यस्तन्यायोत्थापित प्रमाणात्। अस्य केवलान्वयिन्यपि सम्भवः घटोऽभिधेयः प्रमेयत्वादित्यत्राभिधेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगिजात्यन्यत्वे सति घटमात्रवृत्त्यन्यधर्मत्वात् घटान्योऽन्याभाववत् पटरूपवच्च घटनिष्ठात्यन्ताभावोऽभिधेयत्वप्रतियोगिकः घटवृत्तिनित्याभावत्वात् घटनिष्ठान्योऽन्याभाववदिति विशेषादर्शनदशायां नच पक्षैक्यमपि तन्त्रं विरोधस्यैव दूषकत्वेऽधिकस्य व्यर्थत्वात्।

असिद्धिस्तु न व्याप्तिपक्षधर्मताविरहः प्रत्येकमननुगमात्। अथ प्रत्येकाभावानुगतो व्याप्तिपक्षधर्मताविशिष्टाभावोऽसिद्धिः यद्यपि विशिष्टस्यान्यत्वे प्रत्येकाभावाव्याप्ति-

रयसिद्धान्तश्च अनन्यत्वे प्रत्येकाभावएव स इत्यननुगम स्तथापि विशेषणावच्छिन्नप्रतियोगिको विशेष्याभावो विशेषणविशेष्यसम्बन्धाभावो वा विशिष्टाभावोऽनुगत इति चेन्न विशिष्टाभावाज्ञानेऽपि व्याप्यादिप्रत्येकाभावज्ञाने तज्ज्ञाने चानुमितिप्रतिबन्धो वादिनिग्रहश्चेति तत्प्रत्येकाभावव्याप्ति' अन्यथा तेषां हेत्वाभासान्तरतापत्तेः न च विशिष्टाभावधीद्वारा प्रत्येकाभावोदोषो सम्भवतइति वाच्य प्रत्येकाभावस्य स्वतएव दोषत्वसम्भवात् । वस्तुतो विशिष्टाभावो दोषएव न प्रत्येकस्य समर्थत्वे तेनैवान्यथासिद्धेर्व्यर्थविशेषणत्वाच्च प्रत्येकाभावप्रज्ञात्या न विशिष्टाभावज्ञानमित्युपजीव्यत्वाद्विशिष्टाभावानुद्भावनेऽपि प्रत्येकोद्भावने वादिनिवृत्ते अतएव व्याप्तिपक्षधर्मताविशिष्टज्ञानविषयाभावत्व प्रत्येकाभावानुगतमसिद्धत्व व्यभिचाराद्यायसिद्धत्वेऽप्युपजीव्यत्वेन प्रायव्याप्तइद्भावने वादिनिवृत्तेश्च स स्वतएव दूषक' तत्र व्याप्यसिद्ध्यर्थमुपाधौ तदुद्भाविते विप्रतिपद्यतेऽपि तस्य दुर्ग्रहत्वात् व्यभिचारेणैव तदन्वयाच्च यदि च व्यभिचारादिकमज्ञात्वाप्यसिद्धिबुद्धि तथाप्युपजीव्यसङ्करेऽप्युपाधेरसङ्करएवेति निरस्त व्यर्थविशेषणत्वादेव एतेन व्याप्तिपक्षधर्मतान्यतराभावोऽसिद्धिरिति प्रत्युक्तम् अन्यतरत्वाज्ञानेऽपि प्रत्येकाभावस्य दोषत्वात् व्यर्थविशेषणत्वाच्च । यत्तु व्याप्तिपक्षधर्मताप्रमितिविरह आश्रयासिद्धाद्यनुगतोऽसिद्धि तत्र मितिसत्त्वे तत्राऽनुमित्यापत्तेरिति तदपि व्यर्थविशेषण-

त्वात् तदज्ञानेऽपि प्रत्येकज्ञानस्य दोषत्वाच्च निरस्तं वस्तु-तस्तु प्रकृतहेतुव्याप्तिपक्षधर्मतावैशिष्ट्यस्य तत्प्रमितेश्चाप्रसिद्धा तदभावो ज्ञातुमुद्भावयितुञ्चाशक्यएव । यत्किञ्चिद्व्याप्तिपक्षधर्मताविशिष्टप्रमितिविरहः सद्धेतुसाधारणः स्वप्रमितिविरहो यत्किञ्चित् प्रमितिविरहो वा सद्धेतावपि सकलतत्प्रमिविरहो दुर्निरूपः व्याप्त्याद्यभावादेव तद्ग्रहे सएव दोष उपजीव्यत्वात् यदि च प्रमितिविरहः स्वरूपसन्नेव दोषः कारणाभावत्वात् तदा व्याप्त्यादिभ्रमादनुमितिर्न स्यात् न स्याच्च हेत्वाभासता ज्ञानगर्भतल्लक्षणाभावात् एतेन व्याप्तिप्रमितिपक्षधर्मताप्रमितिविरहान्यतरत्वमसिद्धिः अन्यतरत्वञ्च तदन्यान्यत्वं तेनोभयविरहेऽपि नाव्याप्तिरिति निरस्तं व्यर्थविशेषणत्वादेव । स्यादेतत् व्याप्तिपक्षधर्मताभ्यां निश्चयोऽसिद्धिः अतएवाव्याप्तेऽपक्षधर्म्मे च तदारोपरूपासिद्धिरित्यनुमितिः नतु व्याप्तपक्षधर्म्मादपि तदनिश्चये न चैवं हेतोरप्याभासत्वं तदाभासस्यापि हेतुत्वं स्यात् दशाविशेषदुष्टत्वात् सेयं स्वरूपसती दूषिका कारणाभावत्वात् न च व्याप्त्यादिप्रत्येकनिश्चयाभावएव दूषक आवश्यकत्वादिति वाच्यं विशिष्टनिश्चयस्य हेतुत्वे तदभावस्य कार्य्यानुत्पादकत्वादिति । मैवम् । एवं सव्यभिचारादेरप्यत्रैवान्तर्भावप्रसङ्गात् असिद्धेः स्वरूपसतएव दोषत्वे स्वज्ञानार्थं व्यभिचाराद्यनुद्भावनात् यदि च तस्मात् सिद्धिर्नोपपद्यतइति तस्योपजीव्यत्वं तदाश्रयासि-

धादिज्ञानात् सिद्धिर्नेति कथम् एवं दोषः स्यात् असिद्धि-
र्ज्ञातापरस्योन्नायकेति स्वज्ञानार्थमुन्नायिकासिद्धिर्भिन्नार्थं
साध्याप्रसिद्ध्यादिज्ञानमावश्यक कथञ्च हेतुतदाभासविवेक
सिद्धौ द्वयोरपि हेतुत्वात् असिद्धौ तदा भासत्वात् व्यभि
चारादे सद्धेतौ सिद्धिमत्पक्षत्वस्य च हेत्वाभासत्वाभावात्।
अथ सुषुप्तौ जागरेऽपि व्याप्तिपक्षधर्मतासत्त्वे तदनिश्चये
ऽनुमित्यनुत्पादो हेत्वाभासप्रयोज्यः व्यभिचारादौ तथा-
वधारणादित्यसिद्धिज्ञानादपि हेत्वाभासः न चैव हेत्वा-
भासाधिक्य मृषान्तर्भावो वा तेन रूपेण व्याप्यसिद्ध्यादेरेव
दुष्टत्वादिति चेन्न एवं सव्यभिचारादेरप्यसिद्धिः स्यादित्यनु-
क्तत्वात् अपर्यालोचनादिदशायां साध्याप्रसिद्ध्यादेरपि एवम् स्यात्
सुषुप्त्यादावनुमित्यभाव कारणाभावात् कार्यानुत्पादो हि
न प्रतिबन्धकसाध्यात् किन्तु कारणाभावोऽपि अस्त्यपि
प्रतिबन्धके सहकारिभावेन कार्यानुत्पत्तेः अथानुमित्यनुत्पादो
हेत्वाभासप्रयुक्त एवेति चेत् तर्हि सुषुप्तौ मनोयोगादिरपि न
हेतुः हेत्वाभासादेरनुमित्यनुत्पादे तद्व्यतिरेकेणानुमि-
त्यनुत्पादाभावात् किन्त्वेव तद्धेतुत्वे चरमकारणमेव
हेतुः स्यात् अन्ये तु गमकतौपयिकप्रतिद्वन्द्विव्याप्तिपक्षध-
र्मताविरहतन्निश्चयोरन्यतरत्व हेत्वाभासत्व तत्राधिकस
नामभेदौ बाधप्रतिरोधौ प्रतिद्वन्द्विनौ व्याप्तिपक्षधर्मता-
विरहश्चासिद्धिः तन्नियतौ च व्यभिचारविरुद्धौ तथान-
योरप्यसिद्धान्तर्भाव व्याप्तिविरहनिश्चयत्वेन ज्ञानतो

स्वातन्त्र्येणैव दूषकत्वात् भ्रमे विशेषदर्शनस्यैवेति तन्न अत्रापि व्याप्तिपक्षधर्मताविरह एवासिद्धिः पर्यवस्यति तत्र चोक्तमेवान्यतरत्वञ्च न लक्षणं व्यर्थविशेषणत्वात् हेत्वाभासान्तरवहिष्कृतस्य व्याप्तिपक्षधर्मतानिश्चयविरोधिनो रूपस्य विवक्षितत्वात् तच्चाश्रयासिद्ध्यादिकमेवेति। उच्यते आश्रयासिद्धिः स्वरूपासिद्धिः व्याप्यत्वासिद्धिः प्रत्येकमेव दोषः प्रत्येकस्य ज्ञानादुद्भावनाच्चानुमितिप्रतिबन्धात् नतु विशिष्टाभावः परामर्शविषयाभावो वा व्यर्थविशेषणत्वात् तस्य ज्ञानमुद्भावनं विनाप्यनुमितिप्रतिबन्धात् अनुभवसिद्धे हि लक्षणं नतु लक्षणानुरोधेनानुभवकल्पना परामर्शविषयाभावत्वेनानुगतेन त्रयाणामसिद्धत्वेन संग्रहो महर्षिणा कृत इति न विभागविरोधो हेत्वाभासाधिक्यं वा अतएव ये व्याप्तिविरहपक्षधर्मताविरहरूपास्तेऽसिद्धिभेदमध्यमध्यासते तदन्ये च यथायथं व्यभिचारादय इति सिद्धान्तप्रवादोऽपि न चैवं साक्षात्प्रतिबन्धकत्वेन बाधप्रतिबोधयोर्व्याप्तिविरहलिङ्गत्वेन सव्यभिचारविरुद्धयोरपि संग्रहे विभागव्याघातः स्वतन्त्राभिप्रायस्य निषेद्धुमशक्यत्वात् अन्यथा शास्त्रे परिभाषोच्छेदापत्तेः सव्यभिचारादेरप्येवं रूपसत्त्वेऽप्युपजीव्यत्वेन पृथक्त्वम् उपधेयसङ्करेऽप्युपाधेरसङ्करात्। नन्वाश्रयाप्रसिद्धा कथमाश्रयासिद्धिरुद्भाव्या न च शशीयतया गवि शृङ्गनिषेधवत् व्योमकमलमिति वाच्यं शशशृङ्गनिषेधो न गवीत्युक्त्वा-

दिति चेत् व्योमकमलमिति निश्चितानन्वयत्वेनापार्थकम् आश्रयविशेषणासिद्धा आश्रयासिद्धिरसङ्कीर्णा । व्याप्ति-विरहश्च व्यर्थविशेषणादौ तदुक्तमेकासिद्धि दुष्परिहरतो द्वितीयापत्तिरिति उपाधिस्तु न व्याप्तिविरहः वह्निव्यापकधूमाव्यापकधर्म्मस्यासिद्धा धूमे तद्विरहासिद्धेः किन्तु यावत्स्वव्यभिचारिव्यभिचारि साध्यसामानाधिकरण्यमनौपाधिकत्वं व्याप्तिः साध्यव्यापकसाधनाव्यापकधर्म्मान्तरं न तद्विरहः अपि तु तन्नियमतः न चैवमुपजीव्यत्वेन उपाधिर्हेत्वाभासान्तरम् उपजीव्यत्वेऽपि स्वतोदूषकत्वेन तदर्थं परमुपयोगकत्वात् नहि साध्याव्यापकत्वमनुमितिविरोधि किन्तु व्यभिचारोन्नयनेन स्वव्यतिरेकेण सत्प्रतिपक्षतया वा तदाह उपाधावपश्य व्यभिचार उपाधेरेव व्यभिचारशङ्केति अप्रयोजकान्यथासिद्धौ सोपाधी नासिद्धौ प्रतिकूलतर्कानुकूलतर्काभावावुपजीव्यत्वे सति स्वतोदूषकावपि न हेत्वाभासौ स्वरूपसतोरेव प्रतिबन्धकत्वादित्युक्तम् ।

बाधो न साध्याभाववत्पक्षकत्वं पक्षवृत्त्यभावप्रतियोगिसाध्यकत्वं वा पक्षे साध्याभावज्ञानमात्रस्य प्रमात्वज्ञानं विना अधिकबलत्वाज्ञानेन बाधाभावादिति वाच्यम् अतएव साध्याभाववत्पक्षवृत्तित्वमपि न असिद्धिसङ्कीर्णबाधाव्याप्तेश्च किन्तु साध्याभाववत्त्वप्रमाविषयपक्षकत्वं प्रमितसाध्याभाववत्पक्षकत्वं पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यकत्वं वेति विवक्षितविवेकेन साध्याभावप्रमैव दोषः सा च

प्रमात्वेन ज्ञाता न स्वरूपसती हेत्वाभासत्वात् प्रमात्वज्ञानं विना अधिकबलत्वाभावेनादोषत्वात् अप्रमायामपि प्रमात्वज्ञानेऽनुमितिप्रतिबन्धाच्च। अथ साध्याभाववति पक्षे हेतोः सत्त्वज्ञाने व्यभिचारः तदज्ञानेऽसिद्धिः संशययोग्यत्वाभावेन पक्षत्वाभावादाश्रयासिद्धिश्च न च पक्षभिन्ने व्यभिचारो दोषः व्यर्थविशेषणत्वात् सर्व्वोपसंहारप्रवृत्तव्याप्तेः साध्याभाववति साधनमित्यवगमादेव भङ्गात् न चैवं सन्दिग्धसाध्यदृष्टान्ते सन्दिग्धानैकान्तिकवत्पक्षे व्यभिचारसंशयादनुमानमात्रोच्छेद इति पक्षे साध्यसंशयोऽनुमानाङ्गमिति व्याप्तस्य पक्षधर्मताज्ञानादनुमित्युत्पादेन संशयनिवृत्तेः अन्यथा विशेषदर्शनस्य संशयविरोधिता भज्येत न च पक्षे साध्याभावं प्रतीत्य व्यभिचारज्ञानमित्युपजीव्यत्वाद्बाधः पृथक् पक्षे साध्याभावप्रतीतिरेव हि साध्याभावहेत्वोः सम्बन्धोल्लेखनीत्येकवित्तिवेद्यत्वेन नोपजीव्यत्वम् अन्यथा बाधदशायां पक्षे हेतोरज्ञानादसिद्धिरेव न चोद्भावितव्यभिचारनिर्व्वाहाय बाधोद्भावनमावश्यकमित्युपजीव्यत्वं व्यभिचारोद्भावने परं कथन्ताऽनावश्यकत्वात् तत्त्वे वा तन्निर्व्वाह्यत्वेव दूषणं क्लृप्तत्वात् वह्निरुष्णः कृतक इत्युद्भावनाद्वह्निरुष्ण इत्युद्भावने लाघवमितिबाधः पृथगिति कश्चित् तन्न पक्षे साध्याभावगमा स्वार्थानुमाने यदि न दोषः तदा परं प्रत्यपि न स्यादविशेषादिति तदुद्भावनस्य दूरनिरस्तत्वात्। अथोपनीतकाञ्चनमयत्वविशिष्टवह्न्यनु-

प्रतिज्ञा तदा अर्थान्तरं सामान्यविप्रतिपत्तौ तु नेतरत्
बाधकापेक्षेति वाच्यं स्वार्थानुमानएवैवं बाधासङ्करस्योक्त-
त्वादित्यपास्तम् अनुमित्यप्रतिबन्धेन तत्र बाधस्यादोषत्वात्
ननु पक्षे साध्याभावग्रहवत्साध्याभावव्याप्यग्रहोऽपि दूषको-
विरोधित्वाविशेषात् तथाच साध्याभावसम्बन्धो व्यभिचारः
साध्याभावव्याप्यसामानाधिकरण्यं बाधः साध्याभावव्या-
प्यञ्च वह्नित्वादिकमेवेति चेत् न पक्षे हि साध्याभावे ज्ञाय-
माने ज्ञाते वा यदि साध्याभावव्याप्यसामानाधिकरण्य-
बुद्धिस्तदा व्यभिचारएव। अथ पक्षे साध्याभावबुद्धिं विनैव
सा तर्हि हेतुसाध्याभावव्याप्ययोरगृह्यमाणविशेषयोः सत्प्र-
तिपक्षत्वम्। अथ तुल्यबलेन सत्प्रतिपक्षोऽधिकबलेन बाध
इति चेन्न गमकतौपयिकरूपसाकल्यं हि बलं तच्च द्वयोर्ज्ञात-
मिति कथं न सत्प्रतिपक्षत्वं गमकताबहिर्भूतञ्च न बलम्।
अथ साध्याभावव्याप्यबुद्धेरनन्यथासिद्धत्वं बलं तदा ततः
साधनवति पक्षे साध्याभावानुमितावनैकान्तिकत्वमेव पक्षे
साध्याभावग्रहवदिति यदुक्तं तदप्यसिद्धं तस्य दोषत्वानभ्युप-
गमात् अन्यथा हेत्वाभासान्तरतापत्तिः। अथ हेतुतः
साध्यसिद्धिसम्भावनायां व्यभिचारासिद्धिः बाधेन हेतो
रसाधकत्वे सिद्धे व्यभिचारसिद्धिरित्युपजीव्यत्वाद्बाधः पृथक्
अन्यथा हेतोरसाधकत्वे सिद्धेः साध्यसिद्धिसम्भावना-
विरहाद्व्यभिचारबुद्धिः तस्याञ्च सत्या हेतोरसाधक-
त्वधीरित्यन्योऽन्याश्रय इति चेन्न साध्यसिद्ध्युन्मुखहेतु-

ज्ञानस्य प्रमितसाध्याभावसहचरितहेतुविषयत्वेन व्यभि-
चारज्ञानतया दूषकत्वात् तथापि व्यभिचारे साध्याभाव-
प्रमा तन्त्रं तां विना तदभावादिति सैव दोष इति चेत्
सत्यं किन्तु साध्याभावप्रमाव्यभिचारज्ञानत्वेन दूषिका
क्लृप्तत्वात् न स्वतन्त्रा अतएव पक्षे साध्याभावज्ञानत्वेन
प्रतिबन्धकत्वं नतु साध्याभावसमानाधिकरणसाधनज्ञानत्वे-
नेति प्रत्युक्तं तस्य लघुत्वेऽप्यक्लृप्तत्वात्। अप्रत्यक्षादौ
प्रमामात्रं प्रति स्वातन्त्र्येण बाधो दोषत्वेन क्लृप्त इत्यनु-
मितावपि स एव दोष इति चेन्न अन्यत्र तथा दूषकत्वा-
कल्पनात्। उच्यते। पक्षे साध्याभावनिश्चयः साध्याभाव-
ज्ञानप्रमात्वनिश्चयात् ज्ञानमात्रादर्थनिश्चये प्रामाण्यग्रह-
वैयर्थ्यं भ्रमत्वेन ज्ञातादर्थनिश्चयप्रसङ्गश्च तथा चोपजीव्य-
त्वेनाधिकबलत्वेनया पक्षे साध्याभावज्ञानस्य प्रमात्वनिश्चये
सव्यभिचारो मान्यथा उभयथापि साध्याभावनिश्चयाधीनव्य-
भिचारज्ञानात् पूर्वं ज्ञातं साध्याभावज्ञानप्रमात्वमेव दोष
उपजीव्यत्वात्। यदि च पक्षे साध्याभावज्ञानस्य प्रमात्व-
निश्चयो नानुमितिविरोधी तदा व्याप्तिपक्षधर्मतया हेतु-
ज्ञानं विशेषदर्शनत्वेन पक्षे साध्याभावज्ञानं परिभूय साध्यं
साधयेदेव पर्वते धूमइव वह्निं न च साध्याभावबुद्धिरेवा-
ऽदृश्यमाणविशेषा सत्प्रतिपक्षवत् प्रतिबन्धिकेति वाच्यं रजते
नेदं रजतमिति ज्ञानेऽपि विशेषदर्शनेन रजतत्वस्य शङ्को
पीतत्वज्ञाने शुक्तित्वस्य चानुमानात् वादिवाक्येन पक्षे साध्या

भावज्ञानादनुमानोच्छेदप्रसङ्गाच्च। अथ पक्षे साध्याभाव-प्रमैव साध्याभावहेतुविषया व्यभिचारज्ञानत्वेन दोषो न तस्याः प्रमात्वज्ञानमपीति चेत् तर्हि प्रमायाः अ-प्रमात्वज्ञाने भ्रान्तानुमितिर्न स्यात् न स्याच्च पक्षे साध्या-भावज्ञानप्रमात्वभ्रमादनुमितिप्रतिबन्धः। ननूपजीव्यत्वे-ऽप्यत्र साध्याभावप्रमेति ज्ञानं न स्वतोदूषकं क्लृप्तत्वात् पक्षे साध्याभावनिश्चयं कुर्व्वत् व्यभिचारज्ञानद्वारेति चेन्न अत्र साध्याभावप्रमेति ज्ञानान्नियमतः साध्यज्ञानानुदयात् तस्यैव प्रतिबन्धकत्वात् शब्दादौ तथा दर्शनात् साध्याभावप्रमा-विषयवृत्तित्वस्य हेतुवृत्तित्वादसाधकत्वेन साध्याभावप्रमाया हेत्वाभासत्वं साधारण्येऽपि ज्ञायमानं सत् यदनुमितिं प्रति-बध्नाति तस्यैव हेत्वाभासत्वं न च साध्याभावप्रमा नेति नि-श्चयदशायां पक्षे साध्याभावहेतुज्ञानाद्व्यभिचार इति वाच्यं प्रमात्वज्ञानस्य साध्याभावनिश्चयहेतुत्वेन तद्दशायां तद-भावात्। पक्षधर्म्मताबलेन प्रसिद्धं बाधान्न सिध्यतीति बाधः पृथक्। प्रसिद्धाभाववति पक्षे व्यभिचारान्न तत्सिद्धिरिति चेत् तर्ह्यसत्प्रसिद्धाभाववति सपक्षे व्यभिचारात् तमपि न साधयेत् तदज्ञानात्तत्साधनेऽनुमितिरप्रमा स्यात्। अथ पक्षवृत्तेरन्यएव धूमादिः सपक्षे तर्हि गोत्वपृथिवीत्व द्रव्य-त्वादेरप्रसिद्धसास्नानुमानं न स्यात् सास्नादिमत्येकव्यभि-चारात् यदि च साध्यत्वावच्छेदकसास्नात्वादिसामान्याव-च्छिन्नप्रतियोगिकाभाववति न गोत्वादिकमिति न व्यभि-

चारः तर्हि धूमेऽप्येव व्यभिचाराभावात् साध्यतावच्छेदकेन प्रकारेणाप्रसिद्धमिव प्रसिद्धमपि साध्य धूमगोत्वादिक साधयेत् यदि बाधोदयइति चेत्‌म् । साध्याभाववग्गामित्वरूपचारेण व्यभिचारः साध्यप्रागभावध्वंसवद्वृत्तित्वेन व्यभिचारितया पृथिवीत्वादिना गन्धादेः द्रव्यत्वादिना गुणस्यानुमानभङ्गप्रसङ्गात् किन्तु साध्यात्यन्ताभाववद्गामित्वम् एवञ्च स प्रागभावप्रध्वंसाधिकरणसदाश्रये तत्प्रतियोगिसाधने पक्षे व्यभिचारेणेति बाधोद्भूषणम् अथावच्छेदो सिद्धसाधनम् अवच्छेदके हेत्वसिद्धिः विशिष्य नान्यदिति चेत् तर्हि प्रागभावप्रध्वंसप्रतियोगिनोरेकवृत्तित्वेनैकसमयतापि स्यात् । अथ यत्समयावच्छेदेन तत्र प्रागभाव प्रध्वंसौ न तत्समयावच्छेदेन प्रतियोगीति चेत् तर्हि तदवच्छेदेन प्रतियोगिसाधने न सिद्धसाधन किन्तु बाधएव अन्यथाभावात्यन्ताभावयोरप्यव्याप्यवृत्तित्वभङ्गः एकवृत्तित्वात् अवच्छेदकभेदेन वृत्तिरिहापि तत्र देशभेदोऽवच्छेदकोऽत्र तु समयभेदइति । असिद्धेरपि बाध एवोपजीव्यः न चैवमुपजीव्यत्वाद्बाधवत् सिद्धसाधनमपि पृथक् उपजीव्यत्वेऽपि स्वतोऽदूषकत्वात् नहि साध्यज्ञान तद्बुद्धिविरोधि धारावाहिकज्ञानोदयात् नाप्यनुमितिविरोधि अनुमित्सया प्रत्यक्षसिद्धेऽप्यनुमानदर्शनात् तदुक्त प्रत्यक्षदृष्टमप्यनुमानेन बुभुत्सन्ते तर्करसिका इति श्रवणानन्तर मननदर्शनाच्च तस्मात् सिषाधयिषाविरहसहकृतसिद्धिः सिद्धिमात्रार्थिनः सिद्धौ न तदिच्छा सिद्धिविशेषार्थिनः

स्तीति तस्यानुमितिरेव एवञ्च सिषाधयिषितपक्षविघट-
नद्वारा सिद्धसाधनं दूषणं न स्वतः नन्वभावधीरपि न
भावधीप्रतिबन्धिका नेदं रजतमिति भ्रमानन्तरं रजतनि-
श्चयात् न चाभावप्रमा तथा अपीतः शङ्ख इति प्रमापयतएव
पीतोऽयमिति भ्रमदर्शनादिति चेन्न विरोधिज्ञानं हि
प्रतिबन्धकं प्रत्यक्षभ्रमस्य च प्रत्यक्षप्रमा विरोधिनी सा
शङ्खादौ नास्त्येव अनुमितौ त्वभावप्रमामात्रमेव विरोधीति
कथमभावप्रमायां भावानुमितिरिति। स चायं दशविधः
धर्म्मिग्राहकमानबाधितं घटोव्यापकः सत्त्वादिति प्रत्यक्षेण
परमाणवः सावयवा मूर्त्तत्वादित्यनुमानेन मेरुः पाषाण-
मयः पर्व्वतत्वादिति सुवर्णमयत्वबोधकागमेन साध्यप्रति-
योगिग्राहकबाधितं वह्निरनुष्णः कृतकत्वादिति प्रत्यक्षेण
शब्दोऽश्रावणो गुणत्वादित्यनुमानेन गवयत्वं गवयपदाप्र-
वृत्तिनिमित्तं जातित्वादित्युपमानेन साध्यग्राहकबाधितं
नरशिरः कपालं शुचि प्राण्यङ्गत्वादित्यत्रागमेन हेतुग्राह-
कबाधितं जलानिलावुष्णौ पृथिवीतो विपरीतस्पर्शत्वात्
तेजोवदिति प्रत्यक्षेण मनोविभुज्ञानसमवायाधारत्वादित्य-
नुमानेन राजसूयं ब्राह्मणकर्त्तव्यं स्वर्गसाधनत्वादग्निष्टोम-
वदिति राजसूयकर्त्तव्यताबोधकागमेनेति। अथ हेत्वाभा-
सानाम् साधकतासाधकत्वेन सद्धेतुमत्त्वं जात्यादीनां
स्वासाधकतासाधारण्येन परासाधकतासाधकतया स्वव्या-
घातकत्वादसद्धेतुमत्त्वम् अथ विरुद्धत्वादिज्ञानादेव स्वानु-

मितेरपि परानुमिते प्रतिबन्धे किमसाधकतानुमानेन यद्यपि वादुकदूषणावगमे स निगृहीत इति समयबन्धेन कथाप्रवृत्तौ दूषणमात्रमुद्भाव्यमन्यथार्थान्तरत्वादिति चेन्न इह स्वहेतुः परानुमितिप्रतिबन्धः स्थापनाया असाधकता-साधनत्वस्य तत्त्वाद्य दूषणमात्रज्ञानादेव द्वितीयस्य प्रति-हत्वज्ञापनात् प्रतिबन्धकत्ववदनेनापि रूपेण दूषकत्वस-म्भव इत्यभिप्रायेण वा साधकतासाधन नन्वेव पञ्चावयवा-पेक्षा स्यात् अन्यथा न्यूनतापत्तिरिति चेन्न दूषणस्यासाध-कताव्याप्यत्वमङ्गीकृत्य कथेति पक्षधर्मताया एवोद्भाव्यत्वात् अन्यथा अधिकतापत्ते नन्वेव कृतकत्वेनानित्यत्वानुमाने व्याप्तिर्नाभिधेया उभयसिद्धत्वादिति चेन्न कथाङ्गस-मयविषयतया दूषणेष्वसाधकताव्याप्यस्योपस्थितेरावश्यकत्वात् अन्यथा कथकत्वविरोधात् नन्वेव कृतकत्वे तद्व्याप्तिमनङ्गी-कृत्यापि कथासम्भवात् यस्तु कथारम्भेऽसाधकत्वव्याप्तिं ना-ङ्गीकरोति स प्रति तद्दूषणस्य प्रसाध्य पञ्चावयवप्रयोग क-र्त्तव्य एव यत्तु दूषणे पक्षधर्मतामात्रमुद्भाव्य तत्र यस्य वादि-नोस्तथा समयोऽन्यत्र तु पञ्चावयवप्रयोग एवेति तन्न कथा-सम्प्रदायविरोधात् । अथासाधकत्वं न पक्षे साध्यप्रत्ययाज-नकत्वं तेनापि तस्येनाज्ञानदशायां पक्षे साध्यभ्रमजननात् कदाचिदजनकत्वं सहेतावपि नन्वेतत्काले साध्यविशिष्टप-क्षधर्म्मिज्ञानाजनकत्वं तत् न हि दूषणत्वज्ञानदशायां पक्षे भ्रमरूपाप्यनुमितिः साध्यविशिष्टपक्षज्ञानस्य हेतुत्वेन

ज्ञानदशायां प्रसिद्धमिति चेन्न सद्धेतावसत्प्रतिपक्षदशाया-मपि पूर्व्वकाले साध्यविशिष्टपक्षज्ञानाजनकत्वमस्तीत्यसाध-कताप्रसङ्गात्। अथ पक्षे साध्यभ्रमजनकत्वं तत् बाध-विरुद्धयोरपि तत्त्वाज्ञानदशायां भ्रमजनकत्वादिति चेन्न सद्धेतौ सत्प्रतिपक्षेऽसाधारणे च तत्त्वेन ज्ञानदशायां साध्यभ्रमजनकत्वात् अज्ञाने साध्यप्रमाजनकत्वात् नापि व्याप्तिपक्षधर्म्मतान्यतरराहित्यं सत्प्रतिपक्षासाधारणसद्धे-तोरभावात् दशाविशेषे तस्य तद्दोषत्वात् साध्यप्रसिद्धौ प्रकृतसाध्यव्याप्यप्रसिद्धेश्च नाप्यनैकान्तिकाद्यन्यतमत्व यत्कि-ञ्चिदनैकान्तिकत्वस्यातिव्याप्तेः प्रकृतसाध्यानैकान्तिकत्वस्या-प्रसिद्धत्वेन केवलान्वयिसाधनेऽप्रसिद्धेः सङ्गतः सिद्धसा-धनात् साध्याविशेषस्य। यत्तु एतत्कालीनएतत्पक्षीयत्वा-वच्छिन्नप्रतियोगिकैतत्साध्यप्रमाकारणत्वाभावः तत्तत्काले तत्तत्पक्षविषयसाध्यत्वाभिमतानित्यत्वादिभ्रमजनकत्वाभावो वाऽसाधकत्वं न च प्रतियोग्यप्रसिद्धिः एतत्कालीनैतत्पक्षी यत्वतत्तत्कालतत्तत्पक्षविषयत्वयोर्व्यधिकरणयोरेव प्रतियो-गितावच्छेदकत्वादिति तन्न तद्धेतोः सत्प्रतिपक्षाज्ञानद-शायामपि तादृशप्रमायामकारणभावेनासाध्यतापत्तेः। नापि तृतीयलिङ्गपरामर्शस्य प्रमात्वं तत् विरुद्धादौ परा-मर्शाभावात् सद्धेतौ सत्प्रतिपक्षेऽसाधारणे च तत्प्रमात्वाच्च नाप्यनुमितिहेतुभूताभावप्रतियोगिज्ञानविषयत्वं सद्धेता-वपि कदाचित् व्यभिचारित्वसत्प्रतिपक्षत्वज्ञानस्यानुमिति

प्रतिबन्धकत्वात् । अथानुमितिप्रतिबन्धकप्रमाविषयत्वम् साधकत्वं सद्धेतौ व्यभिचारादिभ्रमः प्रतिबन्धकः अनुमिति प्रतिबन्धकत्वञ्च व्यभिचारादिभ्रमायास्तृतीयलिङ्गपरामर्श-विघटनद्वारा तुल्यबलतया विषयतया चेति चेन्न सत्प्रति-पक्षयोर्मिथःद्वयोर्व्याप्यत्वतुल्यबलत्वाभावेन तद्भ्रमस्य प्रति-बन्धकत्वात् न च तुल्यबलतया ज्ञायमानेन बोधितसाध्य-विपर्ययकत्वज्ञानं प्रतिबन्धकं तच्च भ्रमैवेति वाच्यं तुल्य-बलताज्ञानमेव प्रतिबन्धकं न तु ज्ञायमानत्वज्ञानं गौरवा-दसिद्धेः । न च सत्प्रतिपक्षेऽन्यतरान्वैकल्यभ्रमेव प्रति-बन्धिकेति वाच्यं अन्यतरत्वं तदतद्वृत्ति न च तदतद्वृत्तिमा-मानाधिकरण्येन ज्ञायमानस्य दोषस्य धर्म्ममात्रस्य व्यभि-चारज्ञानादनुमित्यच्छेदापत्तेः अन्यतरान्वैकल्यज्ञानोप-जीव्यस्य तुल्यबलत्वज्ञानस्यैव प्रतिबन्धकत्वाच्च अन्यथा व्याप्यत्वासिद्धन्तर्भावापत्तेः । अथानैकान्तिकादिज्ञानस्य तत्तदनुमितिप्रतिबन्धकत्वमसाधकत्वं तथादोषमनैकान्ति-कादिज्ञानेनैतत्कालीनैतत्साध्यवत्तयैव तत्पुरुषस्यैव तत्पक्ष-कानुमितिप्रतिबन्धकम् एतदनैकान्तिकज्ञानत्वात् एतदन्य-तज्ज्ञानवदिति चेन्न एतत्साध्यवत्त्वैतत्पक्षकत्वानुमिते कदाचिल्लिङ्गभ्रमात् प्रसिद्धावप्येतत्कालीन एतत्पुरुषस्य तादृशानुमित्यप्रसिद्धेः नापि समीचीनसाध्यविशिष्टपक्ष-प्रत्ययाजनकत्वं बाधविरुद्धासिद्धेषु साध्यानधिकरणपक्षे सत्यसाध्यप्रतीत्यप्रसिद्धेः वह्निमति वाच्ये धूमभ्रमात् वह्नर-

नुमितेः सत्यत्वाच्च न चान्यएव वह्निस्तत्र भासते मानाभावात् तद्वह्नेः प्रत्यभिज्ञानात् एकव्यक्तिके तदसम्भवाच्च न च सानुमितिलिङ्गविषयत्वेन भ्रमः अनुमितौ लिङ्गभाने मानाभावात् किञ्च भावाभावोभयमपि प्रमेयमिति सत्यनुमितौ भावत्वाभावत्ववति प्रमेयत्वभाने एकत्र तयोरभावादसत्यानुमितिः स्यात् न चान्यतरत्त्वं सिद्धं तद्व्याप्तिमविदुषोऽप्यनुमितेर्व्यर्थविशेषणत्वाच्च। अथ साध्याव्याप्यत्वमेव तत्र तन्त्रं तत्र च बाधो नास्तीति चेत् तर्हि कूटलिङ्गादनुमितौ वह्निव्याप्यवत्त्वमेव तन्त्रं वह्निव्याप्यञ्च किञ्चित्तत्रास्त्येव। अथ कूटलिङ्गे, वह्निव्याप्याभेदः प्रतीयते तथा वह्नौ कूटलिङ्गव्यापकाभेदोऽपि अन्यथा कूटस्यैव वह्निव्याप्यत्वाप्रतीतेः एवञ्च कूटलिङ्गव्यापको वह्नित्वेन भासत इति वह्न्यनुमितिरसत्येति चेन्न वह्निव्याप्यालोके धूमारोपात् अत्रानुमितिस्तत्रासिद्धिभेदेऽसत्यत्वाभावापत्तेः आलोकव्यापके धूमव्यापकाभेदात्। अथ लिङ्गमनुमितिविषयो नियमतः पक्षधर्मताज्ञानविषयत्वात् व्याप्तिज्ञानविषयत्वात् नियमेनानुमितिहेतुविशेषणधीविषयत्वाच्च पर्वतवत्साध्यवञ्च किञ्चैकविशेषणवत्त्वेन ज्ञाते विशेषणान्तरधीसामग्री तत्रैव विशिष्टवैशिष्ट्यज्ञानमिति धूमविशिष्टएव वह्निवैशिष्ट्यानुमितिरिति। नन्वनुमितौ व्यापकत्वभानेऽनुमित्यविच्छेदः न च फलीभूतज्ञानन्यूनविषयस्यैव परामर्शस्यानुमितिहेतुत्वं गौरवात् विषयान्तरसञ्चारात् नानुमितिरित्यपि

न परामर्शस्य चरमकारणत्वात् प्रत्यक्षादिसामग्रीतो बल-
वत्त्वाच्चेति चेन्न सिद्धसाधनेन विरोधात् यद्यप्येव लिङ्ग-
ज्ञाने प्रमात्वेऽपि साध्यप्रमात्वात् कथं तद्बाधकं तथाप्यु-
त्कटसाधकत्वमस्त्येवेति चेत् अस्तु तावदेव तथापि दैवा-
त्तत्र धूमसत्त्वे कथं तदंशेऽप्यसत्यता अतएव चार्द्रेन्धन-
प्रभवो वह्निर्धूमव्यापको नान्य न च वह्नित्वेन व्यापक-
त्वादन्योऽपि तथा तेन विनापि धूमसत्त्वात् एव चान्ये धूम-
भ्रमात् धूमव्यापको वह्निर्भासते न च तत्र नास्त्येवेति न
सानुमितिः सत्येति निरस्तं दैवाद्धूमसत्त्वे सत्यत्वात् ।
उच्यते । स्वज्ञानदशायां पक्षे साध्यप्रत्ययाजनकत्वमसा-
धकत्वं तथाहि विरुद्धस्यादिज्ञानदशापन्नोऽपि पक्षे साध्यप्रत्य-
याजनक विरुद्धादित्वात् पक्षविशेषणमहिम्ना तत्तद्दशायां
पक्षे साध्यप्रत्ययाजनकत्वं सिद्धमिति बाधितेऽपि लिङ्गत्वभ्र-
मात् पक्षे साध्यप्रत्ययजनकत्वमिति न प्रतियोग्यप्रसिद्ध्या
साध्याप्रसिद्धिः यद्वा अनुमितिप्रतिबन्धकतावच्छेदकरूप-
वत्त्वमसाधकत्वं तथाचेदानीमिदमनुमितिप्रतिबन्धकत्वा-
वच्छेदकरूपवदनैकान्तिकादित्वात् ज्ञानवत् अनुमितिप्रति-
बन्धकतावच्छेदकञ्च रूपं ज्ञाने विषयतयानैकान्तिकादित्वमेव
न च साध्यविशेषः उपाधिविशेषस्यानुमेयत्वात् तोयत्वेन
पिपासोपशमनसमर्थतावच्छेदकरूपवत्त्वानुमानवत् । अन्ये
त्वनैकान्तिकबाधितविरुद्धेष्वव्याप्यत्वं व्याप्यत्वासिद्धेरनैका-
न्तिकत्वं स्वरूपासिद्धसत्प्रतिपक्षासाधारणेषु द्रव्याविशेषेऽनु-

मितिप्रतिबन्धकज्ञानविषयत्वमसाधकत्वं न चैवमनैकान्तिकोऽसाधक इति सद्व प्रयोगानुपपत्तिः तत्राव्याप्यत्वस्यासाधकशब्दार्थत्वात् असाधकताननुगमेऽपि च हेत्वाभासत्वमननुगतमेव यस्य ज्ञानमनुमितिप्रतिबन्धकं तस्य हेत्वाभसत्वादिति ।

श्रीमद्गङ्गेशोपाध्यायविरचिते

तत्त्वचिन्तामणौ अनुमानखण्डे बाधान्तः ।

---

# अनुमानचिन्तामणिदीधितिः ।

श्रीरघुनाथशिरोमणिभट्टाचार्य्यविरचिता ।

बि ए उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृता ।

कलिकाताराजधान्यां

वाल्मीकि यन्त्रे मुद्रिता ।

ई० १८७२ ।

# अनुमानदीधिति ।

ओं नमः सर्व्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥
अध्ययनभाष्यभाष्यो सार निर्णीय निखिलतन्त्राणाम् ।
दीधितिमधिचिन्तामणि तनुते तार्किकशिरोमणि श्रीमान् ॥
परशुष्टनयाभिवर्त्तमाना मननास्वादरसा विशुद्धबोधे ।
रघुनाथकवेरपेतदोषा कृतिरेषा विदुषां तनोतु मोदम् ॥
न्यायमधीते सर्व्वस्तनुते कुतुकान्निबन्धमप्यत्र ।
अस्य तु किमपि रहस्य केचन विज्ञातुमीशते सुधिय ॥
मान्यान् प्रणम्य विहिताञ्जलिरेष भूयो
भूयोविधाय विनयं विनिवेदयामि ।
दूष्य वचो मम परं निपुणं विभाव्य
भावावबोधविहितोऽस्य दुनोति दोषः ॥

पूर्व्वापरग्रन्थैकवाक्यताप्रतिपत्तये शिष्यावधानाय च सङ्गतिं प्रदर्शयन्ननुमाननिरूपणं प्रतिजानीते प्रत्यक्षेत्यादि । अथोप जीव्योपजीवकभाव फलत स्वरूपतश्च प्रत्यक्षफलस्यानुमित्यनु व्यवसायादेरनुमित्युपजीवकत्वेऽपि न सर्व्वा प्रत्यक्षमितिस्तथा अनु

मितयस्तु सर्वाः साक्षात्परम्परया वा व्याप्त्यादिप्रत्यक्षोपजीविकाः पुरस्कृतस्तायमुपजीवकतोत्कर्षः। यद्यपि सकलमेव प्रत्यक्षफल-मुपजीवत्यदृष्टजननीं समयमत्कर्त्तव्यतादिपरिच्छेदिकामनुमितिम् ईश्वरप्रत्यक्षन्तु न फलं, तथापि दृष्टद्वारकमिह तथात्वमादरणी-यमितरस्याविनिगम्यत्वात् सर्वस्यानुमितिकरणमिन्द्रियापेक्षोत्प-त्तिकम् अनुमितिं भावयतोऽपीश्वरज्ञानस्य तत्करणतानिर्व्वा-हकप्रत्यासत्तिविरहेणातत्त्वात् सर्वं पुनरिन्द्रियं नानुमानाधीन-जन्म मनःश्रवणयोरजन्यत्वात् दृष्टद्वारा वा तथात्वमादरणीय नचोत्पत्तिमदपीन्द्रियम् दृष्टद्वारकमनुमानमपेक्षते। अथोपजीव्यं निरूप्यैवोपजीवकं निरूप्यतइति न नियमः क्वचित्कार्य्यं निरूप्यापि कारणनिरूपणादितिचेत् किञ्चातो न हि सङ्गतिरनन्तराभि-धानश्यापा, आनन्तर्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविष-योह्यर्थः सङ्गतिः जायते च कार्य्ये कारणे वा ज्ञाते कारणत्वस्य कार्य्यत्वस्य वा ज्ञानात्किमस्य कारणं कार्य्यं वेति जिज्ञासा अत-स्तयोर्द्वयोरपि सङ्गतित्व मित्यस्योपजीवकताया स्तुल्यत्वेऽपि ,न क्षतिरिति मन्तव्यम् । लाघवायान्वैवोपमानस्य सङ्गतिं दर्शयति वज्रवादीति सुप्रसिद्धतया निरसनीयाल्पवादिविप्रतिपत्ति-कत्वेन सुप्रतिपदतया चानुमानएव व्युत्पित्सोः प्रथमं जि-ज्ञासा नोपमानेऽप्रसिद्धत्वात् निरसनीयवज्रवादिविप्रतिपत्ति कत्वेनातिदुरूहत्वाच्च औत्सर्गिकीं रीतिमनुरुध्य चेदं तेन प्रथम

कस्यचिद्रूपे जिज्ञासोदयेऽपि न क्षतिस्तथा चावसरसङ्ग-
त्योपमाननिरूपणमिति भावः । यथा चावसरस्य सङ्गतित्वं
तथा व्युत्पादितमाकरे । शब्दान्तरसमयग्राहक समप्रवृत्तिनिमित्त
कत्वबोधकं सामान्यतोदृष्टमतोऽदृष्टजनकप्रवृत्त्यौपयिकत्वा
नुमानमपेक्षते, निश्चितमेवोपमानमितीदमप्युपजीवकत्वमेव सङ्गति
रित्यपि केचित् सम्भवति चेह निरूपणयोरपि कार्य्यकारण-
भावः अथ तत्पूर्वकमित्यादिसूत्रे प्रत्यक्षपूर्वकत्वेनानुमाननिरूप-
णानन्तरमेव व्याप्त्यादिप्रत्यक्षपरामर्शात् तथापि सहचार-
प्रत्यक्षजन्यत्वादिना तन्निरूपणात् तस्य च प्रत्यक्षनिरूपणाधीन
त्वात् एवमनुमानभिन्नत्वेनोपमाननिरूपणमप्यनुमाननिरूपणा-
पेक्षमिति सङ्क्षेपः ।

तत्र लक्षणस्वरूपप्रामाण्यादिभिरनुमाने निरूपणीये कर
णस्य क्रियाभेदभिन्नमूर्त्तिकतया क्रियालक्षणपूर्वकं तल्लक्षणमाह
व्याप्तीत्यादिना । अत्र व्याप्तिविशिष्टत्वपक्षधर्म्मत्वसामानाधिकरण्या-
वगाहिज्ञानजन्यत्वमर्थः कर्म्मधारयोत्तरभावप्रत्ययस्य पदार्थ
तावच्छेदकद्वयसामानाधिकरण्यवचनत्वात् ज्ञानपदोपसन्दा
नेन च बाधिताबाधित साधारणज्ञानलाभात् न भ्रान्तानुमित्य-
व्याप्तिरित्याद्यत्र परामर्शेण नियमतोव्याप्तिवैशिष्ट्यादिसामाना
धिकरण्यपक्षे मानाभावात् गौरवेण तद्विषयत्वेनाहेतुत्वात् सम
व्यसमव्यापदेऽपि विशिष्टज्ञानत्वोपपादितत्वात् भ्रमस्थले

तादृशपक्षसामानाधिकरण्याप्रसिद्ध्या तज्ज्ञानस्याभावात् असत्ख्यातिनिरासात् अवान्तरवाक्यार्थायोग्यत्वनिर्णये महावाक्यार्थज्ञानानुदयात् विषाणे शशसम्बन्धाभावनिश्चयदशायां शशविषाणजन्यमिदं कार्मुकमिति शाब्दबुद्धेर्भ्रमेणापि दुरुपपादत्वात्। नचात्र प्रमाणप्रस्तावात्प्रमैव लक्ष्या यदि च सल्लिङ्गपरामर्शादपि भ्रान्तानुमितिस्तदा चरमज्ञानपदं प्रमापरमिति वाच्यम् अव्याप्यपक्षधर्म्मयोस्तत्त्वावगाहिना परामर्षेण जनितायां वस्तुतः साध्यवत्पक्षावगाहितया प्रमायामव्याप्तेर्लिङ्गोपहितलैङ्गिक भाननिरासेनांशिकभ्रमत्वस्याप्ययोगात् ईश्वरतादृशज्ञानजन्यत्वस्य चातिप्रसञ्जकत्वात् अतएव व्याप्तिविशिष्टे पक्षधर्म्मता तज्ज्ञानं वेत्यादिकमपास्तम्। व्याप्तिविशिष्टस्य पक्षधर्म्मश्चेति द्वन्द्वाश्रयणाद्व्याप्तिविशिष्टत्वपक्षधर्म्मत्वावगाहिज्ञानजन्यत्वं लभ्यते पदार्थयोरभेदेऽपि पदार्थतावच्छेदकभेदेनैव प्रमाणप्रमेयेत्यादिसूत्रे अन्यत्र च द्वन्द्वस्य दर्शनात् पदार्थद्वयाभेदबोधकाच्च कर्मधारयाद्भेदाभेदोदासीनपदार्थद्वयबोधजनकत्वेनैव द्वन्द्वस्य भेदात् विशिष्टपदस्य धर्म्मपरतया वा व्याप्तिवैशिष्ट्यपक्षधर्म्मतयोर्लाभात्। नचैवमालोकोवह्निव्याप्योधूमवान् पर्व्वत इतिज्ञानजन्येऽतिप्रसक्तिः एकत्र तदुभयावगाहित्वस्योक्तत्वादिति, केचित्तदप्यसत् एवमपि धूमोवह्निव्याप्यो द्रव्यम्पर्व्वतवृत्ति इतिज्ञानजन्येऽतिप्रसङ्गात् एकरूपेण तदुभयावगाहित्वस्योक्तौ च मीमांसकमतानुप्रवेशात्

नियततदुभयोपधेयावगाहित्वस्य च परामर्शव्यापकत्वात्। न च तदुभयविषयत्वनियतधर्मावच्छिन्नकारणताप्रतियोगिककार्य्यताश्रयत्वमर्थं पक्षधर्मतापदोपादानवैयर्थ्यात् व्याप्तिविशिष्ट व्याप्तिप्रकारकं पक्षधर्मताज्ञानं तज्जन्यमिति तु स्यात् । पक्षपक्षापीन्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसमानाधिकरणेन्धनवानित्यादिपरामर्शेन्वेऽव्याप्तिरव्याप्यव्याप्तेरप्रसिद्धेः भ्रमानुमितेरसंग्रहश्च चाप्राप्ता प्रमात्वम इत्यादौ सुतरां तथा, तथापि तावत्पदार्थानां तथाविधपरस्परोपधेयावगाहित्वमात्र विवक्षितम्। न च व्यतिरेकिण्यव्याप्तिः व्यभिचारधीविरोधिधीविषयत्वेनान्वयव्यतिरेकव्याप्त्योरनुगमात् भवति हि धूमसमानाधिकरणात्यन्ताभावाप्रतियोगिवह्निसमानाधिकरणधूमत्वे वह्न्यभावव्यापकीभूताभावप्रतियोगित्वे वा गृहीते नियमतो वह्नि व्यभिचारधीप्रतिरोध तथाविधधूमसमानाधिकरणत्वादिकन्तु न तथा रासभादौ तद्ग्रहेऽपि व्यभिचारग्रहात् व्यतिरेकसहचारेणान्वयव्याप्तिग्रहणाद्वा। न च भ्रमसंशयोत्तरप्रत्यक्षं प्रति विशेषदर्शनस्य हेतुतामते तथातिव्याप्तिः तथाविधनिश्चयत्वेन हेतुताया विवक्षितत्वात् विशेषदर्शनस्य भ्रमादिविरोधित्वेन तत्त्वमित्युक्तत्वात्। अत एव सिद्धवस्त्वादिसादृश्यातिदेशवाक्यार्थज्ञानजन्योपमितौ नातिव्याप्तिः तथाविधवाक्यार्थप्रतिसन्धानत्वेन तस्य हेतुत्वात्। नचोपनयार्थ

ज्ञानजन्यन्यायार्थज्ञाने तच्छब्देन सङ्केतितशब्दान्तरेण वा व्या
प्यादिविशिष्टोपस्थितिद्वारा जनिते शाब्दबोधेऽतिव्याप्तिः व्युत्पा
दयिष्यते च महावाक्यार्थज्ञानस्यावान्तरवाक्यार्थधीजन्यत्वं तद
देश्य विशेषरूपेणोपस्थापकत्वमिति वाच्यं तत्रातिरिक्तस्य पद
जन्यत्वस्य कारणतावच्छेदकेऽनुप्रवेशान्निश्चयत्वस्याप्रवेशाच्च । न च
तथापि तत्तद्विशिष्टवैशिष्ट्यज्ञानं प्रति तत्तद्विशेषणतावच्छेदक
प्रकारकनिश्चयत्वेन हेतुत्वात् तादृशशाब्दबोधे प्रत्यक्षे चातिव्या
प्तिः दण्डो रक्तो न वेति संशये रक्तदण्डवानयमिति ज्ञानानुदया
दिति वाच्यं ज्ञानोपरमेऽपि विशिष्टविषयोपधानेनेच्छाद्वेषयो
रुत्पत्तेश्च साक्षात्कारादिशेषणविषयकादिशिष्टसंस्काराादेव विशि
ष्टस्मरणाच्च तद्विषयकगुणानां तत्र हेतुत्वे न्यूनवृत्तेर्ज्ञानत्वस्य तत्रा
प्रवेशादिच्छादितः संस्काराच्चानुमितेरनुदयात् संस्कारादन्य
त्वस्य गुरुतया ज्ञानत्वेनैव तत्र हेतुत्वात् । न च परामर्शानुव्यव
सायेऽतिव्याप्तिः सामान्यतः प्रत्यक्षे विषयत्वेन तत्तद्विषयकप्रत्यक्षे
तत्त्वेन, कदाचित् ज्ञानादिप्रत्यक्षे ज्ञानत्वादिना तत्र हेतुत्वं न त
थावानेव तत्तदितरत्वादिविषयनिष्ठो धर्मस्तेन तद्विषयत्वेन
कार्य्यकारणभावः, मैत्रावलोकितचैत्रनिर्म्मितनीलेतरघटतद्विष
यकत्वादिना तत्त्वेऽनन्तकार्य्यकारणभावप्रसङ्गात्मानाभावात् अ
न्यथोपपत्तेश्च । अथ विशिष्टस्मरणेऽतिव्याप्तिः न चोपेक्षान्यत्वेन
तत्र हेतुत्वम् उपेक्षात्वं हि न जातिश्चाक्षुषत्वादिना सङ्करप्रसङ्गात्

चांशिकत्वोपगमाच्च नापि सदृशनिरस्यजनकत्वमतिज्ञाविष
विषयत्वं वा नारवादपि स्मृत्युत्पादात् नापि संस्काराजनकत्वं
जनकतावच्छेदकरूपान्तरापरिचयात् अन्योन्याश्रयप्रसङ्गात् सं
स्कारानुत्पत्त्यौ स्मरणप्रवेशमाति जनकतायां सहप्रवेशाच्च । नाप्य
नुभवत्वेन तथात्वं संस्कारस्य फलं नाप्यतथा सत्वदनुभूतस्य सार
णोत्तरस्मरणप्रसङ्गात् समानाकारस्यैव फलस्य नाशकत्वात्
अनुभवसमानाद्वितीयैकैकगोचरस्मितस्मरणानुपपत्तिः । जायते
च पुनः पुनः स्मरणाद्दृढतरः संस्कारः । परित्यज्य च निरिदंता
व्यभिचारकरूपं गृह्यमाणव्यभिचारकेण कारणत्वकल्पनासुदयात्
इदमेव चान्वयसामान्यस्य च हेतुतावच्छेदकत्वे बीजम् । अभि
हितञ्च तात्पर्यटीकायां प्रथमसूत्रे उपायविशेषणसमासे निर्वे
स्मृतीनां स्वकार्यसंस्कारविरोधिनामसम्भवादिति चेन्न चर
मज्ञानपदस्यानुभवपरत्वात् माचाप्तश्चान्यत्वस्य वा विवक्षितत्वादि
त्यपि कश्चित् । किञ्च व्याप्यविशेष्यकात्पक्षविशेष्यकाच्च परामर्शा
दनुमितिदर्शनाच्च तदुभयवैशिष्ट्यावगाहित्वमिदमपत्वेन तत्र हेतुत्वं
मच्चपोटकमपि, तदेव एकतरविशेष्यकज्ञानादन्यतरविशेष्यकस्म
रणाभावात् अन्यथा नियमेन स्मृतेरुभयविशेष्यकत्वप्रसङ्गात्
समानप्रकारकत्वेनैव ज्ञानस्मरणयोः कार्यकारणभावाच्च तत्र
विशिष्यैव कार्यकारणभाव गुरुत्वकरूपेण गौरवमानाभावाच्च
इत्यपि केचित् एवञ्च विशिष्टवैशिष्ट्यबोधादौ कापि नातिप्रसङ्ग

शङ्कापि वह्न्याद्यनुमितौ वह्न्यादिव्यभिचारधीविरोधिधीविषय-धर्म्मप्रकारकपक्षधर्म्मताज्ञानत्वेन हेतुतामते तु नितरां तस्यैव लक्षणे निवेशात् अतएव व्याप्यवत्पक्षाद्यभावग्रहं प्रति व्याप्यवत्प-क्षादिज्ञानत्वेन हेतुत्वेऽपि न क्षतिः व्याप्तिविषयकत्वेन वा जन्यं ज्ञा-नं विशेषणीयम् । एतेन स्मृतिं प्रति संस्कारद्वारा अनुभवं प्रति च साक्षाद्विशेषणधियो हेतुत्वस्य निर्विकल्पकात्मकस्य वा स्मरण-स्यानुभवं प्रत्येव वा तस्या हेतुत्वस्य नियमतः कृतिसाक्षात्कार-पूर्व्वं विषयस्मृतेश्च कल्पनात् व्याप्यवत्पक्षवत्त्वादिज्ञानेऽतिव्याप्ति-रित्यपि परास्तम् । साध्यादेरननुगमात् एकोपादाने अन्या-नुमितौ दैवाद्व्याप्तिविर्षयिण्याश्च तस्यामव्याप्तिः परमवशिष्यते सापि तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वविवक्षया निरसनी-या एतल्लाभायैव चानुभवार्थकं चरमज्ञानपदम् एवञ्चान्वय व्य-तिरेकव्याप्त्योः पृथक्प्रयोजकत्वेऽपि न क्षतिः पर्व्वतवह्निव्याप्यवै-शिष्ट्यावगाहिनिश्चयत्वावच्छिन्न कारणताप्रतियोगिककार्य्यताया वह्नि व्याप्यवत्पर्व्वतनिश्चयत्वावच्छिन्नकारणताप्रतियोगिक व्या-प्तिविषयकवृत्तिकार्य्यताया वा अवच्छेदिका ज्ञानवृत्तिः सा-मानाधिकरण्येनावच्छेदिका वा या जातिस्तद्वत्त्वं वा बोध्यं व्याप्ति-भानेऽवश्यं भासमानो यस्तादृशानुमित्यविषयस्तदविषयत्वमात्रं वा ग्राह्यं यां काञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिसमवेतानुभव-त्वान्यानुभवान्यासमवेतधर्म्मसमवायित्वमिति वा वक्तव्यम् अनुभूतात्

मिति मध्यनिवेशे तस्य करणस्यापि प्रत्यक्षप्रमाणाभावः स्यादिति तन्निरस्यति तत्रैत्यपि कथितम् ।

अनुमानप्रामाण्यं परीक्षितु चार्व्वाकमतमुत्थापयति अथेति अनुमानमनुमानत्वेनाभिमतं धूमादिज्ञानम्, अयत्नसंवाद्युपनीत मनुमानमेव वा संवादेन संवादाभिमानेन सर्व्वावित्याप्तसतोऽनु गताकारस्य परमार्थसत्त्वलक्षणमात्रधारित्वाध्यवसेयानुत्पत्तेः अध्यवसानुत्पक्वविकल्पोत्पत्तिमितत्वाद्वा संवादः अनुमानाप्रामाण्ये च तन्मूलकसमय निर्णयाद्यधीनप्रवृत्तिकयोः शब्दोपमानयोः सुत-रामप्रामाण्यायात्प्रत्यक्षं प्रमाणमित्याह इतीत्यादि । अप्रमाण साधर्म्येण प्रमाणताप्रयोजकरूपशून्यत्वेन दृष्टसाधर्म्यस्य साधर्म्यदर्शनस्य वा, नन्वभिहितमेव साधर्म्यदर्शनं सम्भावनां भावयति सम्भावनेनैव च वङ्गो व्यवहारहेतुरित्यतश्चाह अनु-मानमिति । ननु न वयमापाततो भ्रमजनकत्वलक्षणमप्रामाण्यं निरूपयामो येन भ्रमस्य विषय बाधाधीनतया प्रामाण्यं सम्भा व्येतापि परन्तु प्रमाकरणत्वव्यतिरेकमत आह अपि चेति । स्वत इति नचानुगताकारासंसर्गिणि परमार्थसत्त्वलक्षणसाक्षि णि स्वसंवेदनसविदितप्रामाण्ये निर्व्विकल्पकज्ञाने नाप्रामाण्यं सन्दिह्यते परन्तु तदुत्तरभाविनि समुल्लिखितालीकानुगताकारे सविकल्पकएवेति वाच्यम् निर्व्विकल्पकस्य सन्मात्रावलम्बनत्वस्व विषयत्वप्रामाण्यावगाहित्वाभावानुमानाधीनसिद्धिकत्वात् । सर्व्व

मिदं प्रति व्याप्तिनिश्चये स्यात् सएव तु न सम्भवत्यपाद्याभावा दित्यतआह व्याप्तीति ।

---

समारब्धानुमानप्रामाण्यपरीक्षाकारणीभूतव्याप्तिग्रहोपायप्रतिपादनप्रिदानं व्याप्तिस्वरूपनिरूपणमारभते नन्वित्यादिना । साध्याभाव वदवृत्तित्वसाध्यावृत्तिसाध्यकसद्धेतावव्याप्तिमाशङ्क्याह साध्यवद्भिन्नेति । साध्यवद्भिन्ने च साध्याभाववदवृत्तित्वमर्थं कपाटौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह साध्यवदिति । हेतौ साध्यवत्प्रतिभिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेराह सकलेति साकल्यं साध्याभाववति साध्ये च बोध्यं, साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको वाच्यस्तेन विषयैकदेशसिद्धाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः न वा नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतावव्याप्तेर्व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्तेर्वारणाय साध्याभाववद्ये प्रतियोगिव्यधिकरणत्वं बोध्यं हेतुमत्तापि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणं तत्प्रतियोगित्वञ्च हेतुतावच्छेदकरूपेण बोध्यं तेन द्रव्यत्वादौ साध्ये विशिष्टसत्त्वादौ नाव्याप्तिः न वा विशिष्टसत्त्वादिना तादृशाभावप्रतियोगिनि सत्त्वादावतिप्रसङ्गः यत्किञ्चिद्व्यक्तिकं साध्यं विवक्षितं तच्च निर्धूमत्वादिसाध्ये तत्त्वेन साध्ये निर्वह्नित्वादौ चाव्याप्तिश्च हेतुभा

वस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वादत आह साध्यवदिति। अत्रान्योन्याभावस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्व व्युत्पत्तिबललभ्यम् नहि भवति नीलो घटो घटादन्यदिति।

नापीति साध्यमसमानाधिकरणं यस्य यदधिकरणानधिकरणं साध्यं तत्त्वम् साध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वम् साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमिति यावत् तदनधिकरणत्वमित्यर्थः साध्यवद्भिन्नस्य च साध्यनिष्ठाधेयत्वानिरूपकत्वात्तद्वृत्तौ नातिप्रसङ्गः साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्व व्यापकाभाव प्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षस्तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः। साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणकत्वञ्चरमाधिकरणत्वांशस्यानतिप्रयोजनकतया तदपहाय द्वयमेकोक्त्या अनूद्य दूषयति तदुभयमपीति। साध्येत्यादेः साध्यं यदधिकरणानधिकरणं तत्त्वाभावः साध्यस्य यदनधिकरण तद्वृत्तित्वाभावश्चार्थः तत्र केवलान्वयिनि साध्यनिष्ठाधेयत्वानिरूपकाधिकरणाप्रसिद्ध्या नानाव्यक्तिसाध्यके च एकसाध्यव्यक्तिनिष्ठाधेयत्वा निरूपकाधिकरणत्वं साधनाधिकरणव्यक्त्यन्तरस्येत्यव्याप्तिः क्वचिद्व्यभिचारिण्यतिप्रसङ्गश्चाद्ये द्वितीये च साध्यवैयधिकरण्ये यदि साध्य वत्त्वावच्छिन्नप्रतियोगिताकोभेदो विवक्षितस्तदा केवलान्वयिनि यदि च यत्किञ्चित्साध्यवद्व्यक्तिभेदस्तदा नानाधिकरणसाध्यके

सर्वव्याप्ति केचित्तु साध्यसामानाधिकरण्यं हेतुतावच्छेदक सम्बन्धेन हेतवधिकरणे तेनैव सम्बन्धेन साध्यवद्वृत्तित्वाभावस्त द्धिकरणभिन्नत्वमर्थस्तेन धूमस्य स्वावयवे संयोगेन, वह्निमति च समवायेनाद्वृत्तावपि न क्षति' तादृशाभावस्य सम्बन्धान्तरेण तत्रैव वर्त्तमाने सुलभ व्यभिचारिणस्तु व्यभिचारनिरूपकाधि-करणएव तादृशि तादृशाभाववत्त्वम्, सत्तायां गुणे न द्रव्यत्वसा मानाधिकरण्यमित्यनुभवात् । न चैव गुणकर्मान्यत्वविशिष्टसत्त्वे; व्याप्ति, विशिष्टस्यातिरिक्तत्वात्, अनतिरिक्तत्वे तु विशेषणविशे-ष्यसम्बन्धस्यैव परम्परया व्याप्तत्वात् । केवलान्वयिनि व्याप्तेर-भिधान द्वितीयलक्षणाभिप्रायेणेत्याहुस्तच्चिन्त्यं सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिर्हि द्रव्यत्वे गुणे न पृथिवीत्व-सामानाधिकरण्यमितिप्रतीतिवत्सत्तानिष्ठद्रव्यत्वसामानाधिकर-ण्यावच्छेदकत्वस्य,परम्परासम्बन्धेन सामानाधिकरण्यस्य वा अभाव गुणेऽवगाहते न तु समवायेनैव द्रव्यवृत्तित्वाभावं,सत्ता न द्रव्य वृत्तित्वाभाववती, द्रव्यवृत्तित्वाभावेन सत्तावृत्तिरित्यादि सर्व्वजनसिद्धप्रतीतिबाधितत्वात् बाधकाभावाच्च संयोगतद भावयोरवच्छेदकभेदेनैकत्र प्रतीत्या तदुभयोरेकत्र सिद्धि' अतीन्द्रियसाध्यकेऽतीन्द्रिये व्यभिचारिण्यतिप्रसङ्गाच्च तत्र सामा नाधिकरण्याभावस्य प्रत्यक्षत्वासम्भवेनासिद्धे' नच तदभावव द्वृत्तित्वेन तत्र तदनुमेयं तदवृत्तिभिन्नत्वस्योपाधित्वात् किञ्च

इदमिदानीमितिप्रतीतिनियामकविशेषणताविशेषेण हेतुतायां मद्भूतावव्याप्तिः तेन सम्बन्धेनाधिकरणे काले तेन सम्बन्धेन साध्य-वद्वृत्तित्वस्य विरहिणोऽप्रसिद्धेः ॥

समवायितयेति वाच्यत्व न यथा समवायि तथा वच्यते घटादिसमवायितयेत्यर्थ इत्यप्याहुः प्रमेयसाध्यके च भाव-त्वेनाभावानाम् अभावत्वेन भावानां, वह्नित्वेन निर्व्वह्नौ, अवृत्तिमानवृत्तिगगनत्वादिना विरुद्धघटत्वपटत्वाभ्याञ्च सर्व्वत्र प्रमेयमात्रस्याभावः सुलभः। ननु परिभाषिक मेवाव्यभिचरितत्वं तथाहि यत्समानाधिकरणाः सा-ध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकायावन्तोऽ-भावाः प्रतियोगिसमानाधिकरणास्तत्त्व सर्व्वत्र वाच्यत्वा-द्यभावस्य तथात्वादयावत्त्वोपादानम् अतएव भूतत्वमूर्त्तत्वोभ-यवान्मूर्त्तत्वादित्यादौ द्वित्वावच्छिन्नाभावस्य प्रतियोगिसामाना-धिकरण्येऽपि भूतत्वमनोन्यत्वाद्यभावस्य तथात्वान्नातिप्रसङ्गः। साधनसमानाधिकरणस्य गोत्वाद्यभावस्य तत्तत्साध्यव्यक्त्यभावस्य चातथात्वात् साध्यतावच्छेदकेत्यादि। येन सम्बन्धेन हेतुः तेनैव तदधिकरणं बोध्य तेनात्मत्वे साध्ये समवायेन हेतोर्ज्ञानस्य विषयतयाऽधिकरणे घटादौ वर्त्तमानस्य साध्याभावस्यातथात्वे-ऽपि न क्षतिः। एवं हत्वान्तरेऽपि सम्बन्धभेदनिबन्धनो दोषः सम्बन्धैक्यविवक्षया निरसनीयः रूपादिसामान्याभावे साध्ये

पृथिवीत्वादिकं सद्धेतुरेव प्रलये परमाणुत्पत्तिकाले वाव च्छिन्न तत्त्वात्। तत्र प्रतियोगियन्नध्वंसप्रागभावयोरत्यन्ताभावविरोधित्व, मानाभावात्। अतएव घटकपाले रक्त रूप नासीति प्रत्यय। न चैव रक्तिमध्वंसाद्यवगाह्रो पूर्व्वापरर-क्तिमध्वंसप्रागभाववति रक्तेऽपि तथाप्रत्ययप्रसङ्गात्। सामानाधिकरण्यञ्च स्वविशिष्टदेशाधिकरणावच्छेदेन बोध्य तेन गोत्व, अन्यद्वत्व— प्रलयाद्यृत्तित्वादिना गवादेरभावश्च गवाद्यनधिकरणधर्म्मावच्छेदेन नदति काले महाकाले वा दत्त्वावपि यदा गोत्व तदा गौर्य्येव काष्ठत्व तत्र अन्यद्वत्वम् प्रलयाद्यृत्ति त्वादौ नातिप्रसङ्ग हेतुमति प्रलये तत्सामानाधिकरण्याभावात्। स्वविशिष्टेतिविशेषणात् कपिसंयोगाभाववान् गेयत्वादित्यादौ संयोगात्मकस्य साध्याभावस्य सकलदेशाधिकरणा वृत्तित्वेऽपि नाव्याप्ति। जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्याभावस्तु जलत्वाद्यभावो, न तु धूमाद्यभावो जलादावपि तदभावप्रत्ययप्रसङ्गात्। यत्समानाधिकरणानां साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां याव दभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं, तत्त्व वा तत्, ज्ञेयत्वसमादिना साध्यत्वादीनामभाव सुलभएव भेव दर्शितदिशावसेयम् अत आह प्रतियोग्यवृत्तिश्चेति। केचित्तु व्याप्यवृत्तिमेदेहेतुसमानाधिकरणसाध्याभावस्य प्रति

योगितायाः अनवच्छेदक हेतुसमानाधिकरणस्य व्याप्यवृत्तेः प्रतियोगिव्यधिकरणस्य वा अभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः एवञ्च व्याप्तेरव्यभिचारिसम्बन्धरूपत्वापि सङ्गच्छते हेतौ साध्यतावच्छेदकावच्छिन्नसाध्याभाववदवृत्तित्वस्यैव साध्यतावच्छेदके हेतुमन्निष्ठसाध्याभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारत्वात् अवच्छेदकत्वञ्चेह तत्पर्य्याप्त्यधिकरणत्वं, तेन विशिष्टवह्न्यभावस्य ह्रदत्ववह्नित्वोभयावच्छिन्नाभावस्य च प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः। सत्त्ववति गुणादौ संयोगाद्यभावोऽपि व्याप्यवृत्तिर्वक्ष्यमाणं वा प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमेव तदवच्छेदकत्वमिहापि बोध्यम्। भवति च गुणत्वगुणावृत्तित्वद्रव्यमात्रसमवेतत्वाद्यवच्छिन्नप्रतियोगिताकव्याप्यवृत्त्यभावप्रतियोगितावच्छेदक गुणत्वाद्यनतिरिक्तवृत्त्येव संयोगत्वमित्याहुः। साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यावच्छेदकस्वसमानाधिकरणसाध्याभावत्वकत्वं यत्समानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्व नास्ति तत्त्व वा व्याप्तिरिति तु न युक्तं सर्व्वत्र साध्याभावपदवैयर्थ्यात्। यत्तु साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति तत्त्वं व्याप्तिरिति तन्न अनुमित्यविरोधित्वज्ञानस्यानुमितिजनकत्वे साध्याभाववद्वृ-

ज्ञानसामान्यानुमित्यविरोधितया व्यभिचारिण्यतिप्रसङ्गात् । केचित्तु यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीया ये तत्तदधिकरणवृत्तित्वाभावास्तदन्यं तत्त्वम् सजात्यञ्च सताना समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेण, साध्याभावस्य पूर्वोक्तद्वितीयरीत्या प्रत्येकमेव व्याप्यवृत्तित्वं, प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यधिकरणे वा तेन सत्तासाध्यकेऽव्याप्यवृत्तेर्वा साध्यस्याभाववति वृत्तावपि हेतौ नाव्याप्तिः । तद्वृत्तित्वाभावश्च तत्तत्साध्याभाववद्वृत्तित्वव्यापकत्वाभाववृत्तिधर्मानवच्छिन्नप्रतियोगिताको बोध्यस्तेन साध्याभाववद्वृत्तिविशेषवृत्तित्वस्य पार्थिवत्वादिविशेषितस्य द्रव्यत्वाद्यवच्छिन्नस्य वा साध्याभाववद्वृत्तित्वस्याभावमादाय नातिप्रसङ्गः । अत्र च हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वं बोध्यं, तेन वह्न्यभाववति स्वावयवे धूमस्य वृत्तावपि न दोषः । इत्थञ्च साध्याभावोऽपि हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरणे वर्त्तमानो ग्राह्यस्तेन जातिमान् सत्त्वादित्यादौ हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्याप्रसिद्धावपि न क्षतिः । यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्व-

त्त्वम्, साधनस्य तादृशाभावप्रतियोगित्व, तदवच्छेदकत्वं वा साधनतावच्छेदकस्येति तु न वक्तव्यम् द्रव्यं सत्त्वादित्यादौ सत्त्वादेर्गुणकर्मान्यत्वविशिष्टसत्ताद्यवच्छिन्नप्रतियोगिताक ता- दृशाभावप्रतियोगित्वादतिव्याप्तेः। ज्ञेयं प्रमेयादित्यादौ प्रमे- यत्वादेस्तादृशप्रतियोगितानवच्छेदकत्वाद्व्याप्तेश्च प्रमेयत्वव्यधिक- रणप्रतियोगिकत्वस्याप्रसिद्धेः। यद्वा यावन्तस्तादृशा साध्याभावाः प्रत्येकं तत्प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्न प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं वा तत्त्वमित्याहुः। परे तु वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावास्तद्वत्त्वं व्याप्तिः येन सम्बन्धेन हेतुता तेनैव वृत्तिमत्त्वमपि बोध्यम्। तेन व्यधिकर- णधर्मावच्छिन्नाभाववति संयोगेन या वृत्तिस्तदभावस्य ना त्यादौ वर्त्तमानस्य धूमादावसत्त्वेऽपि न क्षतिः। साध्याभावश्च पू- र्ववद्बोध्यः तद्वृत्तित्वाभावोऽपि स्वव्यापकतत्तत्साध्याभाववद्वृत्ति त्वव्यापकप्रतियोगिताकः। तत्तत्साध्याभाववद्वृत्तित्वाति रिक्तेन समानाधिकरणेन साध्याभाववद्वृत्तित्ववृत्तिना वा धर्मेणानवच्छिन्नप्रतियोगिताको बोध्यः तेनालोकाद्यवृत्ति त्वेन रूपेण यो वह्निसाध्याभाववद्वृत्तित्वस्य, यत्रेन्धनत्वा- द्यवच्छिन्नवह्न्यभावाधिकरणीभूतमहानसवृत्तित्वादेरभावस्त- स्य धूमादौ स्वनिष्ठसाध्याभाववद्वृत्तित्वविरहस्य च हेत्वन्तर- वृत्तेः स्वाश्रयसत्त्वेऽपि न क्षतिरित्याहुः। अन्ये तु वृत्तिमद्वृ-

न्तयो यावन्त साध्याभावसमुदायाधिकरणवृत्तित्वाभावा स्तदन्त साध्यवृत्तित्वाभावस्य स्वव्यापकताघटकवृत्तित्वव्या- पकप्रतियोगिताको बोध्य प्रयोजनस्तोकमायम् साध्याभावा धिकरणवृत्तित्वाभावव्यापकप्रतियोगिताकस्य व्यधिकरणधर्मा- वच्छिन्नस्यैवाभावस्य वृत्तिमद्वृत्तित्वाद्व्यभिचारित्वमित्या तिरन समवायेनेति। साध्याभावस्य साध्यतावच्छेदक- सम्बन्धेन बोध्य तेन समवायेन वह्नौ साध्ये, धूमे संयोगेन च तथात्वे, वह्न्यवयवे पर्वतवह्न्यवयवसंयोगे च पर्वतस्य वह्न्यवयवस्य च सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयानधिकरण त्वेऽपि नातिव्याप्ति । तथा स्वव्यापकीभूतसाध्यतावच्छेदकव्यापक प्रतियोगिताकोऽपि बोध्य तेन च पृथिवीत्वाभावादौ साध्ये तत्तद्विपक्षवृत्तित्वाद्यवच्छिन्नप्रतियोगिताकाभाव कूटाधिकरणमप्रसिद्धम् तच यद्वेनो पृथिवीत्वादौ साध्ये जातिमात्रवच्छिन्नाभाववति सामान्यादाववर्त्तमाने द्रव्य- त्वप्रकारकप्रमाविषयत्वादौ च साध्याप्तिरतिव्याप्तिर्वा, नाप्यभाव- त्वादिना अभावादौ साध्ये तत्तत्साध्याभावकूटाधिकरणाप्रसि- द्धा अव्याप्तिरिति वाच्यम् द्रव्यत्वपृथिवीत्वोभयवान् द्रव्यत्वादि- त्यादौ तदुभयान्यतरत्वावच्छिन्नाभाववति द्रव्यत्वादेरवृत्ते- रतिव्याप्ते, अपि च दृष्टं पृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वादित्यादौ द्रव्यत्वत्वावच्छिन्नाभावकूटाधिकरणगुणादिवृत्तित्वस्य द्रव्यत्वे

सत्त्वादतिव्याप्तेः, द्रव्यत्वत्वाद्यवच्छिन्नप्रतियोगितायाः पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्तत्वात्। किञ्च रूपाभावसाध्यके सद्धेतौ साध्याभावसमुदायनिविष्टसकलरूपवत्त्वाधिकरणाप्रसिद्धेः। यावतामभावानामैकाधिकरण्यं तावतां समुदाये विवक्षितेऽपि इदं पृथिवीवृत्तिगुणशून्यं सत्तान्यपृथिवीसमवेतशून्यं वा, वायुत्वात् रूपवदन्यत्वादेत्यादावतिव्याप्तिः तत्र तादृशसाध्याभावस्तोमस्य नियमतो रूपादिघटितत्वेन तद्वति तद्धेतोरवृत्तेः। वस्तुतो निखिलानामेव रूपाणां तादृशाभावसहस्रसमानाधिकरणत्वात्समानाधिकरणयावदभावाधिकरणाप्रसिद्धिर्दुर्वारैव। किञ्च हेतुतावच्छेदकसम्बन्धेन या साध्याभाववति वृत्तिस्तदभावो वक्तव्यः अन्यथा धूमादावव्याप्तिः साध्यतावच्छेदकसम्बन्धेन साध्याभाववति कालादौ वृत्तिमत्त्वाच्चस्यैव वृत्तेर्व्यभिचारित्वप्रसङ्गो वा, तथा च सत्तादिसाध्यके संयोगेन समवायेन वा हेतावव्याप्तिः। साध्याभाववति तेन सम्बन्धेन वृत्तेरप्रसिद्धेः, साधनसमानाधिकरणत्वेन साध्याभावो विशेषणीया इति चेद्विशेष्यन्तां तथापि भूतत्वमूर्त्तत्वयोरन्यतरत्वेनाभावे साध्ये स्पर्शवदन्यत्वादावतिव्याप्तिः, तादृशसाध्याभावसमुदायवति पृथिव्यादौ तस्यावृत्तेः। किञ्च महाकालान्यत्वादिसाध्यके व्यभिचारिणि कालिकविशेषणताविशेषेण हेतावतिव्याप्तिः तादृशसाध्याभावसमुदायवति महा-

कमे तेन सम्बन्धेन वृत्तिमत्त्वाभावस्यैव वृत्ते । एतेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकव्याप्यवृत्तिस्वसमानाधिकरणयावदभावाधिकरणवृत्तित्वाभावा यावन्तो वृत्तिमद्वृत्तयस्तदत्त्वं व्याप्तिः केवलान्वयिनि संयोगाद्यभावस्याभावा संयोगादयो न व्याप्यवृत्तय एव साध्यस्य गुणसामान्यस्याभावो द्रव्यत्वाधिकरणे उत्पत्तिकालावच्छेदेन वर्त्तमानोऽपि नव्याप्यवृत्तिः उक्तरूपावच्छिन्नप्रतियोगिताका क्वचिदप्रसिद्ध्यादिसम्पादका पुनरभावा न हेतुसमानाधिकरणाः उक्तसमुदायाधिकरणवृत्तित्वतदभाववृत्तित्वाभ्यां पूर्वोक्तरीत्या प्रत्येतव्या इत्यादिकमप्यूह्यम्। तद्विशिष्टेति। विशेषणतावच्छेदकविशिष्टज्ञानस्य विशिष्टवैशिष्ट्यप्रत्ययहेतुत्वात्, अभावप्रत्ययो हि घटत्वादिविशिष्टस्य घटादेः प्रतियोगित्वमवगाहमानो विशेषणस्यापि घटत्वादेस्तदवच्छेदकत्वमवगाहते न त्वातपेन घटो नास्तीत्येव प्रतीते तद्विशिष्टाभावप्रत्ययो यदि अधिकरणधर्म्मेण विशिष्टं प्रतियोगिनं नावगाहते नावगाहत एव तदा तस्यापि प्रतियोगितावच्छेदकत्वम् अथावगाहते तर्हि भ्रमएव स च ततोऽर्थसिद्धिरिति भावः । यदि पुनरानुभविको लोकानां स्वरसवादी घटत्वेन घटो नास्तीत्यादिप्रत्ययो न तदा तादृशाभावनिवारणं गीर्वाणगुरूणामपि शक्यमिति मन्तव्यम्।

साध्येति साध्यसामानाधिकरण्यं येषु तेषामनधिकरणत्वं तदभाववत्त्वमिति यावत् तस्मिन् सति साधिकरणत्वं तदवच्छिन्नाधिकरणताकत्वम् सति सप्तम्यावच्छेदकत्वलाभात् तच्चेहान्यूनवृत्तित्वम् एवञ्च साध्यवदवृत्तिसकलपदार्थाभाववत्त्वं यदधिकरणताया अन्यूनवृत्ति तत्त्वमिति तु फलितार्थः। यथा सन्निवेशे अधिकरणत्वस्य न वैयर्थ्यम् हेतुतावच्छेदकसम्बन्धलाभाय वा तत्। येन येन सम्बन्धेन यो यः साध्यवदवृत्ति स्तेन तेन सम्बन्धेन तत्तदभावो बोध्यः एतेन साध्यवदवृत्तित्वं यदि साध्यतावच्छेदकसम्बन्धेन विवक्षितं तदा समवायेन साध्यतायां साध्यवदसमवेतस्य सार्व्वत्रिकत्वात्सकलतच्छून्याप्रसिद्धिः। अथ तदभावोपि तेनैव सम्बन्धेन वाच्यस्तदा जातिमान् प्रमेयत्वादित्यादावतिव्याप्तिः जातिमदसमवेतानां समवायेनाभावस्य केवलान्वयित्वात् अतएव न संयोगेन,समवायेन वा,इद न जातिमज्जातित्वादित्यादौ साध्यवत्समवेताद्यप्रसिद्धेश्च नापि साधनतावच्छेदकसम्बन्धेन इदम् एतद्रूपभिन्नं गुणत्वादित्यादावतिव्याप्तेः। नापि विषयतया, घटभिन्नं मेयत्वादित्यत्राप्यतिव्याप्तेः सविषयमात्रस्यैव घटभिन्नविषयत्वात्। घटनिर्विकल्पकेऽपि घटत्वादिभानात्। नापि सम्बन्धमात्रेण, द्रव्यं सत्त्वादित्यादावतिव्याप्तेः वृत्तिमन्मात्रस्यैव स्वरूपसम्बन्धेन महाकाले वृत्तेरवृत्तेरभावस्य च केवलान्वयित्वादिति प्रत्युक्तम्। विशेषणताविशेषेण

वा साध्यवद्वृत्तित्व वक्तव्यम् सम्बन्धेन तत्तद्व्यक्तित्वे तत्तद-
न्याभावे तत्प्रकारकप्रमाविषयत्वे वा तत्त्वलभम् तेनैव सम्बन्धेन
तदवच्छिन्नसामान्याभावो वाच्य इति। केचित्तु सव्यभिचारे-
तरसाध्यानि साध्यविरोधीनि साध्यासमानाधिकरणानीति
यावत् तानि सामानाधिकरण्यानधिकरणानि यस्य तत्त्वम्
साध्यसामानाधिकरण्याभावव्यापकाभावप्रतियोगित्वं सामानाधि
करण्यसामान्यकत्वमितिफलितार्थः। अत्र च साध्यसामाना
धिकरण्यं साध्यतावच्छेदकसम्बन्धेन साध्यवति हेतुतावच्छेदक
सम्बन्धेन वृत्तिः। परन्तु सामानाधिकरण्य हेतुतावच्छेदक
सम्बन्धेन हेतुमति तेनैव वृत्तिः तेन समवायेन पृथिवीत्वादेः
साध्यतायां व्यभिचारित्वे कालिकसम्बन्धेन हेतौ द्रव्यत्वादेश्च सम
वायेन साध्यतायां समवायेन हेतौ सत्त्वगुणत्वादौ नातिप्रसङ्गः।
न वा संयोगेन वह्न्यादौ साध्ये समवायेन तद्व्याप्यस्य रूपविशे-
षादेः कालिकसम्बन्धेनाधिकरणे काले स्पन्दे च कालपरिमाण
स्पन्दत्वादेः समवायेन तदधिकरणे पटादेः संयोगेन वृत्तावपि
नातिप्रसङ्गः, सम्बन्धविशेषेण व्याप्यत्वाभाव साधिकरणत्वमित्या
ऊहनीयम्। यथाश्रुतं यथासम्भवं विकल्प्य दूषयति नेत्यादि
सम्बन्धप्रतियोगिपदेन प्रतियोगितानवच्छेदकावच्छिन्नं वक्तव्यमत
आह द्रव्यत्वादेरिति प्रतियोगिविरोधित्व प्रतियोगितदधि
करणावृत्तित्वं व्याप्यवृत्तित्वं स्वसमानाधिकरणात्यन्ताभा

वाप्रतियोगित्वम् । अधिकरणेति तथा सत्यभावएव न सिध्येदिति भाव.। संयोगाद्यत्यन्ताभावस्य द्रव्ये प्रतियोगिसामानाधिकरण्यम् अव्याप्यवृत्तित्वञ्च प्रतियोग्यधिकरणीभूतद्रव्यवृत्तित्वं स्वाधिकरणीभूतद्रव्यनिष्ठात्यन्ताभावप्रतियोगित्वं गुणे च प्रतियोग्यसामानाधिकरण्यं, व्याप्यवृत्तित्वञ्च प्रतियोग्यनधिकरणीभूतगुणवृत्तित्व स्वाधिकरणीभूतगुणनिष्ठात्यन्ताभावाप्रतियोगित्वम् एतानि च न भेदकान्यविरोधात् सामान्यतस्त्वाव्याप्यवृत्तौ प्रतियोगिसमानाधिकरणे च न तथात्वव्यतिरेक इति भावः। ननु साध्यवान् यस्येति साध्यवति सम्बन्धोऽन्वेष्टव्य. स चाधिकरणत्व साध्यसाधनयोरपि सामानाधिकरण्यमेवेत्यतो दूषणान्तरमाह साध्येति। साध्यत्वसाधनत्वे व्याप्तिप्रतियोगित्वानुयोगित्वे यत्तद्भ्यामेव व्याप्तिर्निर्वक्तव्येत्यत आह वह्निमदिति। ननु यत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदक यद्रूपावच्छिन्न न भवति तद्रूपावच्छिन्नेन समं तस्य सामानाधिकरण्य' व्याप्तिरित्यर्थः। नच धूमसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदको वह्नित्वावच्छिन्नो वह्निः धूमवान् वह्निमानित्यप्रतीतेरत आह विशेषेति। यएव प्रत्येकं वह्निमद्भेदाः धूमसमानाधिकरणास्तएव चैकाधिकरणवृत्तित्वावच्छिन्ना वह्निमत्सामान्यभेदबुद्धिं जनयन्ति तत्प्रतियोगितावच्छेदको वह्नित्वावच्छिन्नो वह्निरिति भवत्यव्याप्तिः। साध-

नेति वैयधिकरण्ये तदनधिकरणवृत्तित्व तच्च केवलान्वयिनः साधनस्याप्रसिद्धम् अतिप्रसञ्जकञ्च पृथिवी द्रव्यत्वादित्यादौ अत समानाधिकरणोपादानं धूमादेरपि न वह्न्यादिसमानाधिकरणद्रव्यत्वाद्यनधिकरणवृत्तित्वमतो यावदिति । यद्यपि पृथिवीत्वादिसमानाधिकरणघटत्वपटत्वाद्यनधिकरणवृत्तित्वं द्रव्यत्वादेस्तदनधिकरणमात्रवृत्तित्वञ्च निखिलघटपटादिरूपाणां तथापि तादृशधर्मानधिकरणमात्रवृत्तित्वानवच्छेदकसाध्यतावच्छेदकवत्त्व योऽस्य नहि पृथिवीत्वसमानाधिकरणस्तादृशः कश्चिदेको धर्मो यदनधिकरणमात्रवृत्तितावच्छेदकं रूपत्वादि धूमत्वादिकन्तु वह्न्यादिसमानाधिकरणयोगोलकत्वाद्यनधिकरणमात्रवृत्तितावच्छेदकं तदवच्छेदकत्वञ्च तदनतिरिक्तवृत्तित्व तच्च तच्छून्यधर्मावृत्तित्वं तेन मेयत्वसमानाधिकरणगुणत्वाद्यनधिकरणमात्रवृत्तितानधिकरणगगनादिवृत्तित्वेऽपि द्रव्यत्वस्य द्रव्यसाध्यकमेयत्वेनातिप्रसङ्ग वस्तुतस्तु तादृशधर्मानधिकरणमात्रवृत्तित्वावच्छिन्नाधिकरणताकत्व तदवच्छेदकत्व वाच्य तेन सत्ताद्रव्यत्वोभयवान् गुणान्यत्वविशिष्टसत्तावान् वा जातिमत्त्वादित्यादौ नातिप्रसङ्गः सत्ताया गुणत्वाभाववन्मात्रवृत्तित्वविरहेऽपि उभयत्वावच्छिन्नाधिकरणताया गुणत्वाभाववन्मात्रवृत्तित्वात् प्रमेयत्वादेरिति । ननु व्यतिरेकित्वेन धर्मी विशेषणीयः

वस्तुतस्तु यावत्पदं तादृशस्य कस्यापि न वैयधिकरण्याव-च्छेदकमेतावन्मात्रस्फोरणाय तथा च साधनसमाधिना-करणधर्म्म निरूपितवैयधिकरण्यावच्छेदकं यद्यत्तद्भिन्न-धर्म्मवता यावत्तादृशावच्छेदकत्वशून्यधर्म्मवता वा समं सामानाधिकरण्यमिति पर्य्यवसितं अतोदोषान्तरमाह महा-नसादाविति तत्र च तदभाधिकरणत्वं तदभावाधिकरणत्वं तद्भिन्नत्वं वा द्वयमपि दुष्टमित्यर्थः एतेन तदधिकरणा-वृत्तित्वमत्र वैयधिकरण्यमिति निरस्तं समवायितया महा-नसवृत्तित्वं वह्नौ नास्तीति प्रतीतेर्वह्न्यादेरपि तादृशवैयधि-करण्याधिकरणत्वात्सम्बन्धविशेषेण वैयधिकरण्यविवक्षायान्तु नोक्तदोष इति ध्येयम् । उपाधिपदस्य साध्यसमव्याप्तवचन-तया आत्माश्रयप्रसङ्गादाह साध्यव्यापकेति । व्यापकत्वं व्याप्तिनिरूपकत्वमात्माश्रयादिग्रस्तमत आह तद्वन्निष्ठेति । यत्रोपाधिरव्याप्यवृत्तिर्नानाव्यक्तिको वा तत्रापि व्याप्यवृत्ति-रखण्डश्चान्ततस्तद्भिन्नत्वप्रकारक प्रमाविषयत्वाभावादिरे-वास्ति यदि च तस्यापि विशेषणान्तरविशिष्टस्य द्वित्वाद्यव-च्छिन्नस्य वा तत्राभावसम्भवस्तदा साध्यसमानाधिकरणात्य-न्ताभावप्रतियोगितानवच्छेदकीभूतसाधनसमानाधिकरणा-त्यन्ताभावप्रतियोगितावच्छेदकधर्म्मवत्त्वं दलद्वयार्थो बोध्यः । अनवस्थान्निरसितुमाह प्रतियोगित्वमिति । सहेति । एक-

तावर्त्तमानत्वम् अभावपदस्य स्वाभावपरत्वात् वस्तुतस्त्वे-कसम्बन्धावच्छिन्नायास्तत्समानाधिकरणाभावप्रतियोगितायाः अनवच्छेदकमपि भवत्येव सम्बन्धान्तरावच्छिन्नायाः तस्या अवच्छेदकम् अतो यत्सम्बन्धावच्छिन्नायाः साध्यसमानाधिकरणाभावप्रतियोगितायाः अनवच्छेदकं तत्सम्बन्धावच्छिन्नाया एव साधनसमानाधिकरणाभावप्रतियोगितायाः अवच्छेदकं तद्वाच्यम् तथा च संसर्गाभावत्वमनुपादेयमेव वाशब्दोऽत्रास्वरससूचनाय स च व्यधिकरणसम्बन्धेन सर्वस्य प्रतियोगिनस्तादृशभ्रमे मानाभावात् स्वाभावसम्बन्धित्वस्य स्वाभावज्ञानविषयत्वस्य वा लघोः सर्वत्र सम्भवित्वात् स्वाभावेत्यादौ षष्ठ्यर्थप्रतियोगितायाः प्रवेशात् तत्र स्वरूपसम्बन्धस्य शरणीकरणीयतया तस्यैवावश्यकत्वेन तथात्वौचित्याच्च अभावत्वप्रतिबन्धकत्वयोः प्रतियोगिताघटितत्वात् तथाविधव्यवहारगोचरस्यापि विना प्रतियोगितां निर्वक्तुमशक्यत्वाच्च। यत्साध्यस्य यत्समानाधिकरणसाध्यस्य। तथाहीत्यादि यत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं यावत् साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकम् साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं यावत् यत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं तत्त्वमित्यर्थे तु नोक्तदोष इति ध्येयम्। प्रतियोगितयोरेकस-

सम्बन्धावच्छिन्नत्वं विशेषणताविशेषावच्छिन्नत्वं वा वक्तव्यम् तेन प्रतियोगितावच्छेदकाभावस्यैव यत्किञ्चित्सम्बन्धावच्छिन्न साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वेऽपि एकसम्बन्धावच्छिन्नसाध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकस्य सम्बन्धान्तरावच्छिन्न साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि च न क्षतिः । व्यभिचारिणि तु यत्राधिकरणे व्यभिचारो विशेषणताविशेषावच्छिन्नतन्निष्ठाभावप्रतियोगितावच्छेदक साध्यस्य प्रकारक प्रमाविषयत्वम् विशेषणताविशेषावच्छिन्नसाध्यसमानाधिकरणाभावप्रतियोगितानवच्छेदकमिति नातिप्रसङ्गः । वस्तुतो हेतुसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यावद्धर्मावच्छिन्नसमानाधिकरणान्योन्याभाव प्रतियोगितावच्छेदक तद्धर्मावच्छिन्नसामानाधिकरण्यम् साध्यसमानाधिकरणान्योन्याभाव प्रतियोगितानवच्छेदकम् यावत्तत्समानाधि करणान्योन्याभाव प्रतियोगिता नवच्छेदकं तत्त्व वा व्याप्तिरिति ध्येयम् । साध्यमिति यावतां तेषामित्यर्थः । दूषितं केवलान्वयिन्यव्याप्त्या सा च यथोक्तलक्षणेऽपि गौरवं परमतिरिच्यत इति कारद्वयं साधनस्य साध्यस्य साध्याश्रयस्य साध्यसमानाधिकरणस्य साधनाश्रयस्य साधन समानाधिकरणस्य वा भावे कृत्स्नसाधनसामानाधिकरण्यं

साध्ये कृत्स्नेषु साधनेषु साध्यसामानाधिकरण्यं वार्थः प्रथमे एकेति नानेति च व्याप्तेश्चाहेतुवृत्तित्वम् पृथिवी पृथिवीत्व-व्यापकजातेरित्यादावतिव्याप्तिश्च अतएव नेतरः । अर्थाभि-धानपूर्वकं द्वितीयं निरस्यति अतएवेति अतएव एकव्यक्ति-साध्यकाव्याप्तेरेव विषमव्याप्ते समव्याप्तेऽपि च मख्यापरि-माणादावेकत्र साधने सकलसाध्यसम्बन्धस्याभावात् भावाच्च शब्दवान् द्रव्यत्वादित्यादौ । तृतीये साध्याश्रययावद्वृत्तित्वं चतुर्थे साध्यसमानाधिकरणयावत्सामानाधिकरण्यमर्थः तत्र च यथासम्भवमेकमात्रवृत्तिसाध्यके वह्न्यादौ साध्ये धूमादाव-व्याप्तिरतिव्याप्तिश्च सत्त्वादौ । अर्थपरिष्कारपूर्वकं पञ्चम निरस्यति न चेति । एकमात्रवृत्तिसाधने चाव्याप्तिश्च तथैव षष्ठं निरस्यति नापीति तादृशानां सर्वेषां महानसत्वादीनां प्रत्येकनिरूपितान्यपि सामानाधिकरण्यानि न कुत्रापि वह्नौ । अथ यद्धर्मावच्छिन्नसामानाधिकरण्यत्वेन साधन-सामानाधिकरण्यव्यापकत्वं तद्धर्मावच्छिन्नसामानाधिकरण्यं विवक्षितमिति चेत् द्रूतोऽपि लघुतया साधनव्यापकताव-च्छेदकरूपावच्छिन्नसामानाधिकरण्यमेव व्याप्तिरिति सिद्धा-न्तयिष्यते । अविनेति । साध्यं विना साध्याभाववति यो भावोवृत्तिस्तद्विरहः साध्यं विना अभावः साध्याभावव्यापकी-भूताभावप्रतियोगित्वमिति वा । अथेति सम्बन्धः सामा-

माधिकरण्य व्यभिचारिसम्बन्धस्य केनचित्किञ्चिद्रूपावच्छि न्नेन धूमादेरपि द्रव्यत्वादिना वह्निव्यापकत्वात् । तद्बोधा दिति न च व्यभिचारावच्छेदकतत्तद्धर्मवत्ता व्यभिचार तद्व्यतिरेकयो अनुपस्थितावपि समानाधिकरण्यधर्मवत्ता-ज्ञानमात्रादनुमित्यनुत्पादस्य सर्वानुभवसिद्धत्वात् हेत्वन्तरे तथैव च रूपान्तरेण व्यभिचारग्रहे हेतुतावच्छेदकावच्छेदेऽप्य नुमित्युत्पादाच्च विपदक्ते च सामानाधिकरण्यज्ञानस्यैव हेतु तायां व्यभिचारज्ञानाभावकारणत्वमपेक्ष्य कारणीभूतसामा नाधिकरण्यज्ञाने साधर्म्येणाव्यभिचारस्य विषयतयावच्छेद कत्वमुचितम् न च व्यभिचारवगमेऽनुमित्यनुत्पादाद्व्यभि चारनिश्चयत्वेन कारणत्वेऽपि गौरवम् व्यभिचारज्ञानस्य हि भ्रमत्वनिश्चयदशायामेवाविरोधितया भ्रमत्वज्ञानविरोधमा नस्य विरोधित्वं वाच्यम् मध्यभिचारनिश्चयस्य च भ्रमत्वग-हायामप्यनुमित्यजनकतया भ्रमत्वेनाज्ञायमानस्यैव हेतुत्व मिति तथैव गौरवात् नानाविधव्यभिचारज्ञानाभावानां नियतपूर्ववर्तित्वेन हृदगतानामपि हेतुत्वमपेक्ष्य वक्ष्यमाणैव विधाव्यभिचारज्ञानस्यैव हेतुत्वं युक्तमित्यप्याहुः । सामाना धिकरण्यविशिष्टपक्षधर्मत्व तु पक्षे साध्यग्रहं विना दुर्ग्रह मिति केवलान्वयिव्यवहारे सामानाधिकरण्यमात्रग्रहादनु मित्यनुपपत्तेस्तद्दोषोऽपि वाच्य तत्र प्रसिद्धत्वस्याभावा

प्रतियोगित्वादिकमन्योन्याभावप्रतियोगितानवच्छेदकत्वं वा तथा च सर्वसाधारण्याय लाघवात्साधनवतस्तद्वृत्तित्वस्य वा वृत्तेरन्योन्याभावस्य वा विशेषणत्वमुचितमिति सिद्धान्तरहस्यं शेषं केवलान्वयिखण्डने वक्ष्यामः ।

प्रतियोग्यसमानाधिकरणेति प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्म्मस्तद्धर्म्मावच्छिन्नेन येन केनापि सम मानानाधिकरण्यं तद्रूपविशिष्टस्य तद्धर्म्मावच्छिन्नयावन्निरूपिता व्याप्तिरित्यर्थः दण्डादौ साध्ये परम्परासम्बन्धं दण्डत्वादिकमेव साध्यतावच्छेदकमतो नाव्याप्तिः इत्यस्य इदं द्रव्यं गुणकर्म्मान्यत्वे सति सत्वादित्यादौ सत्त्वाद्यधिकरणगुणादि निष्ठात्यन्ताभावप्रतियोगित्वेऽपि द्रव्यत्वादेः नाव्याप्तिः साधनस्य विशिष्टसत्त्वादेर्गुणादावृत्तेः सामानाधिकरण्यव्यक्तीनां भेदेऽपि निरूपकतावच्छेदकस्याधिकरणतावच्छेदकस्य चैक्याद्व्याप्तेरैक्यं वस्तुतस्तु धूमत्वादिविशिष्टव्यापकवह्निसामानाधिकरण्यस्य रासभादि साधारणत्वाद्धूमत्वादिमति तादृशसामानाधिकरण्यं तद्वति धूमत्वादिकं वा व्याप्तिः आद्या भिन्ना द्वितीया त्वभिन्नैवेति ध्येयम् । अयं कपिसंयोगि एतद्वृक्षत्वादित्यादिसंग्रहाय असमानाधिकरणान्तम् । यत्तु इदं संयोगि द्रव्यत्वादित्यत्रा-

व्याप्तिवारणाय तत् संयोगस्य शाखाद्यवच्छेदेनहत्ते स्तत्वा वच्छेदेन तत्सामान्याभावहत्तावविरोधात् तत्र चातीन्द्रियस्य संयोगस्य सत्त्वात्परित' प्रतियोग्युपलब्धेरेमावात् इत्येन संयोग इत्यादि साध्यघमिति यत्र द्रव्ये संयोगसामान्याभावे मानाभावात् न च यो यदीययावद्विशेषाभाववान् स तत्सा मान्याभाववानिति व्याप्तेर्यावत्संयोगाभावा एव मान यत्तद् र्थयोरननुगमात् एकावच्छेदेन यावद्विशेषाभाववत्त्वस्योपा धित्वात् एतेन अयं संयोगसामान्याभाववान् संयोगयावद्विशे षाभाववत्त्वादिति निरस्तं व्यर्थविशेषणत्वादप्रयोजकत्वान्निगु णत्वादेरुपाधित्वाच्च । न च प्रतियोग्यनवच्छेदकतयैव द्रव्यत्वा देरभावावच्छेदकत्वं गुणत्वमवच्छेदकप्रमेयत्वादेस्तदभावा वच्छेदकत्वप्रसङ्गात् यथा च घटपूर्ववर्त्तित्वस्य प्रतिदण्ड वह्निसामानाधिकरण्यस्य वा प्रतिधूमं भिन्नत्वेऽपि दण्डत्व धूमत्वं वा तत्सामान्यस्यावच्छेदकं तथैव संयोगसामान्य भावावच्छेदक द्रव्यत्वादिकमित्यस्यापि सुवचत्वाचेति सम्प्र दायविद' । नवीनास्तूत्पत्तिकालावच्छेदेन घटादौ गुणस्य प्रश्नयावच्छेदेन गगनादौ संयोगस्य सामान्याभावो वर्त्तते तथा धूमवत्यपि विरक्षो दहनस्य इव पर्वते नितम्बे चुताग्रमो न शिखरे इति प्रतीतेः संयोगेन द्रव्यस्याप्यव्याप्य वृत्तित्वात् वह्नेरव्याप्यवृत्तित्वे वह्निमतोऽव्याप्यवृत्तित्वस्या

त्यन्तमसम्भावितत्वाच्च एवं प्रतियोगिमतोरपि कालदेशयोर्देश्यकालभेदावच्छेदेन तदभावः तथा च तत्तत्साध्यकाव्याप्तिवारणाय तत् नोपादेयञ्च सर्व्वथैव व्याप्यवृत्तिसाध्यके साध्यसाधनभेदेन व्याप्तिभेदादिति वदन्ति । प्रतियोग्यसामानाधिकरण्यञ्च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यं तेन अयं गुणकर्म्माण्यत्वविशिष्टसत्तावान् जातेः भूतत्वमूर्त्तत्वोभयवान् मूर्त्तत्वादित्यादौ नातिव्याप्तिः । न चोभयत्वमेक विशिष्टापरत्वं विशिष्टञ्च केवलादन्यदिति तदभावो मनसि सहजत एव प्रतियोगिव्यधिकरण इति वाच्यम् उभयत्वं हि न विशिष्टत्वादनतिरिक्तं न वा तदवच्छिन्नाभावस्तदवच्छिन्नाभावात् वैशिष्ट्यविरहेऽपि घटत्वपटत्वयोरुभयत्वस्योभयत्वेन तदभावस्य च प्रत्यक्षसिद्धत्वात् न च तत्र व्याप्तिरेवोभयत्वाधिकरणस्य मूर्त्तत्वस्य मनसि सत्त्वादिति वाच्यं तथात्वेप्युभयत्वेन रूपेण तत्रासत्त्वात् नात्रोभयमिति प्रतीतेर्दुर्व्वारत्वात् । अत्यन्तपदञ्चात्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरणस्य अत्यन्ताभावत्वनिरूपकप्रतियोगितायाश्च लाभाय अन्यथा सर्व्वस्यैवाभावस्य स्वसमानाधिकरणाभावान्तरभिन्नत्वात्तद्भेदस्य स्वस्वरूपानतिरिक्ततया प्रतियोग्यसामानाधिकरण्यस्यैव दुर्ल्लभत्वापत्तेः सर्व्वेषामेवाभावानां हेतुसमानाधिकरणात्यन्ताभावत्वनिरूपकप्रतियो-

ध्वंसप्रागाधिकरणाभावान्तरात्मकस्य ध्वंसभेदस्य प्रतियोगित्वादभावसाध्यकाव्याप्तेरिति सम्प्रदायविद । अथ यदा गोत्वं तदा गौरित्यत्रातिव्याप्तिः प्रलयस्य गोध्वंसवत्त्वेन गवात्यन्ताभावानधिकरणत्वात् संसर्गाभावमात्रोक्तावपि यदा घटः तदा घटप्रागभावः यदा अदृष्टं तदा जन्य ज्ञानं दुःखं वा यदा तत्प्रागभावः तदा तदीयं प्रागभावमित्यादावतिव्याप्तिः घटत्वादेर्घटध्वंसादिरूपमसत्त्वादिनिष्ठध्वंसप्रागभावप्रतियोगितानवच्छेदकत्वात् न हि तयोः सामान्याभावत्ववादिमतेऽपि एकविशेषप्रागभावविशेषान्तरध्वंसवत्यपि समये सामान्यावच्छिन्नध्वंसप्रागभावयोः सत्त्वम् इति चेन्न प्रतियोगिमतः ध्वंसादिमतोऽपि कालस्यात्यन्ताभाववत्त्वेऽविरोधात् अन्यथा अत्यन्ताभावस्य कालमात्रावृत्तित्वप्रसङ्गात् । इयांस्तु विशेषो यदेकस्य देशभेदावच्छिन्नं तयात्वमपरस्य तु स्वरूपावच्छिन्नमिति देशे कालस्येव कालेऽपि देशस्यावच्छेदकत्वात् तच्छून्ये च काले तदभावस्य प्रतियोगिव्यधिकरणत्वात् । न च संसर्गाभावविशेषोऽत्यन्ताभावः संसर्गाभावत्वञ्च संसर्गारोपजन्यप्रतीतिविषयाभावत्वरूपं अन्यताघटकनियमघटितमिति वाच्यम् तद्वदन्या वृत्तित्वरूपनियमस्य तत्र घटनात् एवं नियमान्तरस्यात्र प्रवेशेऽपि न क्षतिरित्याहुः । वक्ष्यते च नियमाघटितमेव संसर्गा

भावादिलक्षणम् अनुपदमेव च विवेचयिष्यते संसर्गाभावत्वप्रवेशे प्रयोजनविरहोऽव्याप्तिश्च । अथ ज्ञानवान् द्रव्यत्वात् विशेषगुणवान् मनोऽन्यद्रव्यत्वात् जातिमान् भावत्वादित्यादौ समवायेन ज्ञानादेः साध्यतायामतिव्याप्तिः साध्यशून्यानामपि हेतुमतां विषयत्वविशेषणत्वे कार्थसमवायी साध्यवत्त्वादिति चेन्नैवम् प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिनो यदधिकरणं सम्बन्धि वा तद्वृत्तित्वाभावस्योक्तत्वात् भवति चैवमन्योन्याभावोऽपि प्रतियोग्यसमानाधिकरणः तद्विशिष्टस्य च हेत्वधिकरणवृत्तित्वं वाच्यं तेन नाव्याप्यवृत्तिसाध्यकासंग्रहः तद्वृत्तिभिन्नत्वन्तु नार्थः अव्याप्यवृत्तिसाध्यकाव्यभिचारिण्यतिप्रसङ्गात् । अत्र सामानाधिकरण्यवतो न तदभाववत्त्वं प्रतीतेरन्यथैवोपपादितत्वादित्यस्वरसात् प्रतियोगिवैयधिकरण्येत्यादिविशेषणं वक्ष्यति तच्च हेत्वधिकरणे बोध्यं प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावेति पुनरभावान्तार्थनिष्कर्षः । ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्तत्सामान्यस्य प्रतियोगितावच्छेदकयत्किञ्चिदवच्छिन्नस्य वा अनधिकरणत्वमुक्तम् आद्ये अव्याप्यवृत्तिसाध्यकाव्याप्तिः एकप्रतियोग्यधिकरणस्यापि तदवक्तान्तरानधिकरणत्वात् द्वितीये संयोगसामान्याभाववान् द्रव्यत्वाभाववान् वा सत्त्वादित्यादावतिव्याप्तिः साध्याभाववतो द्रव्यस्य तत्प्रतियो-

गिसयोगविशेषाभाववत्वात् नित्यत्वादिविशिष्टद्रव्यत्वाभावा त्मकतत्प्रतियोगिनोऽधिकरणत्वाच्च स्वाभावाभावात्मकस्य वि शिष्टस्यापि द्रव्यत्वस्य द्रव्यत्वानतिरेकात् तृतीये कपिसयो गाभाववान् आत्मत्वादित्यादावव्याप्ति साध्याभावानां कपि संयोगानां गुणानामधिकरणस्याात्मनस्तत्प्रतियोगितावच्छे- दकगुणत्वाभावाभाववत्वावच्छिन्नानधिकरणत्वात् नैवम् यादृ शप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत तद नवच्छेदकत्वस्योक्तत्वात्। अत्र च यादृशसामानाधिकरण्ये हेतोर्यादृश सम्बन्ध प्रविष्टस्तेन सम्बन्धेन यो हेतुमान तत्र वर्त्तमानत्वसभावस्य साध्यस्य च यादृश सम्बन्ध प्रविष्टस्तत् सम्बन्धावच्छिन्नायाश्च प्रतियोगिताया अनवच्छेदकत्व बोध्य तेन धूमसमवायिनिष्ठाभावस्य संयोगावच्छिन्नप्रतियोगिताया धूमसंयोगिनिष्ठाभावस्य च समवायावच्छिन्नप्रतियोगिताया अवच्छेदकत्वेऽपि वह्नित्वस्य न क्षति । यद्वा साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्व हेतुमतो वक्तव्यम् तथा च सम्बन्धभेदेन प्रतियोगिता न विशेषणीया एवं स्थिते सामानाधिकरण्यादौ सम्बन्धित्व निवेशनीयं नत्वधिकर णत्व तथा च धर्म्मिणोऽपि व्याप्यत्व व्यापकत्वच निर्वहति तथा हि तादात्म्ये न सम्बन्धेन धूमवत सम्बन्धिनि महानसे वर्त्तमानो योऽन्योन्याभावस्तस्य तादात्म्यसम्बन्धावच्छिन्ना

या प्रतियोगिता तदनवच्छेदकवह्निमत्त्वावच्छिन्नस्य वह्नि-मतस्तादात्म्येन सम्बन्धिनि महानसे धूमवतस्तादात्म्येन सम्बन्धित्वम् एवं धर्म्मिणोधर्म्मव्याप्यत्वव्यापकत्वे बोध्ये अत-एव जलादीनां पृथिवीत्वाभावव्याप्यत्वं तत्र तत्रोक्तं सङ्ग-च्छते। यथाच यादृशेन सम्बन्धेन हेतोर्व्याप्यता गृहीता तादृशेन सम्बन्धेन तस्य पक्षविशिष्टत्वज्ञाने यादृशेन सम्ब-न्धेन च साध्यस्य व्यापकत्वमवगतं तादृशेनैव साध्यपक्षयो-र्विशिष्टानुमितिः तेन न धूमावयवे संयोगेन न वा समवायेन पर्वते वह्निधीः तथैवावगतव्यापकताघटकसम्बन्धेन व्यापक-स्याभावग्रहे गृहीतव्याप्यताघटकसम्बन्धेन व्याप्यस्याभावः सिध्यतीति कथमन्यथा समवायेन वह्निविरहिणि महानसे संयोगेन संयोगेन वा वह्निविरहिणि स्वावयवे धूमः समवायेन न निवर्त्तते निवर्त्तते च संयोगेन वह्निविरहिणि स्वावयवे संयोगेनेति नियम उपपद्यते तथा च तादात्म्यसम्बन्धेन जला-दीनां व्याप्यत्वग्रहाद्व्यापकनिवृत्त्या तादात्म्येनैव तेषामभाव' सिध्यति स एव चान्योन्याभावः। इत्थमेव च तादात्म्याद्-वृत्तिधर्मयोर्व्याप्तिनिश्चय इति सङ्गच्छते अतएव गोत्वत्वाद्य-ग्रहदशायां यत्र सास्नादिः सा गौरिति तादात्म्येन गोर्व्या-पकत्वग्रहे सास्नादिना तादात्म्येन गौः तादात्म्येन गोर्व्यति-रेकाच्च सास्नादिव्यतिरेकः सिध्यति एवञ्च संयोगेन गग

मादेरपि द्रव्यत्वव्याप्यत्व वृत्त्यनियामकसंयोगमात्रस्याभाव-
प्रतियोगितावच्छेदकसम्बन्धरूपत्वे साध्यतावच्छेदकसम्बन्धेन
प्रतियोग्यसम्बन्धित्वाभिधाने वा पृथिवीत्वादिव्यापकत्वमपि
तदभाववतोऽपि पृथिव्यादे संयोगेन तदसम्बन्धित्वात्
सिद्धिरपि तस्य तथैव न तु वृत्तिनियामकसम्बन्धेन तेना-
सम्बन्धित्वाद्व्यापकत्वाच व्यक्तीभविष्यति चैतदुपरिष्टात् ।
नन्वष्टद्रव्यातिरिक्तद्रव्यात्मकत्वानमात्रवृत्तिधर्मस्य विशेषण
तासिद्धिशेषेणाव्याप्यवृत्ति किमपि व्यापकं न स्यात् तावच्छे-
दकसम्बन्धेन प्रतियोगिनोऽसम्बन्धिनि काले वर्त्तमानस्या
भावस्य प्रतियोगितायां तदवच्छिन्नत्वस्य तेन सम्ब-
न्धेन यत्प्रतियोगिसम्बन्धितदन्यत्वस्य च काळेऽसम्भवात् ।
न च तादृशसम्बन्धेन कैवधिकरणीभूतयत्किञ्चिद्यद्वृत्ति
प्रतियोगितावच्छेदक विशिष्टप्रतियोगिसामान्यकत्वमेव च
तस्य तथा चावृत्तिगगनाद्यभावद्वारिकैव तत्सिद्धि सत्ताद्यधि
करणकर्मादौ समवायेन घ्राणसामान्यस्य संयोगसामान्यस्य
चावृत्ते र्नातिप्रसङ्ग भूतत्वमूर्त्तत्वोभयत्वविशिष्टगुणकर्मो-
न्यत्व विशिष्टसत्तात्वविशिष्टसत्तादिकन्तु न मनोगुणादिवृत्ति
संयोगसामान्यन्तु न किञ्चिद्वृत्त्यावृत्तीति वाच्य विशिष्टस्या
नतिरिक्तत्वात् समवायेन जाति साध्यत्वे नियत्वाद्यवत्त्याप्ति
जातिमत्त्विष्ठतादृशाभावप्रतियोगिताया जातित्वेनावच्छे-

दात् जातिशून्ये च तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः संयोगादिसाध्यकगुणकर्म्मान्यत्वादौ चातिव्याप्तिः अद्रव्ये हेतुमति तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः द्रव्ये च संयोगादेरपि वृत्तेः मैवम् साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूत यत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्य विवक्षितत्वात् । धूमसंयोगे वह्न्यधिकरणायोगोलकानुयोगित्वस्य चैत्रान्यत्वविशिष्टैतद्दण्डसंयोगे एतद्दण्डाधिकरणचैत्रानुयोगिकत्वस्य गुणकर्म्मान्यत्वविशिष्टसत्तासमवाये च जात्यधिकरणगुणानुयोगिकत्वस्य विरहान्नातिप्रसङ्गः स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभाव प्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्म्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्म्मावच्छिन्नस्य व्यापकत्वं बोध्यम् । समवायसम्बन्धेन मेयसामान्याभावस्य सामान्यादौ सत्त्वान्मेयत्वादेरप्यभावप्रतियोगितावच्छेदकत्वं सुलभम् अतएव समवायस्यैकत्वेन द्रव्यत्वादिप्रतियोगिकत्वगुणाद्यनुयोगित्वोभयसत्त्वेऽपि द्रव्यं जातेरित्यादौ वह्निधूमोभयवान् वह्नेरित्यादौ संयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेऽपि च नातिव्याप्तिरित्यपि वदन्ति । प्रतियोगित्वादिश्च स्वरूपसम्बन्धविशेषो न सम्बन्धत्वेन निविष्टः सामानाधिकरण्येऽपि स-

म्बन्ध' मयोगत्वादिमेव निविशते दर्शितश्च नियमाघटितमपि मम्बन्धत्वम् । अभावगृहेदमिह नासीदमिदं न भवतीति प्रतीतिनियामकोभावाभावसाधारण स्वरूपसम्बन्धविशेष एतो नाभावसाध्यकव्यभिचारित्वातिप्रसङ्ग तदपि वा गोपा देय प्रयोजनविरहात् विषयतात्वादिवत् प्रतियोगित्वा धिकरणत्वतत्वसम्बन्धत्वादयोऽप्यतिरिक्ता एव पदार्था इत्येक देशिन ।

नन्ववच्छेदत्वमिह न स्वरूपसम्बन्धविशेष सम्भवति च नघो धर्मे गुणे तदभावात् प्रमेयधूमत्वकम्बुग्रीवादिमत्त्वघ्रा णयाद्यगुणत्वादेस्तथात्वेन तेन रूपेण साध्यतायां व्यभिचारि त्वातिप्रसङ्गात् नाप्यनतिरिक्तवृत्तित्वं प्रतियोगिताया स्वरू पसम्बन्धात्मिकाया प्रतियत्किंभिद्यत्वेन धूमत्वादेरपि तद तिरिक्तवृत्तित्वात् । न च तथाविधयत्किञ्चिदेकाभावप्रतियो गितासामान्यशून्यावृत्तित्वं तत् अतएवातिरिक्तसामान्याभा वस्याभावे धूमत्वादेरव्यनवच्छेदकत्वापातादिति तत्साधनमपि साधु सङ्गच्छत इति वाच्य वह्निघटवृत्तिद्वित्वतार्णतार्ण इह नहीत्तिद्वित्वाद्यवच्छिन्नप्रतियोगिताकाभावप्रतियोगितानति रिक्तवृत्तियत्त्वादावतिप्रसङ्गात् एतेनान्यूनवृत्तित्वविशेषित- मपि परास्तम् अतएव नानाप्रतियोगिकत्वैकप्रतियोगिताङ्गी कारेऽपि न निस्तार' अगुरूपसमनियतगुरुरूपेण साध्यतायां

सङ्केतावव्याप्तिः ताट्टशतदवच्छिन्नत्वाप्रसिद्धेरिति चेन्न प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य विवक्षितत्वात्। स्वसमानवृत्तिकत्वावच्छेदकं ग्राह्यं तत्त्वञ्च स्वपर्य्याप्त्यधिकरणपर्य्याप्तिवृत्तिकत्वं यावत्त्वादिकन्तु न तथा पर्य्याप्तिश्चायमेकोघट इमौ द्वाविति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेष एव त्रित्वादिकमपि न द्वित्वादिसमानवृत्तिकमिति द्वित्वादिना साध्यतायां नाव्याप्तिः घटकत्वावच्छेदकत्व स्वरूपसम्बन्धविशेष एवञ्च यद्धर्म्मावच्छिन्नेत्यत्र यद्धर्म्मान्यूनवृत्तिधर्म्मावच्छिन्नेति वक्तव्यं तेनोक्ता व्याप्तिनिरासः। वस्तुतस्तु तदवच्छिन्नप्रतियोगिताकाभाववद्सम्बद्धस्वविशिष्टसामान्य--कत्व स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतत्कत्वं वा तदनतिरिक्तवृत्तित्वं वक्तव्यम् अतएव सत्तावान् जातेरित्यादौ जातिमन्निष्ठाभावप्रतियोगितावच्छेदकगुणान्यत्वविशिष्टसत्तात्वतुल्यवृत्तिकत्वेऽपि सत्तात्वस्य न क्षतिः एवं स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं बोध्यं तादृशप्रतियोगिताश्च विशिष्योपादेयाः नातोगुरोरवच्छेदकत्वं विना दुर्वचत्वं प्रतियोगित्वं सम्बन्धित्वञ्च साध्यतावच्छेदकसम्बन्धेन बोध्यमतो न सम्बन्धभेदमादाय दोषः। कालिकविशेषणताविशेषेण च साध्यतायां तादृशप्रतियोगितावच्छेदकत्वमनित्यतत्तद्वृत्तित्वे प्रसिद्धम् अभावश्च

प्रतियोगिव्यधिकरणो बोध्यः । न च गौणमिदमीयत्व
प्रतियोगिवैयधिकरण्यमनुपादेयं संयोगत्वाद्यवच्छिन्नाभाव
वति संयोगत्वादिविशिष्टस्य द्रव्यगुणादिनिष्ठाभावप्रतियोगि
तावच्छेदकद्रव्यत्वावच्छिन्नसमवेतत्वाद्यवच्छिन्नाभाववति-
वावृत्तेरव्याप्त्यतिव्याप्त्योरनवकाशादिति वाच्यं धूमवान्
वह्नेरित्यादावतिव्याप्तेः नह्युत्पत्तिकालावच्छेदेनापि महा
नसादौ किञ्चित् संयोगेन वर्त्तते येन वह्निमत्संयोगो
त्पत्तिनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकसंयोगोत्पत्तिद्र
व्यत्वाद्यवच्छिन्नाभाववद्वृत्तित्वं धूमत्वविशिष्टस्य सम्भाव्येत ।
प्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वस्य विशेषणताविशेषा
वच्छिन्नत्वस्य वा निवेशे पुनरनुपादेयमेव प्रतियोगिवै
यधिकरण्यद्वयम् यत्राधिकरणे व्यभिचारस्तदन्यत्वस्य तद्व्याप्य
प्रकारकप्रमाविषयत्वस्य साध्यवत्त्वप्रकारकप्रमाविषयत्वस्यादीनां
साध्यतावच्छेदकविशिष्टसाध्यवन्निष्ठात्यन्ताभावप्रतियोगिता
नवच्छेदकत्वाद्धेतुतावच्छेदकविशिष्टहेतुमन्निष्ठाभावप्रतियो
गितावच्छेदकत्वाभावाच्चातिव्याप्तेरनवकाशात् तथा च विशेष-
णताविशेषावच्छिन्न यत्सम्बन्धविशिष्टसम्बन्धिनिष्ठाभावप्रतियो
गितानवच्छेदकावच्छेदकं यत्त्वं तत्सम्बन्धावच्छिन्नसाधनसमाना
धिकरणात्यन्ताभावप्रतियोगिता सामान्ये नास्ति साधने
तद्धर्मविशिष्टसामानाधिकरण्यं व्याप्तिरिति पर्यवसितोऽयं

यत्र सद्धेतुविशेषे साध्यतावच्छेदकं न प्रतियोगितावच्छेदकं तत्रैवेयं रीतिरुपादेयेत्यपि वदन्ति। गौरवप्रतिसन्धान दशायामपि कम्बुग्रीवादिमान् नास्तीतिप्रतीतिबलात् गुरुरपि धर्मोऽवच्छेदकः प्रतियोगितायाः। नचास्यास्तत्प्रतियोगिकाभावमात्रमवलम्बनं तथाविधयत्किञ्चिद्वत्तिसत्त्व एव तादृशप्रतीतेरनुदयात् अतएवैकघटवति भूतले कम्बुग्रीवादिमान् नास्तीतिशब्दो न प्रमाणं प्रमाणञ्च घटसामान्यशून्ये न चेदेवं लघुरूपसमनियतानां गुरूणामव्याप्यतापत्तिः गुणादिगुणकर्म्मान्यत्वविशिष्टसत्तादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वनिष्ठायाः प्रतियोगिताया लाघवेन द्रव्यादिनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वेनैवावच्छेदात् तत्तदवच्छेदकत्वे व्यक्तीनाञ्च प्रातिस्विकरूपेणाभावानां युगसहस्रेणापि ज्ञातुमशक्यत्वात् एवं द्रव्यत्वत्वादिविशिष्टद्रव्यत्वादेरव्याप्यत्वप्रसङ्गोऽप्यनुसन्धेयः उपदर्शितप्रकाराणामपि स्वत्वादिघटितत्वेन दुर्ज्ञेयत्वात् अतएव घ्राणग्राह्यगुणत्वादिना साध्यतायां द्रव्यत्वादेर्व्यभिचारित्वं साधुसङ्गच्छत इत्यपि केचिदिति कृतं पल्लवितेन।

ननु यएव मिलिता वह्न्यभावा जलह्रदादौ वह्निर्नास्तीतिधियं जनयन्ति तएव प्रत्येकं धूमवति महानसादौ वर्त्तन्ते तत्र च तेषां स्वस्वावच्छेदकतत्तद्वह्नित्वावच्छिन्न-

वैयधिकरण्यनिरूपिकाया प्रतियोगितायदवच्छेदकमेव
वह्नित्वमतोऽव्याप्ति नचैव वह्निव्याप्यधूमस्य तदृत्तित्वाच्च
यथार्थं तथा सति इदवृत्तिधूमाभावप्रतियोगितावच्छे
दकच्छेदाहवृत्तित्वावच्छिन्नस्य वह्निमदयोगोलकवृत्तित्वादति
व्याप्तेः । अथानुगत रूप तत्तदभावप्रतियोगितानां
मावच्छेदकम् अनवच्छेदकमेव तत्तदभावप्रतियोगिताया
अभावान्तरे मानाभावात् । तथा च तद्रूपावच्छिन्नसाध्यके
व्यभिचारिण्यतिव्याप्तिरत आह सामान्येति । अन्यथान्यथा
नुपपत्ति प्रमाणयति अन्यथेति । वायाविति । यद्यप्यय
संशयो न वायुविशेष्यक तस्य विशेषणत्वेनोपस्थितत्वात् न वा
रूपविशेष्यक तथा सति रूपतदभावयोर्विरोधिनोरकोटि
तायां प्रकृतानुपयोगप्रसङ्गात् तथापि वायू रूपवान् तद-
भाववान् वेति रूपतदभावकोटिकसंशये तात्पर्य्यम्
अन्यथास्तु रूपवत्तदन्योन्याभावकोटिक इति नाभेद इति सम्प्र
दायविद् । विरुद्धयोरेकधर्म्मिसंसर्गावगाहिज्ञानमेव सं
शयो न तु तदुभयप्रकारतापि नियता तथा च रूपतदभाव
विशेष्यकोवायुविशेषणकोऽसावपीति तु नव्याः । वायुवृत्ति
त्वतदभावकोटिको रूपधर्म्मिक एवायं संशय अधिकरणे
तत्तदभावान्यतरनिश्चयस्यापि तथाधिकरणवृत्तित्वसंशयविरो
धित्वात् अन्यथा भूतले घटतदभावान्यतरनिश्चयेऽपि घटो

भूतलवृत्तिर्नवेति संशयप्रसङ्गादित्यपरे। अथैतावन्त्येव रूपाणीत्यनिर्णयात् यावद्रूपाभावानिर्णये संशयो न विरुध्यत इति चेत् यावद्रूपाभावानिर्णय इत्यस्य यावन्तो रूपाभावस्तेषां यावत्त्वेन रूपेण तेषां यावन्ति रूपाणि तावदभावानां यावद्रूपत्वेन तदभावानां वा अनिर्णय इत्यर्थः। न प्रथमतृतीयौ तथानिर्णीतत्वात् नेतरौ प्रतियोगितदभावयोर्यावत्त्वानुल्लेखेऽपि योग्यानुपलब्ध्या भूतले घटो नास्तीति निश्चयमात्रादेव घटतदभावसंशयोच्छेददर्शनेन तस्याकिञ्चित्करत्वात्। न चातिरिक्तसम्भावनाविरहसहकृत एवाभावनिश्चयस्तत्प्रतिबन्धकः सम्भावना च रूपं पार्थिवादित्रितयभिन्नं न वेत्याकारा निवर्त्तते चेयं रूपत्वावच्छेदेनैतत्त्रितयभिन्नत्वाभावनिश्चयादेवेति वाच्यम् गौरवात् विनापि अतिरिक्तसम्भावनां विशेषाभावनिश्चये सामान्यसंशयदर्शनाच्च। अथाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वनिश्चय एव तादृशसंशयविरोधी अन्यथा तत्राप्यतिप्रसङ्गात् स च न प्रकृते अभावस्य च यावद्विशेषाभावाधिकरणवृत्तित्वेन विशिष्टस्य तदवच्छेदेन वा सामान्यावच्छिन्नप्रतियोगिताकत्वं सम्भवति चेदं तादृशाभावप्रतियोगिताया अतिरिक्तत्वात् तेन नैकविशेषवतो विशेषान्तराभाववत्त्वेन सामान्याभाववत्त्वप्रसङ्गः। न च प्रतियोगितावच्छेदकभेद-

स्याभावभेदनियामकतया भेदसिद्धिः प्रतियोगिभेदस्य तत्त्वे एकघटप्रतियोगिकस्य प्रागभावादि चतुष्कस्याभेदप्रसङ्गात् अवच्छेदकन्तु भिन्नत एव तत्र कथित्तादात्म्यस्य कथिच्च संसर्गस्य कथित्पूर्व्वापरकालीनघटत्वादेर तथात्वादिति वाच्यं संसर्ग प्रतियोगिविशेषणसाधारण्येकत्वावच्छेदकत्वस्य दुर्व्वचत्वात् पूर्व्वापरकालीनत्वादेश्च सादिप्रतियोगितावच्छेदकत्वे सा नाभावाच। किञ्च अवच्छेदकभेदस्याभावभेदनियामकत्वम् न तज्जनकत्व अन्यत्वाभावादिप्रसङ्गात् तत्तादात्म्याभावात् नापि तद्व्याप्यत्वमपि वैयधिकरण्यात् अतएव न तद्व्यापकत्वमपि अभेदेऽप्यविरोधाच न च तद्वित्तरधर्म्मावच्छिन्नप्रतियोगिता कत्व तदवच्छिन्नप्रतियोगिताकान्यत्वस्य व्याप्य मानाभावात् अतएव च समनियतसुखदुःखादित्वत्वावयापरिमाणस्य नाशादि नानाधर्म्मावच्छिन्नोऽप्यभिन्न एवाभाव भेदसिद्धिस्तु भावयद्भावस्यापि विरुद्धधर्म्माध्यासादेव अतएव गगनादीनां महत्त्वीनां समनियतानां वा धर्म्माधर्म्मिक एवात्यन्ताभाव युगपदुत्पन्नविनष्टानां समानादेयामासति बाधके एक एव ध्वंस प्रागभावो येति। व्यधिकरणधर्म्मावच्छिन्नप्रति योगिताकोऽपि चेदभाव प्रामाणिकस्तदा तस्यैकस्यैव प्रतियोगिता सर्व्वैरेव व्यधिकरणैर्धर्म्मैः सर्व्वैव समाना समानाधिकरणैः सम्बन्धैरवच्छिद्यन्ताम् आकाशाभाव एव

वा तथास्त्वामिति नैवम् एवं हि तत्तद्देशकालाद्यवच्छिन्ना-नवच्छिन्नतत्तदधिकरणवृत्तित्वेन विशिष्टस्य तत्तदवच्छेदेन वा एकस्यैवाभावस्य घटपटगोत्वाश्वत्वादिप्रतियोगिताकत्व-सम्भवेन तत्तद्भेदोऽपि विलुप्येत । तत्तत्प्रतियोगिकत्वं तत्त-त्स्वभावो न च तत्राधिकरणवृत्तित्वस्यान्तर्भावोऽवच्छेदकत्व-ञ्चेति समानम् । अतएव सामान्यावच्छिन्नप्रतियोगिताकत्व व्यासज्यवृत्तीत्यपि प्रयुक्तम् अव्यासज्यवृत्तेस्तत्स्वभावस्य तत्त्वानुपपत्तेरतिरिक्तकल्पने च किमपराद्धमतिरिक्ताभावेन । किञ्च व्यधिकरणयोर्घटपटयोर्द्वित्वप्रतीतिवद्व्यधिकरणानामपि विशेषाभावानां युगपदिन्द्रियसन्निकर्षे सामान्यावच्छिन्नप्र-तियोगिताकत्वप्रत्ययोऽपि स्यात् अपि च रूपान्तरेण सम्बन्ध-विधया वा व्यासज्यवृत्तिधर्मस्य ज्ञानेन यावदाश्रयसन्निकर्षा-पेक्षामानाभावात् एवञ्च एकाभावसन्निकर्षेऽपि सामान्यभाव-बुद्धिप्रसङ्गः यादृशे च तस्य ज्ञाने यावदाश्रयाणां सन्निकर्षो-ऽपेक्ष्यते तत्र तेषां तद्भेदस्य च ज्ञानमपि तदज्ञाने तद्भेद-ज्ञाने च तदग्रहात् आश्रयभेदभ्रमेण तद्भ्रमदर्शनाच्च न चात्र यावद्विशेषाभावानां प्रथममुपस्थितिः सम्भवति तत्प्रति-योगिनां विशेषतोऽनुपस्थितेरिति दिक् । केचित्तु अनन्त-विशेषाभावानां सामान्यावच्छिन्नप्रतियोगिताकत्वस्य तद्व्या-सज्यवृत्तित्वस्य च कल्पनामपेक्ष्य लाघवात् सामान्यावच्छिन्न-

प्रतियोगिताकत्वेनैक एवाभावः कल्प्यते कल्पनीययोरेतयो
भयत्र गुरुत्वेऽपि एतद्रूपेण तस्य गुरुत्वात् विशिष्टसत्ता
भावेऽपि च सामान्याभावसिद्धिरस्त्वेव धर्मकल्पनातो
धर्मिकल्पनाया गुरुत्वं कल्पनीयानेवाप्रयुक्तम्। न चास्ति
विशिष्टाभावस्य तत्र च सामान्यावच्छिन्नप्रतियोगिताकत्व
समानतयाव्याप्याधिकरणवृत्तित्वस्य च कल्पनामपेक्ष्य स्वस
मानतयाव्याप्याधिकरणवृत्तित्वानां यावद्विशेषाभावानामेव सा-
मान्यावच्छिन्नप्रतियोगिताकत्वस्य तथाभूतवृत्तित्वस्य च
कल्पनेव लघीयसीति वाच्यम् एवं सत्यभावमात्रासिद्धि
प्रसङ्गादित्याहुः।

यद्वेत्यादि। अथात्र सामान्यतोरूपादिसाध्यकेष्वपि
पृथिवीत्वादावव्याप्तिः न च तत्र रूपवत्त्वादिकमेव साध्य
तच्च परम्परासम्बन्धेन रूपत्वादिकमेव तेन च सम्बन्धेन
न तदभावः पृथिव्यादाविति वाच्यं रूपादेरसाध्यतापत्ते
द्रव्यान्यत्वादिविशिष्टसत्त्वाद्यभावस्य द्रव्यादिवृत्तित्वात् सत्ता
दिसाध्यकद्रव्यत्वादावव्याप्तेश्च अन्यथा विशिष्टतया सत्तादे
साध्यत्वे व्यभिचारिणि जातिमत्त्वादावतिप्रसङ्गात्। द्रव्यत्वा
दयिष्यते च विशिष्टाभावस्य विशेष्यप्रतियोगिकत्वस्थितावप्यव
च्छिन्नसाध्याभावस्य तत्र सत्त्वाच्च। अथाप्रतियोगित्व
प्रतियोगित्वाभाव स च येन रूपेण तद्रूपावच्छिन्नव्याप्यत्व
हेतौ अस्ति चायं रूपादौ रूपत्वादिना न पृथिव्यादिनिष्ठ

भावप्रतियोगित्वमिति प्रत्ययादिति चेन्न तादृशप्रतीत्यादिरूपत्वादौ प्रतियोगिताया अवच्छेदकत्वाभावो गृह्यते न तु तदभावावच्छेदकत्वं सर्वत्रैव रूपे पृथिवीनिष्ठाभावप्रतियोगित्व न तु कुत्रापि रूपे तदभाव इत्यबाधितप्रत्ययात् अन्यथा यो यो धर्मो यस्य यस्य नावच्छेदकः तत्तदवच्छेदेन तत्तदभावोऽप्युक्तरीत्या सिध्येत्। प्रमेयधूमत्वेन न वह्निमन्निष्ठाभावप्रतियोगित्वमिति प्रत्ययात्तदवच्छेदेन तादृशप्रतियोगित्वाभावस्यापि सुवचत्वात्। अथ प्रमेयधूमत्व न गौरवेण सामानाधिकरण्यप्रतियोगितावच्छेदकं विवक्षितत्वात् तथेति चेत् असमानाधिकरणधूमकव्यक्तिवृत्तितया वह्नित्वमपि न तदवच्छेदक कम्बुग्रीवादिमत्त्वादिना च घटादेरसाध्यतापत्तिरिति बहुव्याकोपस्य। अतएव प्रमेयधूमत्वं गौरवेण प्रतियोगिताया इव तच्छून्यताया अपि नावच्छेदकमित्युक्तावपि न निस्तारः। अत्र वदन्ति अप्रतियोगित्वं प्रतियोगितानवच्छेदकधर्म्मवत्त्वं न चैवं पूर्वस्मादभेदः तत्र साध्यजातीयसमानाधिकरणसाधनजातीयत्वस्य अत्र च साध्यसाधनयोः सामानाधिकरण्यस्य व्याप्तित्वे तात्पर्य्यात् घटकयोस्तादृशप्रतियोगितावच्छेदकतत्त्वान्योऽन्याभावात्यन्ताभावयोर्भेदेन भेद इत्यपि कश्चित्।

अत्यन्ताभावगर्भत्वसामान्यविशेषभेदेनान्योऽन्याभावगर्भमपि व्याप्तिद्वयमाह यत्समानाधिकरणेत्यादिलक्षणद्वयेन

प्रथमे एकस्य साध्याधिकरणाप्रसिद्ध्यात् द्वितीयलक्षणम्
अथ यद्यपि नानाव्यक्तिसाध्यकस्थले तत्तत्साध्यवत्तत्तत्सा-
ध्यवत्त्वस्य च साधनसमानाधिकरणान्योन्याभावप्रतियोगित्व-
तदवच्छेदकत्वाद्व्याप्तिः तथापि यद्रूपावच्छिन्नयत्त्व
तादृशान्योन्याभावप्रतियोगितानवच्छेदक तद्रूपावच्छिन्न
सामानाधिकरण्यमित्यत्र तात्पर्यम् पक्षादौ तत्संयोगादौ
तदादौ वा साध्ये सर्वत्र साक्षात्परम्परया वा अनुगमक
वह्नित्वादिकमेव साध्यतावच्छेदकं तदवच्छिन्नवत्त्वस्य च न
साधनान्योन्याभावप्रतियोगितावच्छेदकत्वमिति यत् यद्रू
पावच्छिन्नं यादृशरूपावच्छिन्नमनवच्छेदकमिति वा यथा
यथ वक्तव्य शब्देकस्यानुपादेयत्वात्। अन्येत्यादि। यद्य
प्युक्तरीत्या सर्वत्र साध्यप्रतियोगितानवच्छेदकत्वपर्यन्तानु-
धावनस्यावश्यकत्वेनाकिञ्चित्करमेव तादृशाभावप्रतियोगित्व
तथापि विशिष्टसामानाधिकरण्यरूपाया व्याप्तेर्व्यधिकरण
धर्मावच्छिन्नमात्रे तात्पर्यं व्याप्तिरेवेत्यस्य कास्मिन्नोत्यादि
अन्योन्याभावगर्भलक्षणस्याव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्ति-
निरस्यति न चेति। अभेदस्येति। तथा च भूले मषीरक्तो
विशिष्टसंयोगी नेति प्रतीतिरनुभूयमानविशिष्टभेदोऽविच्छिन्ना
ऽपि भिन्नौ विनष्ट इति प्रतीतिर्विशेषणाभावविषयता
मात्रं कल्पते बाधकाभावात् अत्र च विशिष्टभेदेन बाधक
तया तथा प्रतीतिः प्रज्ञातस्वसिद्धिरप्रत्यूहैवेति नातिप्रसङ्ग ।

रपि घटसंसर्गाभावं बोधयन्ति तथात्वे वा घटो न घट इत्यादेरपि प्रसङ्गात् अपि च विशिष्टवाचकदण्डादि-पदेभ्योधर्म्युपसर्जनतयोपस्थितस्य दण्डादेः कथं प्रति-योगित्वेनाभावेऽन्वयः इतरविशेषणत्वेनोपस्थितस्य निराका-ङ्क्षतयान्यत्र विशेषणत्वेनान्वयायोगात् न चात्र विशिष्टोप-स्थापकं पदं विशेषणमात्रपरं तथापि चैत्रो न दण्डी घटो न श्यामं रूपमित्यादावपि दण्डादिसंसर्गाभावप्रतीत्यापत्तेर्दु-र्वारत्वात् एतेन नञोऽभाववलाचणिकतया विनैव सप्तमो-मन्वयबोधसमर्थनं प्रत्युक्तम् एवञ्च चैत्रो न पचतीत्यादौ आख्याताच्छक्त्या लक्षणयावोपस्थितस्य कर्त्तुरेव भेदोभासत इत्यस्तु वस्तुतो न पचति चैत्रो नेदं मैत्रस्येत्यादौ विभक्त्यर्थस्य कृतिसम्बन्धादेरभावान्वयबोधे नञा सप्तमो नापेक्ष्यते अपे-क्ष्यते च प्रातिपदिकार्थस्येति निपुणतरमुपपादयिष्यामः । नञो वैधर्म्म्यपरतया न श्याम इत्यादेः श्यामादिविधर्म्मेत्यर्थः वैधर्म्यञ्च रक्तत्वादिकमेव इदाहुराचार्य्याः श्यामाद्रक्तो विधर्म्मा न तु पृथगित्यपि वदन्तीति कृतं पल्लवितेन ।

सम्बन्धत्वेनेति निरूपितत्वमेतत् । कस्येति इत्यञ्चा-ननुगताया अपि व्याप्तेर्ज्ञानं यथानुमितिहेतुस्तथा वक्ष्यते । एते अन्योऽन्याभावात्यन्ताभावगर्भे । तादृशेति । ननु किं द्वित्वादिकं प्रतियोगितावच्छेदकमेव न भवति किंवा भव-त्येव परन्तु कृ,मानासेव स्वसमानाधिकरणतत्तद्धर्म्मावच्छिन्न-

प्रतियोगिताकानामभावानां नानापादित्यभिप्राय नाप्य एकैकाभावप्रतीतिस्तो दौ न स्त इति प्रतीतेर्विभक्तघटत्वात् शब्दादिना दौ न स्त इति निययेऽप्येकैकाभावसंशयाश विष यानुगम विना अनुगताकारप्रत्ययायोगात्। न चाभावस्य द्वित्वाधिकरणप्रतियोगिकत्वमात्र द्वित्वसमानाधिकरणध र्मावच्छिन्नप्रतियोगिताकत्व वा स्वयं नाप्नोति प्रतीतेर्विषय तादृशद्वित्वाधिकरणव्यक्तिविशेषविरहेऽपि तथाविधो भय गामिनि तादृशौ दौ न स्त इत्यप्रत्ययात् द्वित्व सामानाधि करण्याभावेऽपि प्रतीतेरनुगताकारत्वाच्च अतएव न तादृश प्रतीतेर्घटत्वपटत्वाद्यन्यतरावच्छिन्नप्रतियोगिताकाभावविषय त्वम् अन्यतरत्वानुल्लेखेऽपि घटपटौ न स्त इत्यनुगतप्रत्ययाच्च न च परम्परासम्बन्धेन तादृशद्वित्वसामान्याभावएव दौ न स्त इति प्रतीतेर्विषय द्वित्वाधिकरणयोरेव प्रतियोगित्वोक्ते र्यात् द्वित्वादेर्घटादिवृत्तित्वानुपस्थितावपि प्रकृत शब्दे नापि घटपटौ न स्त इत्यादिप्रत्ययाच्च अतएवैकैकविशिष्टा पराभावोऽपि न तदासम्भव विरुद्धयोरपि जलत्वपृथिवी त्वयोर्द्वित्वेनाभावप्रत्यय इत्युक्तत्वाच्च। नास्य तथात्वेऽपि साध्यतद्दतोस्तादृशाभाव प्रतियोगित्वानपायात् प्रकारेणा भावान्तरमेकैकघटवति जायमानाया यत्किञ्चिद्घटद्वयवति चानुत्पद्यमानाया घटौ न स्त इति प्रतीतेरुपपादयितुमशक्य त्वादित्यत आह अभ्युपगमेवेति। उभयत्वमेव प्रतियोगि

तावच्छेदकं न तु साध्यतावच्छेदकं साध्यवत्त्वं वेत्यर्थः अमूय-माणावच्छेदकत्वांशेऽपि लक्षणे तथैव विवक्षितमिति भावः । तच्चेति स्वं साधनत्वाभिमतं तथा च साधनसमानाधिकरणा-त्यन्ताभावप्रतियोगितावच्छेदका यावन्तो धर्मा यद्धर्मांव-च्छिन्न-समानाधि-करणात्यन्ताभाव-प्रतियोगितावच्छेदकाः तद्धर्मावलीढसामानाधिकरण्यमित्यर्थः एतेन सर्वत्र तादृशै-र्धावच्छिन्नस्य तादृशावच्छिन्नयावत्प्रतियोगिकस्य चाति-प्रसञ्जकात् यावत्त्वाद्यवच्छिन्नप्रतियोगिताकादतिरिक्तस्या-भावस्याप्रसिद्धिः तादृशावच्छिन्नप्रतियोगिताकानां यावद-भावानामधिकरणस्य प्रायशस्तथा रूपादि साध्यकपृथिवीत्वा-दावव्याप्तिश्च क्वापि रूपादिव्यक्तौ तादृशयावदभावसामाना-धिकरण्यासम्भवादिति प्रत्युक्तम् । सर्वत्र सोपाधावेकव्यक्तिकस्य सम्भवतोऽप्युपाधेर्द्धर्मान्तरविशिष्टत्वादिना अभावो भवत्येव साध्यसमानाधिकरण इत्यवच्छेदकानुसरणम् । साधनसमाना-धिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगि-ताका यावन्तोऽभावा यद्धर्मावच्छिन्नसमानाधिकरणास्त-द्धर्मावलीढसामानाधिकरण्यमित्यर्थः । अभावयावत् भावभिन्नो ग्राह्यस्तेन इदं जलं स्नेहवत्त्वादित्यादौ स्नेहवत्त्वसमानाधिकर-णात्यन्ताभाव-प्रतियोगितावच्छेदकरूपसामान्या-भावत्वाव-च्छिन्नप्रतियोगिताकाभावानां सकलरूपाणां जलत्वसामा-नाधिकरण्यविरहेऽपि नाव्याप्तिः । घटध्वंसोध्वंसत्वादित्यादौ

च घटध्वंसत्वादेस्तत् प्रकारकप्रमाविशेष्यत्वादेर्वा भावाभाववृत्तिरतिरिक्तोऽभावस्तादृशो न घटध्वंसत्वादिसमानाधिकरण इति नातिव्याप्तिरित्यपि वदन्ति । यावदिति स्व व्यभिचारियेषां तेषां यावतां व्यभिचारिणा साध्येन सामानाधिकरण्यमित्यर्थः । यावदिति यत्पदं साध्यत्वाभिमतपरं सोपाधिवारणाय यावदिति नुसमसमीकस्य द्वितीयात्यन्ताभावस्य विशेषणम् । तथा च साध्यव्यापकतावच्छेदकावच्छिन्नप्रति-योगिताकात्यन्ताभावत्वव्यापकस्वसामानाधिकरण्यसामान्याभाववत्त्वमर्थः । केवलान्वयिस्थले साकाशादिरेव तथाविधोऽ-भाव प्रसिद्ध इति सम्प्रदायः । केचित्तु तादृशयावद्भावशून्यत्व यदधिकरणताया व्यापकं तत्त्वमर्थः । न च तादृशप्रतियोगितावच्छेदकवत्तमेव यावत्त्वेन विशिष्य यावत्तादृशाश्रयत्व यदधिकरणताया व्यापकं तत्त्वमित्ययमाभावेव सामञ्जस्येऽभावद्वयोपादानमनतिप्रयोजनकमिति वाच्यं यावतां तादृशाभिन्नमादीनामैकाधिकरण्यस्याप्रसिद्धे नत्वावच्छेदकागमपद्यायाप्रतियोग्येन यावत्त्वेन विशिष्यतां साध्यव्यापकस्यापि रूपान्तरेण साध्यसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्यैवप्रसिद्धत्वादित्याहुः । साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं यावत् तत्सामानाधिकरण्यात्यन्ताभावप्रतियोगितावच्छेदकत्वं नास्ति तत्त्वमर्थः इति तु नव्याः । अवच्छिन्न सामानाधिकरण्यं सामानाधिकर

ण्यावच्छेदकरूपं वा व्याप्तिः इत्यत्र धूमत्वद्रव्यत्वत्वादेर्व्याप्य-तावच्छेदकत्व दण्डत्वादेर्नियतपूर्ववर्त्तितावच्छेदकधर्म्मात्मक-कारणतावच्छेदकत्ववदभेदेऽप्युपस्थितानुपस्थितभेदाद्वा समर्थ-नीयं तत्रायमभिप्रेत्याह यत्सम्बन्धितेति सा सम्बन्धिता सामानाधिकरण्यरूपा जनकत्वादिव्यावृत्ता अत्र च विशिष्ट-सत्तात्वाद्यवच्छिन्नगुणादिसामानाधिकरण्याधिकरणसत्त्वादेः कर्म्मादौ परामर्शान्न णाद्यनुमित्यापत्तेः साध्यसामानाधि-करण्यविशिष्टहेतुमत्तापरामर्शस्तु पक्षे साध्यनिर्णयात् प्राग-सम्भवीत्यनुशये न द्वितीयम् अयमालोको धूमोवेत्यादौ विशिष्य-सन्देहेऽपि सामान्यतोऽवच्छेदकरूपवत्त्वनिर्णयः सम्भवत्येवेति हृदयम् । अत्रावच्छेदकत्व नान्यूनवृत्तित्वम् अन्यूनानतिरिक्त-वृत्तित्वं वा वह्न्यादौ साध्ये मेयत्वादावतिप्रसङ्गात् धूमत्वादाव-प्रसङ्गाच्च किन्त्वनतिरिक्तवृत्तित्वं तच्च यद्यपि न तदभाववद्वृ-त्तित्वं गुणवान् सत्त्वादित्यत्र सत्तात्वेऽतिप्रसङ्गात् न च कर्म्मादिवृत्तित्वावच्छेदेन गुणसामानाधिकरण्याभाववत्यां सत्तायां वर्त्तमानत्वान्न तथा तथा सति विशिष्टसत्तात्वे प्रागुपदर्शितदिशा च धूमत्वादावव्याप्तिप्रसङ्गात् तथापि अतिरिक्ते यद्धर्म्मविशिष्टहेत्वधिकरणवृत्तित्वं न वर्त्तते तत्त्वं साध्यासमानाधिकरणावृत्तित्वविशिष्टाधिकरणवृत्तित्वसामान्य-कत्वं स्वविशिष्टाधिकरणावृत्ति-यावत्साध्या-समानाधिकरण-कत्वमिति तु फलितार्थः । सत्तात्वविशिष्टसत्ताधिकरण-

कर्म्मान्यविशिष्टस्य साध्यसमानाधिकरणे कर्म्मत्वादौ सत्त्वा व्याप्तिप्रसङ्गः कर्म्माद्यन्यत्वविशिष्टसत्ताश्रयस्य न कर्म्मादिरिति नापसङ्गः एवञ्च मेयत्वादेरपि केवलान्वयिसामानाधिकरण्यावच्छेदकत्वोपपत्तिः। यत्तु वृत्तिमत्त्वादिकमेव तत्र व्याप्तिप्रयोजकमस्तु मेयत्वादिनेति तन्न व्याप्तिविरहनिश्चिततया गृह्यमाणेन रूपेण व्याप्तिग्रहासम्भवात् अन्यथा अतिप्रसङ्गात् साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणे येन येन सम्बन्धेनावर्त्तमानत्वं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणेऽपि तेन तेन तथात्वं बोध्यम्। नीलधूमत्वादेर्वारणीयत्वे तु स्वसमानाधिकरणतावृत्तधर्म्मान्तराघटितत्वेन विशेषणीयसामानाधिकरण्योपादानात् धूमप्रागभावत्वादिरूपस्य तद्घटितत्वञ्च तद्विषयकप्रतीतिविषयत्वं स्वरूपसम्बन्धविशेष एवावच्छेदकत्वम् अतएव न अतिप्रसक्तमवच्छेदकमित्यादिकमपि सङ्गच्छते अन्यथातिप्रसक्ते अनतिप्रसक्तत्वस्याप्रसक्तत्वेन तन्निराकरणायोगात् विरुद्धयोर्भावाभावयोरधिकरणे एकस्यैकेन सम्बन्धेन वृत्तिर्विरुध्यते अतस्तत्तावच्छेदकभेदापेक्षा अतएव व्यभिचारिणि साध्यतदभावसामानाधिकरण्ययोर्विरुद्धयोरुपपादनायोपाधितदभावावच्छेदकायमनुमन्यन्ते न्यायाचार्य्याः। सत्तात्वन्तु गुणाद्यभावस्येव गुणस्यापि न सामानाधिकरण्यावच्छेदकं विरोधात्। अव्याप्यवृत्तेश्च कपिसंयोगादेरधिकरणे वृक्षादौ तदभावस्य संयोगेन

च वह्नेरधिकरणे महानसादौ समवायावच्छिन्नप्रतियोगितकतदभावस्य सत्त्वेनाविरुद्धत्वात्। वह्निमति च संयोगेन वर्त्तमानस्य धूमादेर्वह्न्यभाववति स्वावयवे संयोगेनावर्त्तमानत्वाच्च तद्वृत्तित्वधूमत्वादेर्न साध्यसामानाधिकरण्यावच्छेदकत्वविरोधः व्यभिचारधीरप्येतद्व्याप्तिबुद्धौ विरोधिन्येव तद्धर्म्मविशिष्टस्य साध्यानधिकरणवृत्तित्वग्रहे तदवच्छेदेन साध्याधिकरणवृत्तित्वग्रहायोगात् अस्तु वा एतन्मते हेतुवृत्तिधर्म्मस्य साध्यसामानाधिकरण्यानवच्छेदकत्वमेव व्यभिचारः तद्धीरेव साक्षाद्विरोधिनी व्यभिचारान्तरधीस्तु परम्परयेति नीलधूमत्वादिकन्तु गौरवान्नावच्छेदकम् एवञ्च लघु घटत्वादिकमेव सामानाधिकरण्यावच्छेदकं व्याप्तिः न तु तत्सहचरितकम्बुग्रीवादिमत्त्वादिकं तेन गुरुणापि रूपेण व्याप्तिग्रहे कथायां हेतोरुपन्यासे वानुयोगः प्रकारान्तरव्याप्तिवादिनामपि समानः। एवं द्रव्यं रूपात् रसादित्यादौ सकलगुणसाधारणस्य गुणत्वस्य द्रव्यत्वादिसाधारणस्य गुणासमवेतत्वे सति द्रव्यसमवेतत्वस्य वैकस्यावच्छेदकत्व सम्भवे बहूनां रूपत्वादीनां न तत्त्वं विरुद्धधर्म्मद्वयाधिकरणयोस्त्व एकस्यैकेन सम्बन्धेन वृत्तौ कथं विरोधः कथं वा द्रव्यत्वादौ साध्ये हेतुत्वेन विशिष्टरूपादेः प्रयोगः तथा परामर्शाद्वानुमितिरिति विभावनीयम्। अपरे तु यद्धर्म-विशिष्टहेत्वधिकरणत्वं साध्याधिकरणताया अवच्छेदकं

सधर्म्मो व्याप्ति अन्वयस्तु धूमस्य धूमवत धूमस्य धूमदस्य वह्निस्तु वह्निमतस्त्वित्यादिप्रकारेण व्याख्येय अत एव व्यापकस्य न स्वरूपसम्बन्धविशेष विरुद्धदिग्गमनायच्छिन्न वृत्तिकस्य न्यूनदेशकालवृत्तिकादेयाधिकरणवार्या तदसम्भवात्तुल्यवृत्तिकधर्मद्वयाधिकरणयोर्मिथोऽवच्छेद्यावच्छेदकभावस्य च नियमतुमगमकत्वाद्यापकन्यूनवृत्तित्वात्य न्यूनवृत्तिकधूमादेरव्याप्यतापत्ते फिस्सनतिरिक्तवृत्तित्वस्य स्वान्यूनवृत्तित्वत्कत्वमिति यावत् इतो न नियमान्वयिन्यव्याप्ति अथ च यदन्यूनवृत्ति साध्य तस्य स्वव्यापकसाधनसम्बन्धित्वपर्य्यवसानमपेक्ष्य गौरव परमवशिष्यते तच्च अन्यकारणवादे विवेचयिष्यत इत्याहु ।

उपाधिनेति विशेषणसामानाधिकरण्येनोपाध्युपदर्शनेति या यत् वह्न्याद्रेन्धनप्रभवयह्निमेन रासभार्द्रेन्धनादौ च तथा विध्यद्विविशिष्टत्वेन धूमसम्बन्धेऽवच्छिद्यमाने तथाविध वह्नेरप्यनुप्रवेशात् रासभत्वादिकन्तु निर्विषयौ नवेत्यन्यदेतत् । अथ चेद स्वेश्यत् नि खेद वा स्याद्दित्यत्र विना पुपाधिप्रवेशं शीतत्वेन शीतान्यत्वेन वा साध्यसमानाधिकरणतया साधनव्यापकतया वा प्रथमसुपाधिना कैवलेन विशेषणीभूय वा शीतान्यत्वगर्भत्वेन चोपाधिना स्वत एव सर्गे साध्यसम्बन्धोऽवच्छिद्यत इत्युपाधिनैवेति नियमे न तात्पर्य्य परन्तु शुद्धस्य साधनतावच्छेदकत्वानवच्छेदकता

मात्रे यत एव सोपाधौ साधनतावच्छेदकातिरिक्तं नियत-मवच्छेदकम् अतएव तद्विशेषस्तत्रोपाधिरिति वदन्तो-त्याह अतएवेत्यादि अत्रावच्छेदकत्वं सामानाधिकरण्येन तत्त्वञ्चान्यूनवृत्तित्वं व्यापकत्वमिति यावत् तच्चाधिकरणा-न्तर्भावेन तेन साध्यविशिष्टसाधनतावच्छेदकावच्छिन्नसा-धनवत्त्वव्यापकाधिकरणताकत्वं पर्य्यवस्यति निरुक्तविशिष्ट-साधनव्यापकत्वमिति तु निष्कर्षः । इत्थञ्च सत्ताद्येकव्यक्ति-कहेतुनिष्ठद्रव्यत्वादिसामानाधिकरण्य व्यापकसामानाधि-करण्यप्रतियोगिनि घटत्वादौ नातिप्रसङ्गः न वा द्रव्यं जन्यत्वे सति सत्त्वादित्यादौ द्रव्यत्वविशिष्टसत्ताव्यापके स्पर्शवत्त्वादावप्रसङ्गः निःस्नेहं स्पर्शात् द्रव्यं सत्त्वादित्यादौ शीतस्पर्शान्यत्वरूपान्यत्वादेर्वारणाय तत्रेत्यादि । तत्र सा-ध्यविशिष्टे साधने विशेषणं साध्याभावविशिष्टात्साधना-त्सामानाधिकरण्येन व्यावर्त्तकं साध्याभावविशिष्टनिरुक्त-साधनवदवृत्तीति यावत् एवञ्च द्रव्यं सत्त्वादित्यत्र सत्ताया अभेदेऽपि गुणकर्म्मान्यत्वेनाव्याप्तिः नापि द्रव्यं कर्म्मान्यत्वे सति सत्त्वादित्यत्र गुणान्यत्वादौ इत्थञ्च साधनतावच्छेदक-स्यानवच्छेदकत्वद्योतनाय परं तद्भिन्नत्वमुक्तं न तु विवक्षित-मेव तत् वैयर्थ्यात् इदं दधि जन्यं वा दध्न इत्यादौ दधि-त्वाद्यव्याप्तेश्च । यद्वा प्रकृतसाधनतावच्छेदकानवच्छेद्यप्र-कृतसाधननिष्ठसाध्यसम्बन्धितावच्छेदकत्वं पूर्वदलार्थः अ-

नवच्छेदकत्वञ्च तत्र साध्याभावविशिष्टसाधनवृत्तितया तद्वि-
शिष्टसाधनस्य साध्याभाववद्वृत्तित्वेन साध्याभाववत्तद्वि
शिष्टसाधनवत्त्वे नेति यावत् एतेन धूमवान् वह्निमान् इत्यादौ
वेयानवच्छेद्य साध्यसम्बन्धाप्रसिद्धि गुणवद्गुणकर्मान्यत्वे
सति जातिमत्त्वादित्यादौ जातित्वघटकनित्यत्वादेर्वैयर्थ्येन
विशिष्टस्यानवच्छेदकतया गुणकर्मान्यत्वादेरुपाधितापत्ति
रीति निरस्तम् अवच्छेदकत्वञ्च सामानाधिकरण्येन तथा
च साध्यविशिष्टस्य साध्यसम्बन्धिताऽनवच्छेदकसाधनताव
च्छेदकावच्छिन्नसाधनस्य व्यापकत्वमर्थ पर्यवस्यतीति उप
दर्शितमीतम्यगोन्यत्वादिवारणाय तत्रेत्यादि तत्र साधनता
वच्छेदकविशिष्टे साधने विशेषणं साध्यशून्यावृत्तित्वोप
धिक यत्सामानाधिकरण्यविशिष्टप्रकृतसाधनवत्त्व साध्या
भाववति न वर्त्तत इति यावत् साध्याभावविशिष्टप्रकृतसा
धनाधिकरणसामान्याय साध्यविशिष्टप्रकृतसाधनाधिकरण-
सामान्यस्य व्यावर्त्तकमिति समुदायार्थमिष्कर्ष इत्याहु ।
केचित्तु विशेषणं सामानाधिकरण्य तथा च सामानाधि
करण्यप्रत्यासत्त्या येनावच्छिद्यते अवच्छेदकीभूतसामाना
धिकरण्यप्रतियोगीति यावत् अवच्छेदकत्वञ्चेदमन्यूनानति
रिक्तवृत्तित्व गुरोरप्युपाधिसामानाधिकरण्यव्याघातमेव य
द्यपि सत्यत्र उद्भूतरूपवत्त्वादित्यत्र महान् अनित्यद्रव्य
त्वादित्यत्र महत्त्वस्यानित्यद्रव्यसमवेतत्वस्य च वक्ष्यमाणसत्त्व

णाक्रान्तस्योपाधेः सामानाधिकरण्यं साध्यसामानाधिकरण्यन्यूनातिरिक्तवृत्ति तथापि हेतुनिष्ठसाध्यसामानाधिकरण्यस्य हेतुनिष्ठं यत् सामानाधिकरण्यमन्यूनानतिरिक्तवृत्तितत्त्वं विवक्षितं सत्त्वनिष्ठद्रव्यत्वसामानाधिकरण्यस्य च तन्निष्ठकर्मान्यत्वसामानाधिकरण्यमतिरिक्तवृत्ति गुणे तदभावावच्छेदकावच्छिन्नवृत्तिकत्वात् पृथिवीत्वादिसामानाधिकरण्यन्तु न्यूनवृत्ति जलादौ तदवच्छेदकावच्छिन्नवृत्त्यभावप्रतियोगित्वात् साध्यव्यापकानां सद्धेतावुपाधित्ववारणाय साधनतावच्छेदकभिन्नेनेति तदनवच्छेद्यार्थकमित्याहुः । ननु सर्वत्र सोपाधौ सर्वेणोपाधिना साध्यसम्बन्धोऽवच्छिद्यत इति न नियमः अयं प्रत्यक्षो मूर्त्तत्वादित्यादावुद्भूतरूपवत्त्वादेः तदसम्भवादित्यत आह अतएव च तत्रेति यत एवोद्भूतरूपवत्त्वादेर्न तथात्वसम्भवः अतएव तत्र तादृशनियमवादिमते इदं लक्षणमिति साधनाव्यापकत्वमिह साध्याभावविशिष्टसाधनव्यापकीभूताभावप्रतियोगित्वं तादृशसाधनासामानाधिकरण्यमिह पर्य्यवसितं तेनोपदर्शितोद्भूतरूपवत्त्वव्युदासः । अथ प्रत्यक्षो द्रव्यत्वादित्यादौ घटत्वादावतिव्याप्तिः साध्यव्यापकत्वेन विशेषणे च स श्यामो मित्रातनयत्वादित्यादौ शाकपाकजत्वादावव्याप्तिरत उक्तं साधनावच्छिन्नेत्यादि साध्याभावसम्बन्धिनि विरुद्धस्य साध्यसम्बन्धस्यावच्छेदभेदं विनानुपपद्यमानस्यावच्छेदकीभूयो-

पपादनमुपाधिकम तदसमर्थीमासोपदर्शितोद्भतरूपवत्त्वा दीनां नोपाधिभाव सम्भवतीत्याह व्यभिचारिणीति व्यभि चार' सपक्षविपक्षगमित्वम् अत्र विपक्षगामित्वरूपव्यभि चारीय्ययनमेवोपाधिकम तथोद्भूतरूपादेनामप्यसीत्यत आह अतएवेति यतएव साध्यसम्बन्धितावच्छेदकं रूप व्याप्ति सोपाधौ तु स्वाभाविक हेतुतावच्छेदकं न साध्य सम्बन्धितावच्छेदकम् यतएव स्वसमोपवर्त्तिनि स्वसमा नाधिकरणे व्यभिचारिणि हेतौ स्वनिष्ठसाध्यसम्बन्धिताव च्छेदकरूपसत्त्वेन व्याप्तिसक्रामकतया साध्यव्यापकस्यैवोपा धित्वमाचार्य्यैरनुमन्यत इत्याह अतएवेति साध्यन्यून इत्ता- बुपाधिव्यवहारं दूषणोपयिकरूपस्याभावं व्याप्यतयोपाधि पदस्य योगरूढित्वव्यवस्थापनेन निराकुरुते लक्षणन्त्विति लक्षण दूषणोपयिक रूपम्। साध्येति अत्र साध्यव्याप कमात्र विवक्षित तावतैव साधनवृत्तितदतिरेकेण साध्य व्यतिरेकानुमानसम्भवात् साधनवति व्यापकनिष्ठस्या साध्य साधनसम्बन्धनिहत्तिसिद्धामयात्साध्यनिवृत्ति सिद्धतीति प्रकारान्तरप्रदर्शनाय पर तथापिवेत्ति। यद्वा न्यून वृत्तावुपाधित्वव्यवहारं निरस्य योगेनाधिकवृत्तौ तन्निर- स्यति विषमेति प्रवृत्तिनिमित्त यौगिक व्यभिचारोन्नाय कत्वमेवेत्येवकारेण योगार्थानादरं सूचयति उपाधित्वम् उपाधिपदप्रवृत्तिनिमित्तम् उपाधिता उपाधिपदवाच्यता

योगादरे तु लाघवात्साध्यव्यापकतामात्रे रूढ़िरिति भावः।

व्याप्तिस्वरूपं निरूप्य परमतनिराकरणपूर्वकं स्वमतेन तद्ग्रहोपायमभिधातुं प्रथमं प्राभाकरमतमुपदर्शयति सेयमित्यादिना दर्शनानां प्रत्येकं वा हेतुत्वं मिलितानां वा मिलनमपि स्वरूपतो व्यापारतो वा आद्ये दर्शनानामिति द्वितीये आद्यैविति क्रमिकाणामपि स्थिराणामस्थिराणामपि सहोत्पन्नानां मिलनमस्तीत्युभयमुपात्तम्। तृतीयमाशङ्क्य निराकुरुते न चेति व्यापकसाध्यसामानाधिकरण्यात्मिकायां व्याप्तौ साध्यसामानाधिकरण्यांशस्य प्रथममेव गृहीतत्वाद् गृहीतव्यापकत्वांशग्रहे सहचारदर्शनजन्यसंस्काराणां हेतुत्वं वाच्यं तच्च न सम्भवति भिन्नविषयकत्वादित्याह समानेति भ्रमस्त्वगृहीतभेदं ज्ञानद्वयं नतु वैशिष्ट्यावगाहीति भावः न तथा न व्याप्तिग्राहकं व्यभिचारदर्शनं व्यापारतया सहकारीति व्यभिचारादर्शनसहचारदर्शनसहकृतस्तर्क एव व्याप्तिग्राहकः भूयो दर्शनन्तु क्वचित्तर्कप्रवृत्तावुपयुज्यत इति निर्गलितम्। नैयायिकमतमाशङ्क्य निराचष्टे नचैवमिति। जातमात्रस्येति तथाच तन्मूलको व्याप्त्यन्तरग्राहकतर्कावतार इति भावः। तर्हीति न च व्याप्तिप्रत्यक्षं प्रति तर्को हेतुस्तत्तु स्मरणमिति न व्यभिचारावकाशः विनानुभवं स्मरणस्यायोगात् न च जन्मान्तरीणः स जन्मान्तरेऽपि पर्यनु-

योगतादयस्त्याग् अनादित्वेन च परिहारः परतो विचारयिष्यते । न चेति मानाभावात् तर्कस्य च हेतुस्वामिद्धे यदि चाप्रहीतस्याग्रहीतपुरोवर्त्ति ममगम्य वा प्रत्यासक्तिस्तेऽति प्रसङ्गस्तदा पुरोवर्त्तिनि तद्धो मृग्यतां ननु सामान्यलक्षणेन्याह नन्विति साध्यव्यापकत्वं साध्यसमानाधिकरणाभावप्रतियोगित्वं तद्ग्रहच साध्याधिकरणैकस्यक्तिदर्शितया ग्रहमाणस्य साध्यव्यक्यन्तरयहं विना न सम्भवति इति भूयोदर्शनापेक्षा तदाहित संस्कारविहितेन्द्रियमात्रस्य सहकारीमनसोऽपि वा आद्ये तद्यापारं विनेति द्वितीये नापीति परिशेषात्साध्यसाधनमन्वयानुमितिविज्ञाणपेक्ष सहकारात् उपाध्यभावग्राहकस्यापेक्षणीयत्वादसिद्धिं निरस्यति तथाहीति । उपाधिस्मरण इत्यादि मन्वेषमसन्निकृष्टादि हेतुकानुमितिर्न स्यात् उपाधियोग्यानुपलम्भविरहादत आह तद्यवहारेति तथाच तद्यवहारस्य हेतुरेवानुमिति हेतु तयोपाध्यभावत्वेन ज्ञानम् उपाधिस्मरण इत्यादि तु तत्कारणप्रदर्शनपरम् अभावत्वञ्चेदमिह नास्तीति प्रतीति साक्षिकः स्वरूपविशेषोऽतिरिक्त पदार्थोविशन्यदेतत् । एवञ्चोपाध्यभावत्वेन ज्ञानेऽधिकापेक्षा न वारयाम इति भाव । व्याप्तिस्वरूपे संशयाभाव आपद्यते निरुपाधिसम्बन्धरूपव्याप्तित्वेन वा आद्ये इष्टापत्ति द्वितीयमपि किमुपाधिस्मरणादिकं विना तत्समवधाने सति वा सम्बन्धग्रहे आद्ये

किं विद्यमान इति तथाच तद्ग्रहमात्रं नतु तदभावत्वेनापि ग्रह इति समानप्रकारक निश्चयाभावात्तत् संशयोनानुपपन्न इति भावः द्वितीये ज्ञानप्रमाणेति प्रथमेति सत्युपाधिस्मरणादावित्यादिः । नचाचापीति सर्वत्र रासभादावित्यर्थः अवगत इति स्वरूपकथनमात्रं महानस इति अस्मिन्नित्यादिः । महति वायौ योग्यायोग्ययोर्द्व तरूपसामान्यतद्वतोरिव योग्ये वह्नौ तादृशप्रतियोगित्वसामान्यतद्वतोरप्यत्यन्तान्योऽन्याभावयोर्योग्यत्वादितिभावः । न प्रतियोगितावच्छेदकमिति न धूमसामान्यसमानाधिकरणतादृशाभावप्रतियोगितासामान्यावच्छेदकमित्यर्थः । अथ साधनाव्यापकव्याप्यत्वाभावः साध्येऽधिकरणस्वरूपमेव एवं साधननिष्ठसाध्यसम्बन्धे साधनतावच्छेदकातिरिक्तावच्छेद्यत्वाभावोऽपीत्यनुशयानो येन रूपेण ज्ञाता व्याप्तिरनुमित्यङ्गं तद्रूपविशिष्टा न सकृद्दर्शनगम्या सामानाधिकरण्यमात्रस्य च तथाभावं न वारयाम इत्याशयेनाह किञ्चेति । विशेषणज्ञानसाध्यत्वात् तत्सामग्रीसाध्यत्वाद्दान चेति उपलक्षणमेतत् उपाधेरयोग्यस्यापि सम्भवात् उपाधिसामान्यतद्वतोर्मूर्त्तत्वादिसामान्यतद्वतोरिवात्यन्तान्योऽन्याभावयोरयोग्यतया प्रत्यक्षेण ग्रहीतुमशक्यत्वात् न च योग्योपाधिव्यतिरेकग्रह एवानुमानाङ्गम् अयोग्योपाधिग्रहेऽप्यनुमितिप्रसङ्गात् । यथाश्रुतं दूषयति यच्चोक्तमित्यादिना व्यभिचारेत्यादि अत्र प्रत्यक्षे ग्राह्यसंशय-

स्यापि प्रतियत्रसामाद्यस्य व्यभिचारग्रहादायाशायात्राभिधा नम् अन्यथा पुनरसाधारणतत्कारणमेनकदा मामणी प्रतिवशिका बोधा विवेचितञ्चेदं सत्यसगणिदीधितौ वक्ष्यते चाधिकमुपरिष्टात् । अत्र च यद्यपि साधनगोचरसाध्या भाववद्वृत्तित्वग्रहाभावो हेतुरिति न युक्त केवलान्वयिनि याद्यामसिद्धे तदाप्रसिद्धेः तथापि अप्रसिद्धा तथिशादम भ्रममभवेऽपि भवत्र तथाभ्रमे मानाभावात् अतएव साध्यतावच्छेदकगोचरसाधनवन्निष्ठाभाव प्रतियोगितावच्छे दकत्वपक्षोऽपि अयुक्तः सकलसाध्यतावच्छेदके ताद्दशपक्षे मानाभावात् तथाहि साध्यतावच्छेदके तत्पुरुषीयताद्दशा वच्छेदकत्वग्रहस्य विषयतयाभाव तद्विषयत्वाभावो वा तत्पुरुषीयव्याप्तिग्रहे हेतु वस्तुतो व्याप्तेः साध्यसाधनभेद भिन्नतया विशिष्य व कार्यकारणभाव तथाच यत्र साधन साध्याभाववद्वृत्ति साध्यतावच्छेदक साधनवन्निष्ठाभाव प्रतियोगितावच्छेदकमेकविधमनेकविधं वा व्यभिचारज्ञान प्रसिद्धं तत्र यथायथं तदभाव पुरुषनिष्ठो व्याप्तिग्रहेतु अतएवैकविधव्यभिचारज्ञानविरहेऽन्यविधव्यभिचारग्रहाद्या प्तिधीविरोधः । एवञ्च क्वचिद्व्यभिचारज्ञानस्याप्रसिद्धया तदभावस्याहेतुत्वेऽपि न क्षतिः । प्रसिद्धाया साधनवन्निष्ठा भावप्रतियोगितावच्छेदकत्वादिबुद्धेः सम्बन्धविषयतया त दभावबोधविरोधित्वानुरोधेन तु तथात्वकल्पन न चर्य

वारयामः यदि तत्तत्प्रकारादिनिवेशेन विशेषे न पर्य्यवस्ये-
दिति दिक् व्याप्तिश्च धूमादिव्यापकवह्निसमानाधिकरण-
वृत्तिधूमत्वादिकं तादृशसामानाधिकरण्यमात्रस्य रासभादि-
साधारण्यात् अत्र च व्यापकत्वांशग्रहे व्यभिचाराग्रहः समाना-
धिकरणवृत्तित्वांशग्रहे च तद्विशेषणतया सामानाधिकरण्यस्य
ग्रहो हेतुरिति वक्तव्यम् । साध्यसम्बन्धितावच्छेदकरूपवत्त्वल-
क्षणव्याप्तिग्रहे विशेषणतया सम्बन्धस्य ग्रहो हेतुरित्यपि के-
चित् । यत्तु विरुद्धे सहचारभ्रमेण व्यापकत्व भ्रमात्सामान्यत
एव सहचारज्ञानं हेतुरिति तन्न असिद्धत्वात् विरुद्धेऽपि
व्यापकत्वसामानाधिकरण्ययोग्रर्ग्राहकसामग्रीक्रमयौगपद्याधीनं
ग्रहणक्रमयौगपद्यं न तु मिथः कार्य्यकारणभाव इति ।
इदं पुनरवधेयं यथा विद्यमानमपि वह्नित्वे व्यवहितविप्र-
कृष्टरासभादिदेशनिष्ठाभावप्रतियोगितावच्छेदकत्वं न गृ-
ह्यते अभावदेशविप्रकर्षादिना ग्राहकाभावात् तथा धूम-
वन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य सत्त्वेऽप्यग्रहसम्भवात् ।
नानुपलब्धेः प्रतियोगिसत्त्वविरोधित्वादिलक्षणा योग्यतेति न
तत्सामान्याभावो लौकिकप्रत्यक्षगम्यः परन्तु कथञ्चिद्विरोध-
स्फुरणादिवशाद्धूमत्वादौ गृहीतोधूमवन्निष्ठात्यन्ताभावप्रति-
योगितावच्छेदकत्वाभावो वह्नित्वादावुपनयमर्य्यादया गृह्यते
अतएवानुमानादिना व्यभिचारग्रहेऽपि न व्याप्तिधीः निर्णया-
त्मनि साधारणे वा दोषविशेषाजन्योपनीतभाने संशयादि-

साधारण्यस्य नियताम्नो या विपरीतज्ञानमात्रस्यैव प्रति-
बन्धकत्वात् तथाहुमादौ देशान्तरस्थसिसंसभावनायिरहादि
यथा। स्वप्रमायां वह्न्यायभावहत्तिसाभावो धूमत्वादव
यद्देशे गच्छते नायमादित्यपि वदन्ति। कृतागनरासभादि
पदार्थमार्यस्यान्वयव्यतिरेकयोरन्वयव्यतिरेकौ धूमस्यापि
लभमानोऽन्वयमेतेषामन्यतम कारण धूमस्येत्यवधार्य्य म
न्दिग्धे किमेतानि सर्वाण्येव कारणानि कि वा कानिचित्तथा
कानिचिन्न नेति अत्र च यस्य व्यतिरेकेऽपि इतरेभ्यस्तथा
विधेभ्यो धूमोत्पत्तिमुपलभते तस्याहेतुत्वमेवावधारयति यथा
रासभादेर्यस्य व्यतिरेके सावृयापरकमाम्वयेऽपि धूमा
नुपपत्तिं पश्यति तस्य कारणत्वमेव निश्चिनुते यथा वह्ने
नतु चाकारणत्वसन्देहो विरोधिताभासादवनिवर्त्तते येन
तर्केण तमनद धूम इत्यादि। अनुसन्धेयत्वावग्रं कार्य्यकारण
भावग्रह तदधीनत्वाद्याप्तिग्रहे सामानाधिकरण्येनान्वय
व्यतिरेकाग्रहात् जायमानस्य तयैवहेतुहेतुमद्भाव गहस्य
स्यैव वा व्याप्तिपरिच्छेदकत्वात् विपर्य्यये तत्कोटिमात्र
पर्य्यवसायिनस्त तर्कस्य तदभावकोटिकग्रहानिवर्त्तकत्वम्
अन्यथा धूमो यदि वह्निसध्ध्रून्यसन्यान्यतरो न स्यात् जन्योन
स्यादित्यादेरपि तथात्वापत्ते तथा पर्य्यवसायिता च क्वचि
द्विशेषतो व्याप्त्या सामान्यतोऽपि क्वचित्पक्षधर्मतासत्त्वात् तत्र
सम्भवे चात्र वह्न्यसमवहितजन्यत्वेन पक्षो विशेष्य विशे

प्रणवत्वेनोपस्थिते विशिष्टाभावबुद्धेर्विशेष्याभावमात्रावलम्बित-त्वात् तथोपस्थितिविरोधि चावह्नेरित्यादि शङ्काद्वयमग्रे निर-सनीयम्। वस्तुतो वह्न्यजन्यमपि वह्निसमवहितजन्यं वह्न्य-समवहिताजन्यञ्च सम्भवतीति वह्निजन्यत्वपर्य्यवसितं वह्नि-समवहितजन्यत्वं वाच्यं तथा च घटादौ व्यभिचारवारणाय आपाद्यकोटिप्रतियोगिविशेषणार्थकं सत्यन्तम् अजन्ये जन्ये च नान्तरीयके व्यभिचारवारणाय जन्य इति तदर्थस्तु वह्न्य-समवधानकालीन वह्नितत्समवधानेतरयावत्कारणजन्यत्वं तथाविधयावत्कारणकत्वमिति यावत् तथाच वह्न्यसमव-हिताजन्यत्वे सति वह्न्यसमवधानकालीनवह्नितत्समवधाने-तरयावत्कारणको न स्यादिति पर्य्यवसितोऽर्थः। यत्तु नान्तरीयवह्निके व्यभिचारवारणस्य आपादककोटावेव विशेषणं सत्यन्तार्थः स च वह्न्यघटितसामग्र्यजन्यत्वमिति तन्न प्राक् तदसिद्धेः। अत्राद्या द्वयी शङ्का इष्टापत्तिपर्य्यव-सायिनी तृतीया पुनरापादकाप्रसिद्धिपर्य्यवसायिनी अवह्नेः वह्निशून्यात् तदुपादानमिति करणव्युत्पत्त्या तदीय-कार्य्यप्रयोजकताज्ञानपरम् तादृशान्वयव्यतिरेकानुविधान-बोधपरं वा अग्रेतनमपि स्वक्रियापदं तत्परमेव तत्-त्वादेः शङ्का प्रतिबन्धकत्वे मानाभावात् कारणताग्रहोत्तर-कालीनत्वाच्च। यद्यपि चैतावता धूमत्वावच्छिन्नं प्रति वह्नेर्जनकत्वं नायाति तृणारणिमणिन्यायेन वैकल्पिककार-

सत्तायामपि तथात्वसम्भवात् तथापि विशेषाणां कार्य्यकारण भावग्रहमार्गेण तद्विरोधसत्तायामप्रतीतायां जायमान सामान्यव्यभिचारानिश्चयानुगतानुगतविशेषरूपाभावानुपस्थि-तिमात्रप्रतिबन्धाभावादिसामग्रीसामान्यात एव स परिच्छिनत्ति प्रामाणिकौ च तत्रैवान्वयव्यतिरेकौ क्रमयत्नेन ज्ञापकज्ञाना-दिग्रन्थाया एव सामान्यव्यभिचारग्रहाया प्रतिबन्धकत्व सम्भवात्। अपरे तु धूमत्वावच्छिन्नस्य वह्निजन्यत्वन जन्यत्वविशिष्टस्य यथाऽन्तयत्रासमवहितान्यत्वस्य व्यतिरेक एवापादनीय तर्कोऽन्यथायेन तादृशवह्निमुख्यकारणकत्वाजन्यत्वरूपेण व्यतिरेकजन्यत्वग्रहाभिरासात् वह्नि-विरहेऽपि निरुक्तिविषयस्यैव तादृशसमूहस्य धूमजनकत्वसन्देहस्य च तथाविधात् धूमानुत्पादव्यर्थनैर्मायोगात् तादृशस्यैव क्वचिद्वह्नि क्वचिदितरद्यातु जनकत्वसम्भावनायाश्च क्वचिद्धूमानुत्पादप्रयोजकत्वेनावश्यतस्य वह्निविरहस्यैव तथाविधसमूहत्वे धूमानुत्पत्तिसामान्य प्रतिसाधयात्प्रयोजकत्वनिर्णयेनापमयाग्ननसैव सुग्रहं वह्नेर्वह्निसमवहितस्योपादानम् अत्र च नियमव्यवच्छेद्यस्य वह्निरसमवहितानुपादानस्य प्रयोजकं तदजन्यत्वज्ञाने परम्परया वह्निसमर्पितोत्पपादानत्व मा प्रयोजकं तत्र तात्पर्यम्। यत्रस्वयंव्यतिरेकानुविधायित्वज्ञानमेव विशेषदर्शनतया यहाप्रतिपक्षक तदेव तर्कघटक तदिदमुक्त यदि ग्रहीतान्वयव्यतिरेकं हेतु-मितीति तत्र यावृच्छिद्धकस्य तदनुविधानस्य व्यभिचारित्वा-

न्नियतस्य चोक्ताभेदसम्पादकत्वादिति वदन्ति तच्चिन्त्यम्। केचित्तु कार्य्यकारणभावग्रहानन्तरं व्याप्तिग्रहाय व्यधिकरणस्य जनकत्वशङ्का निरासार्थमयं तर्कः तथा च धूमो यदि सामानाधिकरण्यातिरिक्तप्रत्यासत्त्या वह्न्यजन्यत्वे सति सामानाधिकरण्यप्रत्यासत्त्या वह्निजन्यो न स्यात् वह्निजन्यो न स्यात्। अप्रत्यासन्नस्याजनकत्वात् तादृशाजन्यत्वञ्च प्रत्यासत्त्यन्तरशालिवह्निसत्त्वेऽपि धूमानुत्पादादिना ग्राह्यमिति इदमेव च वाचोभङ्ग्या परे परिष्कुर्वन्ति धूमो यदि वह्न्यनधिकरणदेशानुत्पत्तिकत्वे सति वह्न्यधिकरणदेशोत्पत्तिको न स्यात् जन्योन स्यात् तादृशानुत्पत्तिकत्वग्रहस्य धूमानुत्पत्तिं प्रति वह्निसम्बन्धाभावस्य प्रयोजकत्वे ग्राह्ये उपस्थितत्वाल्लाघवाच्च तादृशसम्बन्धाभावस्यैव तथात्वावधारणादिति तच्चिन्त्यम्। मिश्रास्तु परं प्रति व्याप्तिग्रहोपाये प्रदर्श्यमाने व्यभिचारशङ्कानिरासहेतुत्वेनोपदर्शिते तर्के मूलशैथिल्यादिशङ्कोद्भावकं तं प्रति व्याघातोऽयमुपदर्श्यते मैवं शङ्किष्ठाः तथा सति तत्तत्कार्य्यार्थितया तत्र तत्र कारणे तवैव प्रवृत्तयो व्याहन्येरन् यदाह न हि सम्भवति स्वयं वह्न्यादिकमितीति प्राहुः। तच्चेति तत् व्यभिचारादर्शनं व्यभिचारज्ञानसामान्याभावः योग्यतादिसन्देहेऽपि शब्दादिना अर्थनिश्चयात् तत्तर्कस्वरूपमिति केचित्। ननु वस्तुतो व्याप्तिसत्त्वे तर्काभासात् प्रमाभ्रमयोरुत्पादानुत्पादाभ्यां व्यभिचार इत्यत आह विशेषदर्शनेति। तथा च यथा तस्य

योग्यतदभाववद्विषयत्वे सत्यत्वासत्यत्वे तथा तर्कव्याप्तीति अत्र च सत्यत्वादिसम्पादके धर्मिणो योग्यादिमत्त्वे योग्यादिमद्धर्मिसन्निकर्षे वा तात्पर्य्यं लाघवात् तर्कस्य व्यभिचारेणाहेतुतायाः स्वयमेव दर्शितत्वाच्च अथ विपरीतप्रामोषप्रत्यये सविकल्पकत्वेन विशेषदर्शनस्य हेतुत्वं तच्च तर्कव्याप्तीति चेत् अस्तु तावदापाततस्तथा तथाप्यन्यत्र क्लृप्तप्रामाण्यादिप्रयोजकत्वेन तत्र प्रामाण्याद्युपपत्तौ न तस्यापि विशेषतः कारणत्वं गौरवात् । उक्तञ्च विशेषणज्ञानस्य विशिष्टज्ञानकारणत्वमते सर्वत्र विशेष्य सम्बन्धासम्बन्धविशेषणज्ञानमेव प्रमाभ्रमप्रयोजकमिति यदन्ति तत प्रमायेति इदमनादिसिद्धत्वज्ञानस्य प्रयोजकत्वमभिप्रेत्य परार्थाभिप्रायेण वा अनुमानत्वात् व्याप्तिग्रहाधीनप्रवृत्तिकत्वात् । व्यभिचारशङ्केति द्वारेण द्वारिणो नान्यथा सिद्धिरिति भावः । अनुमानमात्र इति अनिश्चितसाध्यपक्षके सर्वत्र सम्भवित्वात् पक्षे साध्यनिर्णयेऽनुमानवैयर्थ्यात् उपाधित्वेन व्यभिचारेण व्यभिचारोन्नायकत्वेनानुमानमात्रोच्छेदकताज्ञानमेव साध्यव्यापकताबुद्धिः विरुद्ध्यादित्यागशङ्कयाऽपि चेति । करकेति । परमते न इदं स्वमते तु वाय्वादौ प्रत्यक्षिता रूपादिसाधने ग्राह्यतिरिक्तविशेषणाप्रवेशेन वा तद्बोध्यम् । उक्तव्याप्तीति प्रतियोग्यसामानाधिकरण्यादिविशेषणविरहेण लाघवात् । अथ संयोगाभाववत्त्वेन संयोगवद्द्रव्यापि हेतुसामानाधिकरण्यग्रहेऽप्यनुमितिः दर्शनात्तथापि तद्वत्त्व

निवेशनीयमिति क्व लाघवम् । नन्वेवं प्रतियोग्यसामानाधिकरण्याद्यनुपस्थितौ हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वग्रहेऽप्यनुमितिर्न स्यात् न च प्रतियोगिसमानाधिकरणत्वेनाज्ञायमाना यावन्तो हेतुसमानाधिकरणा अभावास्तत्प्रतियोगितावच्छेदकत्वाभावग्रहो हेतुरिति वाच्यं तादृशाभावग्रहो हि न हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वेन रूपेण प्रतियोगिसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकत्वग्रहे तदसम्भवात् नापि प्रातिस्विकरूपेण जन्मसहस्रेणाप्यसम्भवात् नापि रूपान्तरेण वह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य धूमसामानाधिकरण्यभ्रमेऽपि वह्नित्वानवच्छिन्नप्रतियोगिताकधूमसमानाधिकरणनिखिलाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादपि अनुमितिप्रसङ्गात् न च हेतुसमानाधिकरणत्वेन ज्ञायमाना इति वाच्यं वह्नित्वे धूमाधिकरणरासभाद्यभावप्रतियोगितावच्छेदकत्वभ्रमेऽप्युक्तरूपेण तथाग्रहसम्भवात् धूमाधिकरणान्तरानुपस्थितौ वह्नित्वे रासभत्वादौ च तादृशप्रमोत्पादेऽपि रासभादेरिव वह्नेरप्यननुमानाच्च । एवं वह्नित्वावच्छेदेन शुक्लत्वाभावभ्रमदशायां शुक्लप्रतियोगिका वह्नीतरप्रतियोगिताकाश्च ये धूमसमानाधिकरणाभावास्तत् प्रतियोगितानवच्छेदकं वह्नित्वमिति ग्रहेऽपि । मैवं प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहविरोधिग्रहविषयत्वेन तेषां तादृशावच्छेदकत्वग्रहविरोधित्वेन

साध्यतावच्छेदके साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वावगाही साध्यतावच्छेदकावच्छिन्नसाध्यवत्त्वे च साधनसमानाधिकरणान्योऽन्याभावप्रतियोगितावच्छेदकत्वावगाही यो ग्रहस्तद्विरोधित्वं साध्याभाववद्वृत्तित्वसाध्यवदन्यवृत्तित्वोभयावगाहिग्रहविरोधित्वादिकं वानुगमकं वाच्यं प्रसिद्धिः पूर्ववत् अधिकं हेत्वाभासे वक्ष्यमाणरीत्या बोध्यं ग्रन्थस्तूपलक्षणपरोनौपाधिकत्वमात्रव्यवच्छेदाय यद्वक्ष्यति अनौपाधिकत्वन्तु तल्लक्षणमितीति वदन्ति। व्यभिचाराज्ञानस्य व्याप्तिधीहेतुत्वात् व्याप्तिग्रहप्रतिबन्धकग्रहविषयत्वेन व्यभिचारस्याभासत्वम् सोपाधित्वज्ञानन्तु न साक्षाद्व्याप्तिधीविरोधि विरोध्यविषयत्वात् किन्तु व्यभिचारधीद्वारा वक्ष्यते चानुमितेस्तत्कारणज्ञानस्य साक्षाद्विरोधिन एवाभासत्वं निरुपाधित्वस्य ज्ञानन्तु न व्याप्तिधीहेतुः मानाभावात् तथात्वेऽप्युपाधेराभासत्वायोगाच्चेति ।

इदं पुनरिहावधेयम् यदन्योऽन्याभावस्याव्याप्यवृत्तित्वे प्रतियोग्यवृत्तित्वविशेषिततद्घटितलक्षणस्य संयोगादिसाध्यकव्यभिचारिण्यतिव्याप्तिः संयोगान्योऽन्याभावस्य केवलान्वयित्वात् । अथ व्याप्यवृत्तिसाध्यके स्वव्यापकसाध्यसामानाधिकरण्यमेव व्याप्तिः अव्याप्यवृत्तिसंयोगादिसाध्यके तु स्वव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकात्यन्ताभावेन तादृशरूपविशिष्टावच्छिन्नप्रतियोगिताकान्योऽन्याभावेन वा समससामानाधिकरण्यमिति चेत् स्मृतिसंस्कारजन्यज्ञान-

विषयतादिकेवलान्वयिसाध्यकेषु का गतिः । अथ स्वाधिकरणं यत्किञ्चिद्व्यक्तिवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकान्योऽन्याभावप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वं यद्धर्म्मविशिष्टयत्किञ्चिदधिकरणवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकान्योऽन्याभावप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वे सति तद्धर्म्मविशिष्टत्वं वा सेति चेत् अत किं यथा कथञ्चित्सम्बन्धेन तदधिकरणवृत्तित्वं विवक्षितं साध्यतावच्छेदकसम्बन्धेन वा आद्ये गुणः स्पन्दत्वादित्यत्रातिव्याप्तिः गुणत्वस्य स्वरूपसम्बन्धेन स्पन्दवृत्तितया तद्वत्त्वस्य स्पन्दनिष्ठतादृशान्योऽन्याभावप्रतियोगितानवच्छेदकत्वात् । द्वितीये समवायेन जातिसाध्यत्वे मेयत्वादावतिव्याप्तिः जातिमन्मेयव्यक्तिनिष्ठतादृशान्योऽन्याभावप्रतियोगिताया जातिमत्त्वेनावच्छेदात् जातिशून्यमेयवृत्तौ समवायेन वर्त्तमानस्याप्रसिद्धत्वात् । एतेन षष्ठी व्याख्याता । एवं तथात्वेऽत्यन्ताभावगर्भमपि दुर्वचं तथाहि प्रतियोग्यनधिकरणीभूतहेत्वधिकरणनिष्ठात्यन्ताभावेत्यादिगर्भमव्यापकमेव संयोगादिसाध्यकद्रव्यत्वादौ स्वाधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्ति प्रतियोगिकात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्न समानाधिकरणहेतुत्वमित्यत्रापि पूर्ववत् गुणः स्पन्दत्वात् जातिमान्मेयत्वादित्यत्रादिव्याप्तिः एवं स्वप्रतियोगिनिष्ठाधेयत्वानिरूपकहेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्न समानाधिकरणहेतुत्वमित्यत्रापि उत्पत्ति

कालावच्छेदेन जन्यानां द्रव्याणामजन्यानाञ्च प्रलयावच्छेदेन वा संयोगनिष्ठाधेयत्वानिरूपकत्वोपगमे संयोगसाध्यकद्रव्यत्वे कालपरिमाणे च हेतावव्याप्तिः कृतं पल्लवितेन। अत्र वदन्ति साध्यसमानाधिकरण तत्सम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वव्यापक स्वसमानाधिकरण तत्सम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वकत्वं स्वसमानाधिकरण तत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वव्यापकसाध्यसमानाधिकरण तत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वकत्व वा स्वसमानाधिकरणाः सर्वे यद्धर्मावच्छिन्नसमानाधिकरणास्तद्धर्मावत्त्वीढ़सामानाधिकरण्यं साध्यसामानाधिकरण्याभावव्यापकतावच्छेदकस्वसमानाधिकरण्यसामान्याभावत्वकत्वं वा व्याप्तिः। अत्र च साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं तद्वृत्तित्वञ्च एकेन सम्बन्धेन विशेषणताविशेषेण वा बोध्यमिति।

प्रसङ्गात् सामान्यलक्षणां व्यवस्थापयितुमाह व्याप्तिग्रहश्चेति। केचित्तु समानाधिकरणयोरेव व्याप्तिरिति पक्षे पर्वतीयधूमे वह्निव्याप्तिविशिष्टधीर्न पर्वतीयवह्निव्याप्तिग्रहं विना स च न सामान्यलक्षणां विनेति कथितव्याप्तिविशिष्टेत्यादिलक्षणोपोद्घातोऽप्यौत्याहुः। अत्र च सामान्यं लक्षणं स्वरूप यस्या इत्यर्थे सामान्यमेव प्रत्यासत्तिः सामान्यं लक्षणं निरूपकं यस्या इत्यर्थे तु तज्ज्ञानम्। तत्राद्यमाह

साचेन्द्रियेति इन्द्रियेण सम्बद्धं धूमादि तस्य विशेषणं तद्विशेष्यकज्ञानप्रकारो धूमत्वादिरित्यर्थः। विशेषणतेत्यत्र भावार्थो न विवक्षित: तत्र विशेषणस्य यस्या इति बहुव्रीहिर्वा सम्बद्धपदस्यैव वा परम्परासम्बन्धसाधारणसम्बद्धविशेष्यकज्ञानप्रकारोऽर्थः तथाच सैव विशेषणतेत्यर्थः अत्र च वह्निरिन्द्रियस्य लौकिकः सम्बन्धो ज्ञानस्य तदिन्द्रियजन्यत्वस्य नियामकम् एवञ्चानुत्वेन यत्किञ्चिदणूपस्थितावपि सकलाणुगोचरो मानसो बोध इति वदन्ति एतेन धूमोपदर्शने धूमभ्रमे तत्र च वह्निव्याप्तिग्रहे तत्सामान्यता धूमत्वम् धूमेषु व्याप्यग्रहाद्बहुमदर्यमादकनुमितिर्न स्यात् धूमत्वभावेन परामर्शानुत्पादात् किञ्च धर्म्मिणि दोषवशादयथार्थेनाप्यद्यमाणेन स्मरणप्रकारीभवता सामान्येन गृह्यमाणेन वा लौकिकसन्निकर्षविरहेऽपि चाक्षुषज्ञानापत्तिरिति परास्तम्। सामान्यञ्च सखण्डाखण्डभेदेन द्वेधा अखण्डं चाक्षुषेमेव परम्परया सम्बद्ध प्रत्यासत्ति येन सम्बन्धेन चेन्द्रियसम्बद्धं सामान्य ज्ञायते तेन सम्बन्धेनाधिकरणानां प्रत्यासत्तिरिति। ननु यत्र सामानाधिकरण्यप्रत्यासन्न एकव्यक्तिर्घटादिस्तत्प्रागभावादिर्वा नित्य: प्रत्यासत्तिस्तत्र तदभावदशायां तथा प्रत्यासत्त्या तज्ज्ञानानुदयप्रसङ्ग इति चेत् तथापि तत्तद्व्यक्तिद्वारा प्रत्यासन्नस्य घटत्वादेरेव प्रत्यासत्तित्वात् एतदस्वरसेनैव वा द्वितीयं पक्षमाह अतिरिक्तैवेति अतिरिक्ता इन्द्रियसम्बद्धं तादृशसामान्यज्ञानात्मिका असौ

तायनुरोधात्सामान्यज्ञानं प्रत्यासत्तिः अपेक्षणीयञ्च तदि-न्द्रियकरणकतद्धर्म्मवत्त्वबोधसामाग्रन्तरम् अतएवान्धतमसे सौदामिनीसम्पातजनितेऽपि द्रव्यप्रत्यक्षे चरमं न चाक्षुषो निखिलद्रव्यसाक्षात्कारसन्तान इति तु नव्याः। इयञ्च धर्मि-विषयकं ज्ञानं धर्म्मिणां प्रत्यासत्तिरितरा तु यद्विषयकं ज्ञानं तस्य अतएव सुरभिचन्दनमित्यादौ सौरभत्वादेरपि भानमिति। ततः स्मृता सेति धूमसमानाधिकरणात्यन्ता-भावाप्रतियोगिवह्निसमानाधिकरणवृत्तिधूमत्वं वह्निमदन्या-वृत्तित्वं वह्निसम्बन्धितावच्छेदकरूपवत्त्वं वा व्याप्तिः एकैव च सा सर्वधूमसाधारणीति भावः। व्याप्तिनानात्वे तु पर्व-तीयवह्नेरसन्निकर्षे तत्सामानाधिकरण्यग्रहायोगः अन्यदीय-वह्निसामानाधिकरण्यस्य तत्र भानाङ्गीकारे भ्रमत्वापत्ति-रिति द्रष्टव्यम्। गवादिपदेष्वपीति शक्त्यनुभवशक्यस्मरणे हेतु हेतुमान् वाक्यार्थबोधः। नचैवं जातिशक्तिवादविरोधः जातौ व्यक्तौ च शक्तिः परन्तु जातिविषयत्वेनैव ज्ञाता शक्ति-र्व्यक्तिं स्मारयति अनुभावयति चेति तदर्थादिति वक्ष्यमा-णत्वात्। अतद्गुणसंविज्ञानबहुव्रीहिणापश्वादिलिङ्गादिपदा-भिप्रायेण पररीत्या वेत्यपि कश्चित्। विशेषणज्ञानसाध्येति। न च पक्षतावच्छेदकज्ञानजन्यतया सिद्धसाधनं यद्यद्विशिष्ट-ज्ञानं तत्तद्धीसाध्यमिति सामान्यव्याप्त्यादरात् अभावत्व प्रतियोगित्वयोरप्यनुपस्थितयोरप्रकारत्वात्। वह्निविशिष्ट-ज्ञानत्वेन तद्वह्निविशिष्टज्ञानत्वेन वा तज्ज्ञानजन्यत्वसाध-

मात्र विशिष्टवैशिष्ट्यत्वाद्यभ्युपगमवाद' वस्तुतो विशेषण
तावच्छेदकादीनां युगपदिन्द्रियसन्निकर्षात्तादृगप्रत्यक्षम्
अनुमित्यादेस्तु तादृप्येन व्याप्त्यादिपदात् अतएवानेकव्य
क्तिकद्रव्यादिविशेषणतावच्छेदककानुमित्या तज्ज्ञानार्थं न
सामान्यलक्षणादरः। अस्तु वा दण्डीत्यादि प्रत्यये दण्ड
मादिना दण्डसंयोगवानित्यादौ च दण्डसंयोगत्वादिना यत्
किञ्चिद्धर्मिज्ञान कारणम्। दृष्टान्ताभावादिति विशेषण
ज्ञानत्वेन हेतुत्वस्य विशिष्यज्ञानान्तरेऽपि कारणत्वापत्त्या
मानाभावेन च निरस्तत्वादिति एतेनास्तु विशेष्यज्ञानमपि
कारणमन्यथा निर्विकल्पमपि सामान्यलक्षणया सर्वज्ञता-
पत्त्या तथास्तदृष्टकल्पने गुरुत एव बाधकाश्च तत्कारणमिति
निरस्तम्। प्रसिद्धधूम इत्यादि धर्म्मज्ञानस्य समयहेतुत्वा
नङ्गीकारेऽपि मनाय एव धर्म्मिभानाय सा स्वीकार्या धर्मि
तावच्छेदकप्रकारकज्ञानस्य प्रत्यासत्तित्वाभ्युपगमेत्यविवा
दात् तद्धर्मप्रकारकज्ञानस्य तद्धर्माश्रयप्रत्यासत्तित्वोपग .
मात्। यत्र वदन्ति प्रसिद्धधूमे धूमत्वेन व्याप्तिज्ञान एत
द्धूमत्वेन वा आद्ये संशयोऽसिद्ध द्वितीये धूमत्वावच्छेदेन
व्याप्तिपक्षस्येव तद्विरोधितया संशयानुपपत्ते कथमन्यथा
पृथिव्यादिरूपे वायुत्वाभावव्याप्यतानिर्णयेऽपि रूपं वायुत्वा
भावव्यभिचारि नवेत्यादिसंशय नचातिरिक्तसम्भावनया
तथा विशेषतयोपस्थितानामतिरिक्तानां विशेषदर्शनाक्रान्त
तया अतिरिक्तान्तरोपस्थितये अवश्यं सा स्वीकरणीयेति

वाच्यं यतो रूपेषु नातिरिक्तत्वसम्भावना तेषु विशेषदर्शनात् नाप्यतिरिक्ते रूपत्वसम्भावना रूपान्यन्नरूपं द्रव्यादयो-रसादयश्च न रूपं प्रसिद्धरूपभिन्नं यद्रूपभिन्नं द्रव्यं रसादि वा तत्सर्वं न रूपं रूपत्वाभाववच्चेत्यादिविशेषदर्शनेन तस्या अप्ययोगात् 'तदानीञ्चोक्तसंशयस्य सर्वजनानुभवसिद्धत्वात् अतिरिक्तसम्भावनाया गौरवेणाप्रयोजकत्वाच्च तस्मात्तत्रैव धूमे रूपे वा धूमत्वेन रूपत्वाद्यवच्छेदेन व्याप्तिग्रहाद्-व्यभिचारसंशयो नायुक्तः। यत्तु सामान्याभावभानार्थं सा स्वीकार्य्या तां विना सकल तत्प्रतियोगिज्ञानासम्भवादिति तन्न नह्यभावस्य ज्ञानमात्रे लौकिकप्रत्यक्षे वा प्रतियोगि-ज्ञानं कारणं तत्र सामान्यलक्षणया दूदन्त्वादिना च भाने व्यभिचारान्मानाभावाच्च अतएवेदन्त्वादिनोपस्थिते तमसि भावत्वाभावत्वसंशयः तेजोऽभावत्वेनोपस्थितेतदयोगात् प्र-तियोगिविशेषिततज्ज्ञानन्तु विशिष्टवैशिष्ट्यबोधमर्य्यादां नातिशेते सकलप्रतियोगिविषयत्वन्तु तस्या सिद्धं प्रति-योगिज्ञानस्य हेतुत्वेऽपि प्रतियोगितावच्छेदकविशिष्ट यत्-किञ्चित् प्रतियोगिज्ञानादेव तत्सम्भवात् यावत्प्रतियोगि-ज्ञानत्वेन गौरवेण हेतुत्वात् न च तदभावबुद्धौ तज्ज्ञान-हेतुत्वात् यावत् प्रतियोगिज्ञानस्य हेतुत्वमर्थायातं माना-भावात् ध्वंसप्रागभावात्यन्ताभावाश्च प्रतियोग्यादित्रितय-प्रतियोगिकाः द्वयाग्रहेऽप्येकग्रहादेव गृह्यन्त इत्यभ्युप-गमाच्च अन्धकारस्तु तेजो विशेषसामान्याभावो नाभावसमु-

दाच यावत्तदभावानामेकदासम्भवात् अननुगमादौत्या न्तेजोविशेषत्वादिज्ञानस्य तेज सामग्र्याच विरहेऽपि तेजो विशेषात्यन्ताभावप्रागभावानां प्रत्यक्षानभ्युपगमाच प्राग भावप्रत्ययोऽपि च प्रतियोगिवृत्तिघटत्वादिप्रकारकज्ञान साध्यो न प्रतियोगिज्ञानमपेक्षते । अथ घटो भविष्यतीति प्रत्यय प्रतियोगिविशेषित प्रागभावमवगाहते न च प्राचो नास्तत्प्रतियोगिनस्तत्प्रतियोगित्वावगाहने च भ्रमत्व मथा नागते घटे प्रत्यासत्त्यन्तरमस्ति अत सामान्यप्रत्यासत्त्या घटत्वेनानुभूत स्मृतश्च स सदागम्यते । न च चरमकारण रूपसामग्र्यामेव प्रागभावो वाच्य अन्यदा तदप्रत्ययात्तस्या स्वरूपसत्त्वा स्वरूपेण वा ज्ञातायास्तथात्वेऽतिप्रसङ्गात् व्याप्यत्वेन गृहीतायास्तथात्वे वाच्य तथा च तद्धेतुका प्रागभावस्यानुमितिरेव तावत्कालं प्रागभावस्यानन्त्येन प्रत्य क्षायोगाच्चेति वाच्य यादृशकारणकलापानन्तरं कार्य्योत्पादो दृष्टस्तदुद्देशेन व्यञ्जकत्वाभ्युपगमात् अनुयोगिताविशे षादिरूपप्रागभावत्वादे क्वचिदप्रतीतौ तादृश्येनानुमाना सम्भवाच्चेति चेत् भविष्यत्त्वं हि न वर्त्तमानप्रागभावप्रति योगित्व श्वोभाविन्यपि भविष्यतीति प्रत्ययप्रसङ्गात् किन्तू त्पत्स्यते भविष्यतीत्यादे समानार्थकत्वाद्वर्त्तमानप्रागभाव प्रतियोग्युत्पत्तिकत्व वर्त्तमानकालोत्तरकालीनोत्पत्तिकत्व वा 'तच्च नचेदमध्यक्षम् उत्पत्तेरतीन्द्रियत्वात् इहाच घटो भविष्यतीत्यादौ च तादृशोत्पत्तेर्देशविशेष कालविशेष

स्वाधिकरणत्वेन प्रतीयते न तु प्रागभावस्योत्पत्तिमतो वा अतएव कपालनाशजन्यघटनाशस्य घटाद्यात्मकतत्प्रागभाववत्यपि तत्र कपाले नेह घटध्वंसो भविष्यतीति बुद्धिः न वा भवने श्वः समुत्पद्य प्राङ्गणे परश्वो गमिष्यति मैत्रे प्राङ्गणे परश्वो भविष्यतीति धीः। अत्र च धातुनोत्पत्तिः प्रत्याय्यते प्रत्ययेन च धात्वर्थनिष्ठं तादृशप्रतियोगित्वं तादृशकालीनत्वं वा नङ्क्ष्यति नश्यति नष्ट इत्यादौ च प्रत्ययेन यथायथमनागता वर्त्तमानातीता चोत्पत्तिः तस्यामेव च कालविशेषादिर्विशेषणत्वेनान्वेति एतेन श्वोभाविनाशके परश्वो नङ्क्ष्यतीति नष्टे च नश्यतीति च व्यवहारः स्यात् न स्याच्च नाशस्य विद्यमानत्वान्नष्ट इत्यादिव्यवहारः। न च तत्रातीतकालसम्बन्धित्वं वर्त्तमानत्वं वा निष्ठादेरर्थः चिरविनष्टेऽपि पूर्वेद्युर्नष्टोऽधुना वेतिव्यवहारप्रसङ्गादिति परास्तम्। कर्त्तरि विहितेनाख्यातेन क्तेन वा यथायथमाश्रयत्वप्रतियोगित्वलक्षणं कर्तृत्वं आश्रयप्रतियोगिरूपश्च कर्त्ताभिधीयते। कार्य्यानुत्पाददशायाञ्चाभावधीः सामयिकात्यन्ताभावमवगाहते न च प्रतियोगिसमवायिनि समयावच्छेदेनात्यन्ताभाववृत्तौ मानाभावः भाविनि नष्टे वा घटे इह कपाले घटो नास्तीति प्रत्ययात् नह्ययं घटप्रतियोगिकमभावमात्रमवगाहते यत्किञ्चिद्घटवत्यपि तादृशप्रत्ययप्रसङ्गात् परन्तु घटत्वावच्छिन्नप्रतियोगिताकं न च ध्वंसप्रागभावौ तथा सम्भवतो वा न तत्र कपाले ततः पूर्वं परतश्च बहूनां घटानां

नष्टत्वादुत्पत्स्यमानत्वाच। अथैव कपालादौ कथं घटध्वंसा दिमत्ताबुद्धिः अत्यन्ताभावस्य ध्वंसाद्यविरोधित्वादिति चेत् न तदधिकरणस्वरूपादतिरिक्तान्वयानुगतादभावाद। इह दानीं घटप्रागभाव इति च प्रत्ययो न लौकिकानाम् अथैवं जातो घट इत्यादिवदुत्पन्नो घटध्वंस इत्यादिविमिश्रणप्रत्यय बलेन नाशोऽतिरिच्यतां मतु प्रागभावः पूर्वत्वतत्पूर्वत्वादि व्यवहारयातीत-कालवृत्तित्वतदुत्पत्तिकालीनध्वंस प्रतियोगि-कालवृत्तित्वादिविषयक एवास्तु दुःखात्यन्ताभावस्य स्वभि न्नरकालानुवृत्ति दुःखसाधनध्वंसं वा समुद्दिश्य क्रिया विशेषे प्रवृत्तिरस्तु प्रामाण्यरसिद्धि प्रयोजनमुद्दिश्य पुंसां प्रवर्त्तने मतु प्रवृत्त्यैव तत्सिद्धिः उत्पन्नस्य पुनरुत्पा दप्रसङ्गस्य प्रागभावकार्य्यादिः प्रतिबन्धकत्वेनापि निरसनीय तदुत्पत्तिः प्रथमसमयसम्बन्धीकुर्वता मते स्वाधिकरणसमय ध्वंसानधिकरणसमयसम्बन्धः तदुक्तम् भव्यस्य क्षणयोगस्य क्षणयोगो जनिर्मतेति क्षण समयः तदङ्गीकारे तु क्वचिदपि यदीयसमयसम्बन्धे यत्समयवृत्तिध्वंसप्रतियोगित्व नास्ति तस्य तत्समयसम्बन्धः तदधिकरणक्षणावृत्तित्वव्याप्यस्ववृत्ति ध्वंसप्रतियोगिताकसमयवृत्तित्व वा क्षणत्वम् स्ववृत्तिध्वंस प्रतियोग्यनाधारत्व स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयाव द्ध्वंसविशिष्टसमयत्व स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वं स्ववृत्तिया वदभावविशिष्टसमयत्व स्वपूर्ववर्त्तियावत्पदार्थविशिष्टसम यत्व वा स्वपूर्वत्वम् स्वाधिकरणयावत्कालवृत्तिध्वंसप्रति

योगित्वं जन्यमात्रस्यैव कालोपाधित्वाददोषः यो यत्काल-वृत्तिध्वंसप्रतियोग्यवृत्तिस्तस्य तद्वृत्तित्वमुत्पत्तिरित्यपि केचिदिति चेत् नैवमपचीयते किञ्चिदस्माकमित्येकदेशिनो वर्णयन्ति । अथ पटस्य स्वानधिकरणेषु तन्तुषूत्पत्तिवारणाय सहस्रादीनां तत्तत्तन्तुत्वेन तत्तत्पटजनकत्वं वाच्यं तथा च लाघवादेक एव प्रागभावः कल्प्यते स च स्वाश्रय एव प्रति-योगिजनक इति नातिप्रसङ्गः इत्थञ्चानेकत्र प्रागभावसिद्धौ प्रागभावत्वेन प्रतियोगिजनकत्वाद्वितन्तुकेऽपि तत्सिद्धिरिति चेत् त्रिचतुरेष्वेव तन्तुषु उत्पन्नेषु संयुक्तेषु च तत्पटोत्पत्ति-प्रसङ्गः तावत्तन्तुवृत्तेः पटस्य कतिपयविरहे कथमुत्पत्तिरिति चेन्न कार्य्यानुत्पादस्य विना कारणविरहमनभ्युपगमात् सामग्रीसत्त्वेऽग्रिमक्षणे कार्य्यसत्त्वस्यावश्यकत्वाच्च तत्पट-प्रागभावाश्रययावत्तन्तुत्वेन तत्पटजनकत्वमिति चेत् अव-च्छेदककोटौ प्रागभावस्य प्रवेशाप्रवेशयोः कारणत्वे प्रमाणा-भाव. परस्परासंयुक्तेषु कतिपयतन्तुषु तत्पटो जायेत न च तत्पटप्रागभावव्याप्ययावत्संयोगानामपि जनकत्वं कतिपय-तन्तुसंयोगेष्वतीतेषु अनागतेषु वा तत्पटानुत्पत्तिप्रसङ्गात् तत्पटप्रागभावमपेक्ष्य स एव पटो लघीयान् यावत्त्वानिरु-क्तेश्च । एतेन द्वित्वाद्युत्पत्तिर्व्याख्यातेति । परे पुनरिहेदानीं घटध्वंस इतिवदिहेदानीं घट प्रागभाव इति साधारणमेव लोकानां प्रत्यक्षं कल्पयन्तस्तद्बलेन प्रागभावं सामान्यलक्ष-णाच्च व्यवस्थापयन्तो वर्णयन्ति । अव्याप्यवृत्तेः कार्य्यस्य

षितं सामान्यलक्षणयापि गृहीतुमशक्यत्वात् । ननु समानविषयकत्वेनापीति स्यादेतत्समानप्रकारतामात्रस्य प्रयोजकत्वे क्वचिदेव रजतत्वप्रकारिकेच्छा क्वचिन्नेति नियमो न स्यात् तादृशप्रकाराश्रय एव तदुत्पादोपगमे कथमरजते रजतत्वप्रकारिकेच्छा अनुपस्थिते चासंसर्गाग्रहोऽपि न नियामकः वस्तुतोऽसंसर्गाग्रहमपेक्ष्य लघीयसस्तद्विषयतामात्रस्यैव नियामकत्वमुचितम् सामान्यतश्च तदिच्छायां व्यवस्थितहेतुभावस्य तद्विषयकज्ञानस्य तत्प्रकारकत्वमवच्छेदकं कल्प्यते लाघवात् । अस्तु वा समानप्रकारकत्वेन व्यवस्थिते कार्य्यकारणभावेऽतिप्रसङ्गभङ्गाय सामानाधिकरण्यमिव समानविषयत्वमपि प्रत्यासत्तिः । असंसर्गाग्रहादेः कारणतामपेक्ष्य समानविषयत्वस्यावच्छेदककोटिनिवेशोऽपि लघीयान् कारणयथार्थत्वायथार्थत्वाधीनस्तु कार्य्यस्य तथाविधो विशेषः एतेन रजतत्वप्रकारकेच्छायां तत्प्रकारकं ज्ञानं संवादिन्यां तस्यां दोषाभावसहितं विसंवादिन्यान्तूपस्थिता रजतगतभेदाग्रहसहितं हेतुरिति परास्तम् त्वद्दिशापि च संवादिन्यामुपस्थितरजतभेदाग्रस्यैव हेतुत्वौचित्यात् दोषाणां रजतभेदग्रहप्रतिबन्धकानामभावमपेक्ष्य लघुत्वात् । अत्राहुः सिद्ध एव सुखे सुखत्वेन रूपेणेच्छालाघवात् तत्प्रकारकेच्छायां तत्प्रकारावच्छेदेन सिद्धत्वज्ञानमेव हि विरोधि न च तत्प्रकृते तत्सत्त्वे इच्छोत्पत्तेस्त्वयाप्यनङ्गीकारात् कथमन्यथा चिरप्रोषितस्याज्ञातकान्तामरणस्य तत्कान्तावलो-

कमादावपि च्छा आतावक्रीकमादीनां सिद्धत्वप्रानात् प्रति रिक्तस्य यामत्वादित्यादिवदुत्तरमूहनीयम्। अथ सिद्धस्य नियथाभावापेक्षया साध्यवादसिद्धत्वप्रानमेव हेतु। न च सिद्धत्वेन ज्ञाते तत्तद्भवतीत्यसिद्धत्वज्ञानाय सामान्यलक्ष मेति चेन्न विशेषरूपायच्छेदेन सिद्धत्वेन ज्ञात एव सामा न्यरूपेणासिद्धत्वपरसम्भयात्तदेक ज्ञान ज्ञानद्वय चेत्यन्य देतत् सामान्यलक्षणासत्त्वेऽप्यसिद्धत्वप्र ज्ञातुमशक्यत्वात्। वस्तुतस्तु सामान्यलक्षणां विनाप्ययं काम गुणप्रागभावयान् गुणोत्पादकामीनत्व समतियोगी वा कामत्वादेतादृशकाल त्वाद्देयनुमानादसिद्धगुणस्य तदसिद्धस्य च ज्ञान सुगममेव निपुणतरमुपपादयिष्यते चेद गम्भीरमणिदीधिताविति ज्ञात पल्लवितेन। घट न इत्यादि संशयसामान्याकारो हि नि श्चयस्तद्विरोधी घटो न वेति संशय कोटितावच्छेदके घटत्वांशे निष्प्रकारकाय न च प्रमेययानिति प्रत्ययस्तथा चतएव जातिमानिति निश्चयेऽपि घटो न वेति संशय घटत्व वाविषयस्तु घटेतरावृत्तित्वविशिष्टमवगाहमानो घटान्यतास न्देह विरूपादि पुरुषार्थत्वकाकोटरादिरिव द्रव गुणपल संशयम्। स्वसामग्रीविरहादिति घट इति निश्चयं प्रति घटत्वांशे निर्विकल्पक ज्ञान कारण जातित्वादिना घटत्व ज्ञानेऽपि तदनुदयात् सामान्यलक्षणायाश्च सामान्यप्रकारक ज्ञानजनकत्वनियमात् विशिष्टज्ञानसामग्रीसत्त्वात्।

प्रसङ्गादुपाधिं निरूपयितुमाह उपाधीति सोपाधी

षितं सामान्यलक्षणयापि गृहीतुमशक्यत्वात्। ननु समानविषयकत्वेनापीति स्यादेतत्समानप्रकारतामात्रस्य प्रयोजकत्वे क्वचिदेव रजतत्वप्रकारिकेच्छा क्वचिन्नेति नियमो न स्यात् तादृशप्रकाराश्रय एव तदुत्पादोपगमे कथमरजते रजतत्वप्रकारिकेच्छा अनुपस्थिते चासंसर्गाग्रहोऽपि न नियामकः वस्तुतोऽसंसर्गाग्रहमपेक्ष्य लघीयसस्तद्विषयतामात्रस्यैव नियामकत्वमुचितम् सामान्यतश्च तदिच्छायां व्यवस्थितहेतुभावस्य तद्विषयकज्ञानस्य तत्प्रकारकत्वमवच्छेदकं कल्प्यते लाघवात्। अस्तु वा समानप्रकारकत्वेन व्यवस्थिते कार्य्यकारणभावेऽतिप्रसङ्गभङ्गाय सामानाधिकरण्यमिव समानविषयत्वमपि प्रत्यासत्तिः। असंसर्गाग्रहादेः कारणतामपेक्ष्य समानविषयत्वस्यावच्छेदककोटिनिवेशोऽपि लघीयान् कारणयथार्थत्वायथार्थत्वाधीनस्तु कार्य्यस्य तथाविधो विशेषः एतेन रजतत्वप्रकारकेच्छायां तत्प्रकारकं ज्ञानं संवादिन्यां तस्यां दोषाभावसहितं विसंवादिन्यान्तूपस्थिता रजतगतभेदा ग्रहसहितं हेतुरिति परास्तम् त्वद्दिशापि च संवादिन्यामुपस्थितरजतभेदाग्रस्यैव हेतुत्वौचित्यात् दोषाणां रजतभेदग्रहप्रतिबन्धकानामभावमपेक्ष्य लघुत्वात्। अतएव सिद्ध एव सुखे सुखत्वेन रूपेणेच्छालाघवात् तत्प्रकारकेच्छायां तत्प्रकारावच्छेदेन सिद्धत्वज्ञानमेव हि विरोधि न च तत्प्रकृते तत्सत्त्वे इच्छोत्पत्तेस्त्वयाप्यनङ्गीकारात् कथमन्यथा चिरप्रोषितस्याज्ञातकान्तामरणस्य तत्कान्तावली-

त्त्वा ज्ञातावलोकनादीनां सिद्धत्वज्ञानात् प्रति
घासत्वादित्यादिघद्दुतरमूहनीयम्। अथ सिद्धत्व
त्वापेक्षया लाघवात्सिद्धत्वज्ञानमेव हेतु। न च
ज्ञाते तन्मूभावतीत्यसिद्धत्वज्ञानार्थं सामान्यलक्ष
र विशेषरूपावच्छेदेन सिद्धत्वेन ज्ञात एव सामा
सिद्धत्वप्रत्यक्षसंभवात्तदेक ज्ञान ज्ञानद्वय चेत्यन्य
मान्यलक्षणासत्त्वेनाप्यसिद्धत्वस्य ज्ञातुमशक्यत्वाच।
सामान्यलक्षणां विनाप्ययं काल सुखप्रागभाववान्
दकालीनध्वंसप्रतियोगी वा कालत्वादेतादृशकाल
मानादसिद्धसुखस्य तदसिद्धत्वस्य च ज्ञान सुलभमेव
उपपादयिष्यते चेद् मन्दमणिदीधिताविति सत
। घट स इत्यादि संशयसामान्यकारणे हि नि
दोषो घटो न वेति संशय कोटितावच्छेदक
निष्प्रकारकत्व न च प्रमेयवानिति प्रत्ययस्तथा
ातिमानिति निश्चयेऽपि घटो न वेति संशय घटत्व
तु घटेतरावृत्तित्वविशिष्टसंयोगादिमत्त्वानां घटान्यतास
ण्वहि पुरुषावृत्तित्वकोटरादिनिश्चय इव पुरुषत्व
। स्वसामग्रीविरहादिति घट इति निश्चय प्रति
निर्विकल्पक ज्ञान कारण जातित्वादिना घटत्व
तदनुदयात् सामान्यलक्षणायाश्च सामान्यप्रकारक
त्वनियमात् विशिष्टज्ञानसामग्रीसत्त्वात्।
ज्ञादुपाधि निरूपयितुमाह उपाधीति सोपाधौ

साध्यत्वसाधनत्वे न सम्भवतः अतोऽभिमते इति यो यद्व्याप-
कत्वे सति यद्व्यापकः स तत्रोपाधिरिति निर्गलितोऽर्थः
व्यापकत्वाव्यापकत्वे एकरूपेण विवक्षिते नतूपाधिः साध्य-
व्यापकत्वं साध्यानिष्ठव्याप्तिनिरूपकत्व सा च यावदुपाधि-
व्यापकव्यापकत्वरूपानौपाधिकत्वज्ञानादेव ग्राह्या उपाधि-
व्यापकयावदर्थान्तर्गतस्य चोपाधेः साध्यव्यापकत्वग्रहश्च
साध्यनिष्ठ व्याप्तिग्रहादित्यन्योऽन्याश्रय इत्यत आह
अनौपाधिकत्वेति व्यापकत्व व्याप्तिनिरूपकत्वं साचा-
नौपाधिकत्वग्रहादग्रहीतव्या तत्प्रविष्टव्याप्तिज्ञानमपि अ-
नौपाधिकत्वान्तरग्रहादित्यनवस्थेत्यत आह अनौपाधिकत्वेति
अन्योऽन्याश्रयपदमनवस्थापरमिति सम्प्रदायः। अव्याप्यवृ-
त्तिनां व्यापकत्वमुपपादयितुमाह प्रतियोगित्वञ्चेति तदधिक-
रणानधिकरणत्वन्तदधिकरणाधिकरणत्वविरोधि यत् प्रतियो-
गित्वं प्रतियोगिव्यधिकरणाभावप्रतियोगित्वं तदिह ग्रहीतव्यम्
प्रतियोगिव्यधिकरणत्वेनाभावो विशेषणीय इति फलितोऽर्थः।
साधनेति अनयोरसङ्करोऽग्रे दर्शयिष्यते। पक्षेतरेति
पक्ष इतरो यस्मादिति बहुव्रीहिः भावप्रधानश्च निर्देशः।
पक्षमितरयति व्यावर्त्तयतीति व्युत्पत्त्या तद्वृत्तिधर्म्मवचन
इत्यपि कश्चित्। तादात्म्येन धर्म्मिण एव व्यापकत्वमिति तु
परमार्थः अतएवाग्रे पर्वतेतरान्यत्वादिति साधु सङ्गच्छते
इतरथा तु व्यापकाभावस्येव व्यापकवदन्योऽन्याभावस्यापि
गमकत्वमाश्रित्य सङ्गमनीयम्। व्यतिरेक इति यद्यपि

न्नयनोपयोगित्वात्। जातित्वादिति। तदुत्तरस्येत्यादि। उपाधित्वाभावेऽपीति उपाधित्वानङ्गीकारेऽपीत्यर्थः। दूषकतावीजसत्त्वे तस्योपाधित्वं दूषकतावीजञ्च न व्यभिचारादेरुन्नायकत्वम् अपि तु सत्प्रतिपक्षस्य तच्च नास्तीत्यतो न स उपाधिरिति शङ्कते अथेति व्यभिचारोन्नायकतया व्यभिचाराद्युन्नायकतया अव्याप्यतया अव्याप्यत्वादिना अव्याप्यत्वमव्याप्यत्वादि। सत्प्रतिपक्षान्तरवदिति व्याप्तिपक्षधर्म्मतारूपवलसत्त्वे नैकेनापि वहूनां प्रतिरोधसम्भवात् वहुत्वस्यावलत्वात् यच्च प्रमाणतत्त्ववोधादौ वहुत्वमपि वलमुक्तं तन्न सत्प्रतिपक्षतायां किन्त्वेकत्राङ्गभङ्गप्रसङ्गे वहुपुतत्कल्पनागौरवमेकत्र च लाघवमिति तर्कोत्थापकतयेति नोपाधिः सत्प्रतिपक्षोत्थापकतया तत्र दूषकत्वसम्भव इति भावः एवं सत्प्रतिपक्षोन्नायकतया दूषकत्वे वाधस्यानिश्चयेऽसाधारण्यानिश्चये च वैयर्थ्यात् माभूत् सोऽप्युपाधिरित्यभिप्रायेण शङ्कते नन्विति। हेतुमतीति नचासङ्कीर्णवाधस्थले व्यभिचारः प्रतियोगिव्यधिकरणसाध्याभावस्यैव प्रकृते वाधत्वात् तदनभ्युपगमाद्वा। अतेजस्त्वं विनेति तत्समशीलं विना शुद्धसाध्यव्यापकस्योपाधेरभावादित्यर्थः तेन भास्वररूपशून्यत्वादेरूपवत्तावच्छिन्नसाध्यव्यापकगुरुत्वादेश्च सत्त्वेऽप्यदोषः नचैतद्व्यतिरेकोनासाधारणः पक्षे साध्यस्यासिद्धौ सपक्षाभावात् सिद्धौ तु तत्रैव सपक्षे वर्त्तमानत्वादिति वाच्यं पक्षमात्रवृत्तिरसाधारण इत्यभिप्रायात् जलादावुष्णत्वभ्रम-

दृष्टायां तथात्वमित्यपरे। श्रोमोमणि तेऽप्यत्रायद्दृगाया मप्रतीतसाध्यतदभावसहचारकृपत्वमसाधारण्यमित्यन्ये। अ-साधारण्ये हि साध्यसहचाराग्रहप्रतिबन्धेन व्याप्तिपक्षप्रतिबन्ध व्यतिरेकव्याप्त्यादरे तु साध्यतदभावयोर्द्वयोरपि तदवि शेषात् सत्प्रतिपक्षो दूषकतावीजम्। नचैतावदव्यतिरे-कित्वात् न द्वितीय सत्प्रतिपक्षे तादृग्वकागात् अत पक्षेतरोऽपि सत्प्रतिपक्षोत्थापकतयोपाधिरेवेत्याह व्यतिरेकिमित्यादिना। नन्वेवं प्रागुक्तरीत्या व्यभिचारा नुमापकत्वस्य सत्प्रतिपक्षेऽनुद्भावनीयत्वापत्त्या च सत् प्रतिपक्षोत्थापकत्वस्य दूषकतायामवीजत्वे उपाधिदूषण मेव न स्यात् वीजाभावात् अत आह तथादिति। तदुक्त मुपाधेर्व्यभिचारद्वारैवेति भवतु वा पक्षेतरो नोपाधिः उपादीयताञ्च तद्व्यावृत्तये विपक्षाव्यावर्त्तकत्वादिकं विशे षणं तथापि तत्क्षणमति व्यापकमेव घणवो गन्याणवो वा सकर्तृकाः कार्य्यत्वादित्यात्मायनणुत्वादौ। ननु व्यभि चाराद्यनुमापकतामात्रेणोपाधित्वे व्यापकव्यभिचारित्वादा वतिप्रसङ्ग इत्यत आह तथेति तथा तेन रूपेण स्वव्यभि चारेण स्वव्यतिरेकेण वा दूषकतायां व्यभिचारस्य सत् प्रतिपक्षस्य वोन्नायकतायामतिप्रसङ्गभञ्जिकायां साध्य-व्याप्यत्वस्य व्यर्थत्वात् साधनाव्यापकधर्मस्योपाधित्वे साध्या न्वयव्यतिरेकोन्नायकान्वयव्यतिरेकशालित्वरूप साध्यप्रयोजकत्व नियामकम् अन्यथातिप्रसङ्गादित्याशङ्कते यद्येति

अभवतोऽसतः भवत सतः। व्यर्थत्वादिति नचैवं पचेतरत्वेऽतिप्रसङ्गः तत्रापि पचेतरसाध्यवत्त्वादावतिप्रसङ्गात्। विषमव्याप्तस्यानुपाधित्वे योगाभावं नियामकमाशङ्कते नन्विति उप समीपवर्त्तिनि आदधाति स्वीयं धर्म्ममित्युपाधिः यद्धर्म्मबोधकशब्दसमभिव्याहारेण चोपाधिपदं प्रयुज्यते तद्धर्म्मसंक्रामकत्वं तद्बोधयति यथा स्फटिकलौहित्ये जवाकुसुममुपाधिरित्यत्र लौहित्यसंक्रामकत्वं प्रयुज्यते च शास्त्रे व्याप्यत्वबोधकशब्दसमभिव्याहारेण तत् यथात्र साधने असावुपाधिरित्यतो व्याप्तिसंक्रामकत्वलाभः। यदभाव इति अस्ति तावदिह हेतावुपाधिर्नेह हेतावुपाधिरिति प्रतीतिर्व्यवहारश्च तावालम्ब्य चेदं लक्षणवाक्यं तत्र यदि साधने उपाधिव्यभिचाराव्यभिचारौ तद्व्याप्यत्वव्याप्यत्वे वा यदि वा तेन सम्बन्धेन तद्वृत्त्यवृत्ती एव तदालम्बनमुभयथापि नेह चतिः यदभावशब्देनापि तथैव वक्तुं शक्यत्वात् तदभावस्य च व्यभिचारविरोधित्वं तत्सत्त्वेऽवश्यं व्यभिचार विरहस्तद्विरहिणि धर्मे चावश्यं व्यभिचारकत्वं तत्सत्त्वेऽवश्यं व्यभिचारविरहः व्यभिचारविरहिणि धर्मे चावश्यं तत्सत्त्वमिति वा द्वैदृशश्च विरोधो न विषमव्यापकाभावस्य तत्सत्त्वेऽपि व्यापकएव व्यभिचारसत्त्वात् नापि विषमव्याप्याभावस्य साध्यएव तद्विरहेऽपि व्यभिचाराभावात् तादृशधर्मस्य चोक्तसम्बन्धेनोक्ततत्सम्बन्धस्य वा यत्र वृत्तिस्तत्रायमुपाधिः स एव च सोपाधिः अतएव तदभावलक्षणमनौपाधिकत्वं व्याप्तिरिति गीयते विरो-

अघटकत्वद्वये च एकैकस्य व्याप्तिशरीरघटकतया दूषकता
वा न स्यादित्युभयोपादानमिति सर्वं सम्यम्। यदि च
समव्याप्ताकाशाभयमात्रवृत्तिधर्मेणाकाशस्योपाधित्ववारणार्थं
तत्र यत्पदं वृत्तिमत्परं बोध्यम् अत्र च व्यभिचारस्य घट
कर्मेऽपि प्रमेयत्वपद व्यतिरेकिधर्मोपन्यासकम्। अथैतादृशो
पाध्यभावस्य व्याप्तिलक्षणत्वे पक्ष व्यभिचारिणि नैतस्याव
मत्चारिव्याप्ति तथात्यन्तमसत्त्वेनाभावानिरूपणे तु तत्तस्य
सद्धेतावव्याप्तिरत आह व्यभिचारे चेति यस्य यद्व्यभिचा-
रस्तद्व्याप्यसत्त्व वा अभाव साध्यव्यापके व्यभिचारवि
रोधी स साधनाव्यापक उपाधिरित्यपि वदन्ति। यद्व्यभि
चारित्वाभाव साधने साध्यव्यभिचाराभावापादक स साध्य
व्यापक उपाधिरित्यपि केचित्। न तु व्यतिरेक इति
व्यतिरेकेऽनुमितिप्रयोजकं रूप व्याप्त्याद्यन्यतम भवत्येव
यथा धर्मिसिद्धिव्यतिरेके सिद्धिरित्यर्थ। विरुद्धत्वादेरिति
विपक्षमात्रगामित्वसपक्षविपक्षगामित्व लक्षणविरोध व्यभिचा
रयोरेकैकविरहेऽपि व्याप्तेरनियमादित्यर्थ यत्र पक्षे हेतु
मति च साध्य हेतुश पक्षावृत्तिसाधक पक्षावृत्तिर्हेतु
समानाधिकरण अपरश्च पक्षनिष्ठ साध्यवति हेत्वसमा
नाधिकरण हेतुसमानाधिकरण एव वा उपाधिस्तत्र साधन
पक्षधर्मावच्छिन्नसाध्यव्यापकयोरसङ्करो बोध्य यथा घट-
प्रत्यक्षो नित्यद्रव्यत्वा विभुत्वादेत्यादौ साधनावच्छिन्न
साध्यव्यापकमात्मत्व पक्षधर्मावच्छिन्न साध्यव्यापकमुद्भूत

रूपवत्त्वं प्रत्यक्षस्पर्शाश्रयत्वं वा मिथोऽसङ्कीर्णमुपाधिः । अश्रा-वणत्वेति । घटो मेयो द्रव्यत्वादित्यादौ गन्धवत्त्वाद्यवच्छिन्न-साध्यव्यापकपृथिवीत्वादावतिव्याप्तिर्द्रष्टव्या । नवानेन रूपेण ज्ञातस्य दूषकत्वमित्याह आर्द्रेन्धनेति । पक्षधर्म्मेति विरुद्ध-स्थलीयोपाध्यव्याप्तिरपि द्रष्टव्या । साधनावच्छिन्नेति स्वाव-च्छिन्नेत्यर्थात्साधनवतीति विशेषणाद्वा न व्यभिचारः । ननु शुद्धसाध्याव्यापकस्थल एवासिद्धिशङ्कानिरासायावच्छेदकां-शोऽपि निवेशनीयोऽखण्डाभावस्य घटकतया च न वैयर्थ्यं येन रूपेणोपाधिता विशेषणवति तद्रूपावच्छिन्न व्यभिचार-स्यैव वा हेतुत्वं शुद्धसाध्यव्यापकस्थले तु साध्यव्यापकव्यभि-चारो व्यापकतावच्छेदकार्द्रेन्धनत्वाद्यवच्छिन्नव्यभिचारो वा हेतुरूपन्यसनीयः प्रायशस्तद्धर्म्मवति तद्धर्म्मविशिष्टसाध्य-व्यापकव्यभिचारित्वस्य हेतुत्वेऽपि न वैयर्थ्यं अखण्डाभाव-स्यातिरिक्तत्वात् वस्तुतस्तूपाधिना असाधकत्वासाधनेऽपि न क्षतिः उद्भावितयावद्दोषैरेव तत्साधनीयमिति नियमाभावात् तदुन्नीतव्यभिचारेण तत्साधनसम्भवात् । सन्दिग्धोपाधिसम-शील: सन्दिग्धो व्यभिचार इत्यत आह किञ्चेति । केवलेति तथा च केवलस्यैव साध्यस्य व्यभिचारो व्यतिरेको वा जिज्ञा-सितो विरोधित्वात् न तु विशिष्टस्याविरोधित्वादिति भावः उद्भाव्यो विशेषणाव्यभिचारित्वे सति विशिष्टसाध्यव्यभिचा-रेण साधनीयः तत्र विशिष्टसाध्यव्यभिचारेऽसिद्धावुद्भावि-तायां तत्सिद्धये उपाधिरुद्भाव्य इति । तर्हीति प्रकृतानु-

मिति विरोधिग्रहमाध्यव्यभिचारा साधकत्वादिति भाव। अथ वक्ष्यमाणरीत्यावच्छिन्नसाध्याव्यापकेनाप्युपाधिना भाव्यं व साध्यव्यभिचारं साधनीय इत्यत आह किञ्चेति पच धर्मावच्छिन्ने त्यादिकमुपाधिसाध्यव्यभिचारोपसर्षक न साधा न्येनोपाधिर्व्याप्यादिविरहेणाहेतुत्वात्। पर्य्यवसितेति अत्र नद्यतानियामकं दूषकताबीज सत्प्रतिपक्षोन्नायकत्व व्यभि चारोन्नायकत्वस्य तत्त्वे साध्यवत्पचाद्यौ व्यभिचारोन्नायके ऽस्मात वक्ष्यमाणतत्कल्पोपाधेरदूषकत्वापत्तेर्य न हि तद्य भिचारेण हेतौ शुद्धसाध्यव्यभिचारः शक्योन्नयनो बाधानव तारदशायां तादृशव्यभिचारप्रसिद्धेः न च पर्य्यवसितसाध्य व्यभिचारः साध्यव्याप्यतानोधविरोधीति सर्वथमपि कथं तत्र सहेतावुपाधिसम्भवो मीमांसकमतेन तदभिधानात् शब्द शब्दयोर्भावप्रधानत्वाद्वा पचतावच्छेदकादेरुपाधितावारणाय पचादृभिन्ने सतीति विशेषणीयम्। यदि चेति एतच्च स्वतन्त्र कृतकत्वसाधनदशायां बोध्यम् अनित्यत्वसाधनोपयोगितया तु कृतकत्वसाधने द्वयोरपि सन्दिग्धत्वे नैकतरव्यतिरेकस्यान्य तरव्यतिरेकासाधकत्वात्। एवं द्रौत्यादि अममवेतत्वेन द्रव्यासमवेतत्वेन वा अर्थान्तरवारणाय सावयवत्व इति साध्ये द्रव्यपद नित्यद्रव्यवृत्तितया स्फुटतरसिद्ध्यर्थं द्रव्य समवेतेऽनित्यद्रव्यासमवेतत्वस्य नित्यद्रव्यसमवेतत्वमादाय पर्य्यवसानात् हेतौ च जन्यपदं परमाणुनित्यत्वासिद्धिदशा यामाकाशादौ व्याप्तिग्रहाय विशिष्टाभावस्यातिरिक्तत्वाभ

वैयर्थ्यं नित्यमहत्त्वव्यावृत्तानित्ययावन्महत्त्ववृत्तिजातिपरिचयाय तदिति तु न तादृशजातौ मानाभावात् वैभवापेक्षिकापकर्षव्यवहारस्याननुगतजातिभिरेव सम्भवात् तुल्यन्यायतया त्र्यसरेणुमहत्त्वापेक्षिकोत्कर्षेणैकजात्या सङ्कर प्रसङ्गाच्च । निःस्पर्शेति साध्योपाध्योर्व्याप्तिदार्ढ्यप्रदर्शनाय द्रव्यपदं गमकता तु तेन विनापि पर्य्यवसितसाध्यसमव्याप्त एवोपाधिरिति मतेनेदमित्यपि कश्चित् । ननु भवतां शुद्धसाध्यव्यापकस्पर्शवदसमवेतत्वं कथं नोपाधिः अनवस्थाभिया कस्यचिन्निरवयवस्य स्पर्शवतः सिद्धौ तत्समवेतद्रव्ये साध्याव्यापकत्वादिति चेत् तुल्यं ममापीत्यत आह किञ्चेति सोपाधौ सोपाधितया निश्चिते । ननु लभ्यत्व लाभयोग्यत्व पक्षे यादृशं साध्यं सेद्धुमर्हति तद्व्यापकत्वे सति पक्षावृत्तित्व पक्षे साध्यसिद्धिविरोधिव्यापकताशालित्वमिति यावत् स्वव्यतिरेकेण पक्षे साध्यसिद्धिविरोध्युन्नायकत्वमिति तु निर्गलितोऽर्थः । भवति च शब्दधर्मातिरिक्तधर्मरहिते शब्देऽनित्यत्वाभावसिद्धिर्यथोक्तसाध्यसिद्धिविरोधिनी तथा साधनादिमति साधनाद्यवच्छिन्नसाध्याभाव सिद्धिरपि । वस्तुतस्तु पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति पक्षावृत्तित्वमेवोपाधित्वं सिध्यति च विशेषणवति विशिष्टसाध्यव्यापकव्यतिरेकेण शुद्धसाध्यव्यतिरेकः तादृशश्च साधनव्यापकः सग्राह्यो व्यभिचारोन्नायक इव पक्षवृत्तिरितरेषाम् अपरेषां सत्प्रतिपक्षोन्नयनक्षमस्य साधनव्यापकस्यैवास्माकमपि व्यभिचारोन्नायकस्य पक्षवृत्तेरसग्राह्यो

न दोषाय परेषां साधनभेदादिवास्माकमपि पक्षभेदादुपाधि भेद इति चेदुक्तं वक्ष्यते चान्यकृतैव। सदग्रतावच्छेदकमाह व्यभिचारित्वेनेत्यादि उन्नीयत इति शेष उन्नायकत्व तयोरस्ता सा च व्याप्तिपक्षधर्मतेति तथाच व्यभिचारो यद्धर्मावच्छिन्नाभावाधिकरणीभूत यत्किञ्चिदधिकरणवृत्तित्व साध्यव्यभिचारव्याप्य साधनवृत्ति च तद्धर्मावच्छिन्न तत्रोपाधिरित्यर्थः तेनार्द्रेन्धनाभाववद्वृत्तित्वेन वह्नौ धूम व्यभिचारसाधनेऽप्यार्द्रेन्धन इत्यादिना न तत्रोपाधि तद्रूपावच्छिन्नाभाववद्वृत्तित्वस्य वह्न्यवृत्तित्वात् शुद्धसाध्य व्यापके तदभाववदवृत्तित्व साध्यव्यभिचारव्याप्यम् अव च्छिन्नसाध्यव्यापके स्वावच्छेदकाधिकरणीभूततदभावाधि करणवृत्तित्वमित्युभयत्रापि सङ्गति । द्रव्यत्वेन रूपवत्त्वेन साध्ये सत्ताद्रव्यजन्यसमानविशेष्यिका या धीस्तद्विषयत्वे जलसमवेतनित्यत्वे वा सति पृथिवीत्ववद्वृत्तित्वादित्यादिना प्रकारेण व्यभिचारोन्नयनसमर्थोऽपि पृथिवीत्वाभावादिर्नो पाधि । न हि पृथिवीत्वात्मक तदभावाधिकरण तादृशं किञ्चिदस्ति यद्वृत्तित्वसामान्य साध्यव्यभिचारव्याप्यम् पृथि वीत्वादावेव व्यभिचारात् न च व्यभिचारोन्नायकतामात्रेण प्रकृतोपाधितानिर्वाह अपि तु कथकानां तान्त्रिकाणाञ्च तथाविधव्यवहारविषयत्वेन तदवच्छेदकञ्च यथोक्तरूप व्याप्य त्वासिद्ध्युन्नायकत्वादिकं सम्भवदपि न तथा गौरवात् अत- एवेद नष्टमात्रमादित्यत्र व्याप्यत्वेन असत्याव्याप्यत्वोक्ता

यकस्यापि द्रव्यत्वादेरसंग्रहो न दोषाय अथैवं स्वव्यभिचारेण व्यभिचारोन्नायकत्वमेव तथास्तु लाघवात् तच्चोक्तोपाधाव-प्यस्तीति चेदेवं तर्हि साध्याभाव साधनोभयाधिकरण-वृत्त्यभावप्रतियोगित्वमेव तथास्त्वतिलाघवात् अस्तु च सहार्थे तृतीयाश्रयणेनास्यापि स एव फलितोऽर्थः एतद्रूप-सात्वज्ञाने तेषां नोपाधिव्यवहार इति चेत्तुल्यं त्वदुक्तेऽपि अतएव शुद्धसाध्याव्यापकस्थले साध्ये व्याप्यतावच्छेदक नियम-तस्तादृशं धर्म्ममनुसरन्ति ते यद्वति साध्यव्यभिचारनियमो भवत्युपाधिव्यभिचारस्य वस्तुतस्तु यदभावेन यद्दन्यत्वेन वा साधनवति साध्याभाव उन्नीयते स उपाधिर्लाघवात् अतएव जलत्वतेजस्त्वयोर्न तदुभयत्वेन क्वचिदप्युपाधित्वम् यद्व्यभिचा-रित्वेनेत्यस्यापि स एवार्थः तथाहि यद्व्यभिचारित्वेन हेतु-मद्वृत्तित्वविधया साधनस्य पक्षतावच्छेदकीभूतस्य साध्याभाव-रूपसाध्यवत्पक्षवृत्तित्व सिध्यतीति अत्र च साध्यसमानाधिक-रणत्वेनावच्छिन्नो धर्म्मो साध्यासमानाधिकरणार्द्रेन्धनादि व्यक्तेरार्द्रेन्धनत्वादिनोपाधित्वे पुनरवच्छेदकधर्म्म एव साध्य-समानाधिकरणवृत्तित्वेन विशेषणीयः तेन जलह्रदत्वाभावा-धिकरणायोगोलकवृत्तित्वस्य धूमव्यभिचारव्याप्यस्य वह्निवृत्ति-त्वेऽपि जलह्रदत्वादौ नातिप्रसङ्गः न वा द्रव्यत्वेन तेजस्त्व-साधने शीतस्पर्शजलत्वाद्यात्मकास्त्वाभावेन तद्वृत्तित्वेन वा द्रव्ये द्रव्यत्वे वा साध्याभावस्य व्यभिचारस्य वा साधके स्पर्शा-भावजात्यभावादौ द्रव्यत्वादिना तु कम्बुग्रीवादिमत्त्वादौ

साध्ये व्यभिचारेण साध्याभावेन वा ईर्ता वदति वा व्यभिचारस्य साध्याभावस्य वा साधकं घटत्वादि व्यभिचारि त्वनुपाधिरेव घटत्वादेस्तदभावस्य वा गमकत्वेऽपि प्रमप्राग भावयद्वैयर्थ्यं न चाभावस्यानुपाधितापत्ति प्रसिद्धोगिमत्त दृश्त्विस्यैव वा हेतुत्वादिति वाच्यम् सम्यायवेगेऽपि पक्षता पक्षादभावसाध्य तदवृत्तित्वस्य च हेतुत्वानपायात् तदभावा भावयद्वृत्तित्वेनोपस्थितावपि तद्दृशित्वेनानुपस्थितेर्व्यभिचार साधने न वैयर्थ्यमित्यपि वदन्ति । लक्षणमाह पर्य्यवसितेत्यादि । पर्य्यवसितपदार्थमाह यद्धर्मेति यद्धर्मयतोऽन्वयं । नन्वेवं सद्दैतौ सपक्षकस्गिवृत्तिधर्मेऽतिप्रसङ्ग अथ यद्धर्मा वच्छेदेन साधनवति साध्य प्रसिद्ध तद्धर्मावच्छिन्नसाध्य व्यापकत्व साध्यसाधनसम्बन्धव्यापकत्वमिति वाच्यम् विरुद्धमाचे सोपाधिविरहेऽपि न क्षति तस्यतावच्छेदके च साध्यसमा नाधिकरणस्येन साधन ताद्दृशवृत्तित्वेन वा साधनतावच्छेदक विशेषणीयम् साधनव्यापकीभूतधर्मावच्छिन्नसाध्यव्यापकत्व वा विवक्षितं विरुद्धेऽपि साधनव्यापकेनान्ततोऽन्यतरत्वादि नावच्छिन्नस्य साध्यस्य व्यापकत्वमस्त्येवोपाधीनां प्रमेयत्वादिना च वाय्वादौ सत्यत्वे साध्ये उद्भूतरूपवत्त्वादिकं नोपाधि रत्यतावच्छेदकघटकस्य प्रयोजकत्वयाचि व्यतीचावमाद व्यभिचारस्मने साधनस्य साध्यव्यभिचारित्वनियम इत्यर्थे पर्य्यवसानात् नैवम् अमकत्वेन यत्नो कार्य्यानुकूलत्वेत्याद्यात्मक- गतिसाधने बहिरिन्द्रियाग्राह्यत्वस्योपाधेर्व्यन्यत्वैव्यतेर्गोऽप्रावपि

व्यमाणत्वात् तस्य च गुरुत्वात्मकसाध्यस्य साधनस्य चाधि-
करणे घटादावहत्तेरुक्तरूपाभावात् एवंविधबहुलग्रन्थविरो-
धात् दूषकताबीजस्य तत्रापि सम्भवाच्च। अत्राहुः यद्धर्म्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्म्मावच्छिन्नसाधनाव्यापकत्वम्
अवच्छेदकत्वञ्च सामानाधिकरण्येन न च तद्घटोत्पत्ति-
कालीनत्वसामानाधिकरण्यविशिष्टरूपवति तद्घटेऽवर्त्तमानमपि
तद्घटान्यत्व तद्व्यापकं येन पृथिवीत्वेन रूपे साध्ये तद्घटोत्पत्ति-
कालावच्छिन्नरूपव्यापकतयोपाधिः स्यात् स्वानधिकरणीभूत-
साधनाधिकरणवृत्तिधर्म्मावच्छिन्नसाध्यव्यापकत्वं वा। यद्यपि
शुद्धसाध्यव्यापकस्थलेऽवच्छिन्नसाध्यत्वेन न व्याप्यता तथापि
तद्धर्म्माधिकरणीभूतसाध्याधिकरणनिष्ठान्योऽन्याभावप्रतियो-
गितानवच्छेदकत्वादिरूप तद्व्यापकत्वमक्षतमेव गुणत्वा-
दिना प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्व द्व्यणुकजन्यत्वाद्यव-
च्छिन्नसाध्यव्यापक भवत्येवोपाधिः। एवञ्च यत्रैव स्वान-
धिकरणे साधनस्य साध्यव्यभिचारो यत्र च स्वाधिकरणे
साध्यं तदुभयमात्रवृत्तिर्यो धर्म्मस्तद्वति तद्व्यभिचारेण साधने
साध्यव्यभिचारः साधनवति वा तद्धर्म्मवत्त्वे सति तदभाव-
वत्त्वेन साध्याभावः साधनीयः साध्यासमानाधिकरणस्य
साध्यव्यापकाभावस्य वाधिकरणं यत्साधनवत्तन्निष्ठप्रति-
योगितावच्छेदकावच्छिन्न-प्रतियोगि-व्यधि-करणात्यन्ताभाव
प्रतियोगितावच्छेदक-साध्यसमानाधि-करण-वृत्तिधर्म्मवत्त्वमु-
पाधित्वम् एवञ्च साध्यसमानाधिकरणत्वेनैव साध्यवद्वृत्ति-

वारणसम्भवे पर्य्यवसितसाध्यव्यापकत्वाभिधानम्‌ व्यापका भावेन व्याप्याभावस्यावश्यम्भावप्रदर्शनार्थं तत्साध्यकतत्‌ साधनकमत्कमोपाधिसाधारण्यञ्च ट साध्यव्यापकत्वसाधना- व्यापकत्वावच्छेदकरूपातिरिक्तवृत्तिसाध्यसमानाधि करण यत्किञ्चिद्व्याप्यव्यापकतावच्छेदकरूपवत्त्वमुपाधित्वम्‌ अव च्छिन्नसाध्यव्यापकोपाधौ चान्यत साध्योपाधिशून्या साधन वती या व्यक्तिस्तद्वृत्तित्वमेव तादृश रूपमित्यपि वदन्ति । रूपादिमाध्यकद्रव्यत्वादिहेतौ पृथिवीत्वाभावादेरुपाधिता पक्षे तु स्वविशिष्टसाध्यासमधिकरणीभूतसाधनाधिकरणवृत्ति धर्म्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वम्‌ अत्र च पूर्वदलप्रविष्टा या साधनव्यक्तिस्तदव्यापकत्व बोध्य तेन रूपा दिना गुरुत्वादौ साध्ये पृथिवीत्वाभावादौ नातिप्रसङ्ग विवेचयिष्यते चेदमुपरिष्टात्‌ । साध्यासमानाधिकरणधर्म्मस्य साध्यव्यापकाभावस्य वा समानाधिकरण यत्‌ साधन तद्‌ यन्निष्ठ प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिव्यधिकरणा त्यन्ताभाव प्रतियोगितावच्छेदक-साध्यसमानाधिकरण वृत्ति धर्म्मवत्त्व वा एवञ्चायमर्थः साधनवति साधने वा साध्यासमा नाधिकरणधर्म्मादिना तत्सामानाधिकरण्येन वा साध्या भावो व्यभिचारो वा प्रमयते प्रागनुमिति तु ध्येयम्‌ उपाधि शरीरभानस्य साधननिष्ठसाध्यव्यभिचारादिविषयत्वसङ्गि प्सु तायाम्‌ साध्यव्यभिचारित्वेन साध्याव्याप्यत्वेन वा साधन विशेषणीयम्‌ मिश्रास्तु यद्व्यभिचारित्वेनेत्याद्येव मयम

रूपादिव्यभिचार एव हेतुं व्यापकत्वोपन्यासस्तु तर्कप्रदर्श नायेति तत्त्व द्रव्यत्वाव्यभिचारी द्रव्यत्वाभाववदहत्तित्वम्। मित्रातनयत्वमिति अनुमानमिदमुपाधे प्रमाणान्तरेण साधनाव्यापकतानिर्णयदशायाम्। ननु तदव्यभिचारित्व तदत्यन्ताभाववदवृत्तित्व तथा च साधनविकल्पोऽयं साध्यवान् दृष्टान्त इत्यत आह अव्यभिचारश्चेति। नन्वेव विशेष्यवैयर्थ्यं धूमप्रागभाववद्वह्निभेदाद्वैयर्थ्यमिति चेत्तथापि मित्रातनयत्वव्यापकत्वविशेषितं हत्तिमत्त्वमेव गमकमिति चेन्न यत्किञ्चित्तदधिकरणनिष्ठात्यन्ताभावाप्रतियोगित्वस्य फलतः सामानाधिकरण्यपर्य्यवसितस्यौकृत्वात् तथाचायमर्थः मित्रातनयत्वाधिकरणयत्ति निष्ठात्यन्ताभावाप्रतियोगित्व तच्च शाकपाकजत्वव्यभिचारित्वात् मित्रातनये शाकपाकजव्यभिचारित्वादिति यावत् तेन श्यामत्वादौ न व्यभिचार। अव्यभिचारश्चेति तथाच बहुव्रीहि यद्धर्माव्यभिचारित्वे सति तद्धर्मावच्छिन्नधर्माव्यापकव्यभिचारि तत्तत्साध्यव्यभिचारीति सामान्यव्याप्तेरघटत्व दृष्टान्त इत्यथाह। मेयत्वादावपि विशेषणवति विशिष्टसाध्यव्यापकोपाधिव्यभिचारेण शुद्धसाध्यव्यभिचार साधनीयः। एव विशिष्टसाध्यव्यापकस्यापि साक्षात्शुद्धसाध्यव्यभिचारोन्नायकतयोपाधित्व समर्थसाक्षात्परम्परासाधारणतदुन्नायकतामात्रेण तथात्व व्यव स्थापयति यद्देत्यादिना। अत्र पूर्ववद्विरुद्धवारणाय

साध्यसमानाधिकरणेति बोध्यं व्यभिचारोन्नायकत्वञ्च यत्र क्वचित् एवञ्च पृथिवीत्वादिना गुरुत्वादौ साध्ये द्रव्यत्वादौ व्यभिचारोन्नायकस्य रूपवत्त्वादेर्वारणाय साधनव्यभिचारीति बहुव्रीहिः। नचैवमपि गुरुत्वादिसाध्यके रसवत्त्वादिहेतौ द्रव्यत्व गुरुत्वादिव्यभिचारि जलभिन्ने पृथिवीत्वादिव्यभिचारित्वादिति व्यभिचारोन्नायके पृथिवीत्वादावतिप्रसङ्ग. साधननिष्ठं यद्व्यभिचारित्वं साध्यव्यभिचारोन्नायक तत्त्वस्योक्तत्वात् उक्तिवैचित्र्याच्च पूर्वस्माद्भेदः। केचित्तु व्यभिचारोन्नायकत्वमिह तद्व्याप्यकोटिप्रविष्टतामात्रेण द्रव्यञ्च जलत्वेन करकात्वे साध्ये जलत्व करकात्वव्यभिचारि स्नेहव्यापकत्वात् घटेन वा घटत्वे साध्ये घटो घटत्वव्यभिचारी जन्यद्रव्यत्वादिति व्यभिचारोन्नयनसमर्थस्य स्नेहस्य द्रव्यत्वस्य च वारणाय साधनव्यभिचारीति अयं घटः सत्त्वादित्यादौ सत्त्वं घटत्वव्यभिचारि शब्दादिवृत्तित्वादिति व्यभिचारोन्नायकस्य शब्दादेर्वारणाय साध्यसमानाधिकरणेत्यपि वक्तव्यम् एवञ्च रूपेण गुरुत्वादौ साध्ये रूपं गुरुत्वादि व्यभिचारि जलभिन्ने पृथिवीत्वाभाववद्वृत्तित्वादिति व्यभिचारोन्नायकस्य गुरुत्वव्यभिचारितैजसरूपनिष्ठव्यभिचाराप्रतियोगिनः पृथिवीत्वाभावस्य वारणाय यत्राधिकरणे साधनाव्यापकत्वं तत्र व्यभिचारोन्नायकत्वं वक्तव्यं यथा कथञ्चित्त्वव्यभिचारेण व्यभिचारोन्नायकमात्रस्य तु लक्ष्यत्वे यत्साधनव्यक्तयव्यापकत्वं तद्व्यक्तौ व्यभिचारोन्नायकं वाच्यमित्याहुः।

नन्वस्तु पारिभाषिकसूत्राधिक्य तथापि साधाद्यभिचारानुद्भा-
वकतया दोषत्वाभावेन तदुद्भावने नार्थान्तरं स्यादेवेत्यत
आह किञ्चेति अभासान्तरस्य तदानीं ज्ञायमानस्य तथाच
तस्यावश्यमनुपेयदोषभावत्वे तदुद्भावने नार्थान्तरमिति
भाव । अत्र यदस्ति साध्योपन्यासानन्तरं तत्साधकस्येव
साधनोपन्यासानन्तरं तद्दोषस्य व्यभिचारादेराकाङ्क्षितत्वा-
तमनुद्भाव्य साधात्तत्साधकस्य शुद्धसाध्यव्यापकस्योपाधेरर ।
वन एवाप्राप्तकालत्व कैव कथा परम्परया तत्साधकस्याव
च्छिन्नसाध्यव्यापकस्य अन्यथा तत्साधकपरम्पराया अपि प्र
थममुपन्यासे तथात्व न स्यात् न च नियमस्थानत्वेन विशेष
प्रतिज्ञाहान्यादितो हेत्वाभासाच बहिर्भूतस्य तथात्वायो-
गात् न च विभाजकसूत्रस्थले हेत्वाभासाश्चेति चकारेणानु
क्तसमुच्चयपरेण साक्षात्परम्परया वानुमिति दोषाभावकस्य
संग्रह तया सति व्यभिचारस्येवाश्रयासिद्ध्यादेरप्युद्भावकस्य
तदुभयोद्भावकपरम्परायाश्च तथात्वापातात् नचाप्राप्तकाल
त्वाभावादयवापि प्रथममुपाध्युपन्यास कथकसम्प्रदायानु-
रोधादेव कार्यः तादृशसम्प्रदायमननुसरतस्तस्य तदुद्भावक
पराभवत ज्ञपथनियारणीयतापत्ते तस्मात्प्रथम शुद्धसाध्य
व्यभिचार एवोद्भाव्यस्तत्र कथन्तायां तद्धेतुत्वेन शुद्धसाध्य
व्यापकोपाधिव्यभिचार विशेषणाव्यभिचारित्वे सति विशिष्ट
साध्यव्यापकस्योपाधेर्विशिष्टसाध्यस्य वा व्यभिचार तत्र
च विशेष्ये विशिष्टसाध्यव्यापकोपाधिव्यभिचार इति यद्यपि

च व्यभिचारादेरिव तद्व्याप्यवत्त्वादेरपि ज्ञानं व्याप्त्यादिग्रहप्रतिबन्धकं तथाच साध्यव्यभिचारव्याप्योपाधिव्यभिचारवानयमिति वोद्भावनीयमिति साध्यव्यापकत्वानिश्चयात् उपाधित्वौपयिकतदनिश्चयात् अनुकूलतर्कादिना तादृशव्यापकत्वनिश्चये तु बाधोन्नीतवद्भवत्येव निश्चितोपाधिः। न च स्वव्याघातकत्वोन्नायकमुपाधिः तद्धि न सर्व्वानुमानसाधारण्यं अनुकूलतर्कादिनिश्चितव्याप्तिके हेतौ तदभावात् नापि तद्व्यभिचारेण व्यभिचारानुमानेऽपि पक्षेतरान्तरस्योपाधित्वसम्भवः अनुकूलतर्कादिना तस्य साध्यव्यापकत्वनिश्चये व्यापकव्यभिचारिणि व्याप्यव्यभिचारावश्यम्भावेन तदयोगात् अतएव पक्षेतरस्योपाधित्वे सर्व्वत्रैव तादृशोपाधिसम्भवेनानुमानमात्रविलोपे व्यभिचारानुमापकत्वगर्भस्योपाधित्वस्याव्याघात इति परास्तम् कथकसम्प्रदायानुरोधात् बाधानुन्नीतः पक्षेतरोनोपाधित्वेन कथायामुद्भाव्य इति तु वदन्ति।

पक्षमात्रेति। यद्यपि पर्वतावयवरूपादेरपि व्यावर्त्तकत्वतयापि तस्य व्यावृत्तिर्नोपाधितायामुपयुज्यते अपि तु पक्षस्यैवेति तन्मात्रव्यावर्त्तकत्वमुक्तम् इदञ्चानुपाधितायां न वीजं परिभाषामात्रत्वात् किन्त्वनुकूलतर्काभावेन तादृशसाध्यव्यापकत्वानिश्चय इति द्रष्टव्यम् अतएव व्यापकताग्राहकप्रमाणसम्भवादेव। आर्द्रेन्धनेति। अथात्र स्वतन्त्रान्वयव्यतिरेकाभ्यामार्द्रेन्धनत्वादिनैव कारणत्वं न पुनरार्द्रेन्धनप्रभववह्नित्वेनेति चेत्किञ्चातः न हि कारणतावच्छेद-

कमेव व्यापकतावच्छेदकं तादृशाभावप्रतियोगितानवच्छेद
कत्वेव तस्मात् तदवच्छिन्नप्रतियोगिताकाभावस्य चातिरि-
क्ततया तद्वृत्तित्वेन साध्यव्यभिचारसाधने वैयर्थ्याभावात्
सत्यपि चार्द्रेन्धने तत्तृणे च वह्नौ दाहप्रतिबन्धकसत्त्वे
धूमानुत्पादात् तत्तत्कारणाभावस्य वह्निविशेषरूपेण कार-
णत्वकल्पनयैवोपपत्तावक्लृप्ततत्कारणभावानां दाहप्रतिबन्धक-
भावानां तत्कारणत्वकल्पनानौचित्यात् एकस्यामार्द्रेन्धनव्यक्तौ
प्रतिबद्धायां तस्यैव व्यक्त्यन्तराद्धूमोत्पादकत्वादिन्धनान्तरधूम
प्रति तत्तदभावानां कारणत्वस्य चाशक्यत्वेऽतिगौरवाच्च
सत्यपि चार्द्रेन्धने तत्समये चाणीयसि वह्नौ सत्यपि तत्र
कारे विद्यमानेऽप्यार्द्रेन्धनप्रभवमहावह्नेरनुत्पाददशायां प्रकृ
ष्टधूमानुत्पादादार्द्रेन्धनप्रभववह्नित्वेन कारणत्वमित्यपि व
दन्ति । तदुक्तरूपेणेति आर्द्रेन्धनप्रभववह्निसामान्य विना
धूमसामान्यस्य प्रकृष्टतादृशवह्निं विना प्रकृष्टधूमस्यानुत्पाद
नियमादार्द्रेन्धनप्रभववह्नेरेव धूमोपधायकत्वं तदार्द्रेन्धनप्र
भववह्नित्व कारणतावच्छेदकमर्थवशसम्पन्न नान्तरीयकमेव
वास्तु फलतो न कश्चिद्विशेष इति भावः । अनन्वयेति
तादृशान्वयव्यतिरेकाभ्यामुक्तरूपस्य महतो द्रव्यस्यैव वा
कारणत्वम् उभयथापि व्यापकत्वमुक्तरूपत्वेन तस्य पुनरुप
वर्णितमेव । घटोत्पत्तेनेति ध्वंसप्रागभावयोरधिकरणकालस्य
प्रतियोग्यधिकरणत्वनियमात् न च प्रागभावस्य ध्वंसप्रति
योगिध्वंस एव तत्र सोऽपि प्रतियोगिनो ध्वंस इति वाच्यम्

अप्रामाणिकध्वंसतत्कारणधाराकल्पनातो ध्वंसानन्तत्व-कल्पनाया एवोचितत्वादिति भावः। कार्य्यकारणयोरेव कार्य्यकारणभावग्राहकप्रमाणक्रोडीकृतयोरेव। पक्षेतरस्ये-त्यादि ननु सन्दिग्धोपाध्यन्तरवत्पक्षेतरोऽपि व्यभिचारशङ्का-माद्धानः केन वारणीयः स्वव्याघातकत्वञ्च निराकृतमेव अथात्र कश्चिदुपाधिर्भविष्यतीति शङ्का शङ्कापिशाचीत्वात् यथा न व्यभिचारशङ्काधायिका तथा पक्षेतरस्योपाधित्वश-ङ्कापि तदाहितापि व्यभिचारशङ्का पक्षे व्यभिचारशङ्केव न प्रतिबन्धिका अन्यथा निरुपाधिकसहचारभङ्गप्रसङ्गमात्रबल-प्रवृत्तानामनुमानानां विलयप्रसङ्गादिति चेन्न सन्दिग्धो-पाध्यन्तरसाधारणव्यभिचारशङ्काधानप्रयोजकरूपवता पक्षेत-रेण तदाधाने प्रयोजनक्षतेः प्रतिबन्धकत्वासम्भवात् व्यभि-चारज्ञानत्वेन च प्रतिबन्धकतायां कारणविशेषजन्यत्वाजन्य-त्वादिकं न निविशते गौरवात् मानाभावाच्च कथमन्यथा करवह्निसंयोगः सर्वः संयोगो वा प्रत्यक्षसंयोगधर्म्मातिरि-क्तधर्म्मसमवायी समवायित्वादित्यादितो न शक्त्यादिसिद्धिः निरुपाधित्वेऽपि अप्रयोजकत्वादिति चेन्न निरुपाधित्वस्यैव प्रयोजकत्वात् तथात्वेऽपि चाप्रयोजकत्वे निरुपाधित्वाभि-मतानामितरेषामपि तथात्वात् अत्र च कुत्र पक्षातिरिक्ते व्यभिचारशङ्का कस्यायं व्यामोहो यद्व्याप्तिग्राहकदृढतर-प्रमाणविरहिणां निरुपाधित्वमिति यतस्तत्र तत्रान्ततः पक्षसपक्षैकदेशवृत्तिधर्म्मावच्छिन्नसाध्यव्यापकानां सपक्षैक-

देयहत्तिधर्माणामुपाधित्व मभ्यास्ते इत्यत्र यथा नास्ति प्रसङ्गस्तथा तत तत वक्ष्याम इति भावम् कथकसम्प्रदाया नुरोधात् कथायां सन्दिग्धोपाधित्वेन पक्षेतरोनोग्राह्य इत्येवपरो ग्रन्थ इत्याह । सोपाधावित्यादि उपलक्षण मेतत् व्यभिचारिणुपाधित्वग्रभावमात्रे तात्पर्यम् उप जीव्योपजीवकभावो हि न कार्य्यकारणभावोऽसम्भवात् व्याप्यव्यापकभावसदकिञ्चित्कर एव विनिगमनाविरहेण दूषकतायाम् एकमपिज्ञायाप्यपरज्ञानात्र न ग्राह्यग्राहक भाव । न चानुकूलतर्कविरहादेव व्याप्तेरग्रहे उतमुपा धिग्रहेण विनाप्यनुकूलतर्क व्यभिचारग्रहे व्याप्तिग्रह-सम्भवादिति भाव । यद्यारहत्येति यत्र यत्र इति पूरणात् पक्षमिष्ठसाध्यव्यापकव्यापकाश्यापकस्याहत्तिप्रतियोगित्वमर्थ नत्र तिपक्षेऽश्रायकत्वधात दूषकतायोज तत्र चाप्रयोजकत्वात् साधनाव्यापकत्व नोक्त साधनस्य सोपाधित्वमुत्पादनायेव केवल यस्य साधनस्येति यदा साधनमित्यनन्तरमधिकरण इति पूरणात् साधनवन्निष्ठसाध्यव्यापकव्यापकस्याहत्ति प्रतियोगित्वमय तथा च यद्यभिचारित्वेमित्यादिरूपवर्णितार्थ निष्कर्ष एवायं शुद्धस्य साधनावच्छिन्नस्य च साध्यस्य व्यापकानामुपाधीनां पक्षे क्वचित् साधनवति वा साध्याभाव स्यैकसमुच्चयप्रकारमाह सर्वेत्यादि साधनवत्त्वेन ज्ञायमाने पक्षे साध्यसाधनसम्बन्धाभाव सिध्यन् पक्षधर्मतापन्नात्साध्या भावमादायैव पर्य्यवस्यति। ननु शुद्धसाध्याभावोऽज्ञायक

स्यार्द्रेन्धनवत्त्वादेः कथं साध्यसाधनसम्बन्धाभावोन्नायकत्वमत आह आर्द्रेन्धनेति अतएवेति साध्याभावसत्त्वे साध्यसाधनसम्बन्धाभावस्यावश्यकत्वात्तदुन्नायकत्वमक्षतमिति भावः। द्रव्यत्वे इति द्रव्यत्वस्य हेतुत्वाभिप्रायेण अयञ्च प्रायशः सम्भवतीत्यभिहितो वस्तुतः प्रकारभेदेऽपि न क्षतिः तथाच शुद्धसाध्यव्यापकोपाधिस्थले शुद्धसाध्याभावः अवच्छिन्न तद्व्यापकस्थले त्ववच्छेदकवत्यवच्छिन्नसाध्याभावोऽवच्छेदकवत्त्वविशेषितेन चोपाधिविरहेण शुद्धसाध्याभावः साधनीयः अतएव गगनादौ स्पर्शवत्त्वेन प्रमेयत्वेन च प्रत्यक्षत्वे साध्ये वह्निर्द्रव्यत्वावच्छिन्नसाध्यव्यापकस्योद्भूतरूपस्य तादृशसाध्याभावोन्नयनहेतुत्वमिति। पक्षे यद्व्यावृत्त्या यस्य साधनस्य सम्बन्धि यत्साधनविशिष्टं साध्यं निवर्त्तते इत्यर्थस्तु यथाश्रुतग्रन्थस्वरससिद्धः तत्र दूषकताबीजं यदि सत्प्रतिपक्षोन्नायकत्वं तदा साधनानुप्रवेशो व्यर्थः जलं द्रव्यं गन्धवत्त्वादित्यादौ पृथिवीत्वादावतिव्याप्तिश्च अथासिद्ध्युन्नायकत्वं तदा साध्यानुप्रवेशो निरर्थकः जलं गन्धवत् द्रव्यत्वादित्यादौ पृथिवीत्वादावति प्रसङ्गश्च अथ यथासम्भवमसिद्धेः सत्प्रतिपक्षस्य चोन्नायकत्वं तदा वायुः स्नेहवान् गन्धवत्त्वादित्यादौ जलत्वपृथिवीत्वादावव्याप्तिः साधनविशिष्टसाध्याप्रसिद्धेः साध्यसाधनवत्त्वप्रकारकबोधविरोधिबुद्धिकाभावोन्नायकत्वमर्थः विरुद्धे चैकैकाभावबुद्धिरुभयवत्ताबोधम् विरुद्धस्थले तु भ्रमादिरूपतयाविधबोधप्रसिद्ध्या समन्वय इत्यपि वदन्ति यत्तु

सत्त्वनियमात् न द्वितीयः घटो जातिमान् मेयत्वादित्यादं समवायित्वादाव्याप्तेः वह्निमत्पर्वतपक्षके पर्वतो वह्निमान् धूमादित्यत्र धूमावयवे वह्निव्यावर्त्तके वह्निसामग्र्यादावति व्याप्तेश्च अतएव नेतरां ऽपीत्यादि स्वयमूहनीयमिति हर पक्षवितेन। आपाद्याप्रसिद्धेः आपाद्यस्य वह्निव्यापकत्वे सति धूमाव्यापकत्वस्याप्रसिद्धेः। अनुमितीति अस्मदुक्त व्यभिचारोन्नायकत्वं तदुन्नयनस्वरूपयोग्यत्वं तथाप्तिपक्ष धर्म्मतारूपं पर्य्यवसितसाध्यव्यापकत्वादिकस्यानुमितिप्रति बन्धकज्ञानविषयतावच्छेदकमेवेति भावः। ननु सामान्य लक्षणमितरव्यावर्त्त्यौपयिक विशेषलक्षणन्तु दूषकतायासुप युज्यत इत्यत आह विशेषेति यथाश्रुतेऽवच्छिन्नसाध्यव्याप कोपाध्यव्याप्त्या यत्किञ्चिद्धर्म्मावच्छिन्नसाध्यव्यापकत्वमेव व क्तव्यं तथाच वह्निना धूमस्य धूमेन वह्नेर्वा साधने पक्षेतरस्य तद्रूपज्ञानादनुमितिप्रतिबन्धापत्तिरित्यर्थः व्यवहारौपयिकत्वे च तत्रोपाधिव्यवहारापत्तिः पर्य्यवसितेऽत्याद्यभिधाने चास्म- न्नयप्रवेश इति भाव' व्यवहारौपयिकं स्वव्यभिचारेण साध्य- व्यभिचारोन्नायकत्व लक्षणन्तु तत्तत्साध्यसमानाधिकरणत्वे सति तत्तत्साधनाव्यापकत्वं साध्यसाधनभेदाद्भिन्नमेव वस्तुतो व्यभिचारिणः साधनस्यैवानुप्रवेशाच्च नातिप्रसङ्ग न च रूपेण गुरुत्वे साध्ये पृथिवीत्वाभावादेरुपाधितापत्तिः गुरुत्वव्यभि- चारि रूपव्यक्तेस्तद्व्याप्यत्वात् तदव्याप्यरूपव्यक्तेश्च गुरुत्वाव्यभि- चारादिति दूषणतौपयिकन्तु यथासम्भवमननुगतमेवेति मत-

मिद परे परिष्कुर्वन्ति तत्र साधीय मया हि साध्यसाधन व्यक्तिस्वरूपगर्भं सोपाधित्वमपि तु साध्यतावच्छेदकसाधन तावच्छेदकधर्मगर्भं तत्तद्रूपत्वेन सकलगुणव्यक्तिषु सोपाधेरपि द्रव्यत्वस्य गुणत्वेन सकलगुणेष्वेव निरुपाधित्वात् गुणत्वेन गुणे साध्ये सत्तात्वेन रूपेण सोपाधेरपि सत्ताया गुणकर्मान्यत्वविशिष्टसत्तात्वेन निरुपाधित्वात् तथाच तद्रूपावच्छिन्ने साध्ये तद्रूपावच्छिन्ने साधने च फलमुपाधित्वञ्च तद्रूपावच्छिन्नसाध्यसमानाधिकरणत्वे सति तद्रूपावच्छिन्नसाधनाव्यापकत्वमनुगतं लक्षणं वाच्य नतु तद्रूपावच्छिन्नसत्त्वसाधनव्यक्त्यव्यापकत्वमनुगमात् तथाच गुरुत्वत्वावच्छिन्नसमानाधिकरणस्य रूपत्वावच्छिन्नाव्यापकस्य पृथिवीत्वाभावादेरुपाधित्वं दुर्व्वारं व्यभिचारित्वेन साधन विशेषणमापद्गितमेवेति सङ्क्षेपः । उपाधिलक्षणे साधनाव्यापकत्वं न विशेषणं दूषकतायामनुपयोगात् अव्याप्तिकरत्वाच्चेति । सत्प्रतिपक्षोन्नायकत्वेनोपाधेर्दूषकतावादिनामभिप्रायं प्रकाशयति । केचित्त्विति साध्यतावच्छेदकावच्छिन्न साध्यस्य सोपाधि परं सदुन्नाय्य साध्याविशिष्टत्वात् पक्षे साधनस्य निश्चयेऽनुमानस्य वैयर्थ्यात् अनिश्चये च तस्यायोगात् । सन्दिग्धोपाधित्वेनापि न तदुन्नायकमित्याह अनुमितीति हेतौ साध्यव्यभिचार सन्दिग्धश्चेत् ज्ञात स न्दिग्धोपाधिना असन्दिग्धस्तत्कथ तस्य सन्दिग्धोपाधित्व मिति तु तत्त्वम् । हेतुव्यभिचारेति व्याप्यस्यापि व्यापक-

मशयहेतुत्वादितिभावः न च तत्र मानाभावः कोटिस्मरणादित एव तदुपपत्तेः क्वचित्तदनुविधानस्यापि व्याप्यतदभावयोर्व्यापकतदभावसाहचर्य्यस्य गृहीतत्वेन तत्स्मरणएवोपक्षीणत्वात् तदग्रहे तु तत्संशयाद्व्यापकसंशयस्याप्यभावादिति वाच्यं महानसे हुताशनो न जलह्रदे इति स्मरतां पर्वतादिकमपि पश्यतां धूमादिसंशयभावाभावाभ्यां हुताशनसंशयभावाभावदर्शनात्तस्यापि तद्धेतुत्वात् अतएवोत्कटकोटिकाद्व्याप्यस्य संशयाद्व्यापकस्याप्युत्कटकोटिकः संशयः कारणोत्कर्षेणैव कार्य्योत्कर्षात् समानेत्यादि सूत्रन्तूपलक्षणपरं तत्रस्थचकारो वा अनुक्तसमुच्चयार्थ इति वदन्ति। कोटिद्वयसहचरितधर्म्मवत्तया धर्मिज्ञानं हेतुः धर्म्मस्य चैकत्वं ज्ञानस्य च निश्चयत्वं नोपयुज्यते गौरवात् अवगाहते च लिङ्गसन्देहो लैङ्गिकतदभावसहचरितौ लिङ्गतदभावौ धर्मिणि तथा च साधारणधर्म एव तस्यान्तर्भाव इति तु नव्याः लिङ्गतदभावयोः प्रत्येकमेकैककोटिसाधारण्येऽपि मिलितयोरसाधारणत्वं सत्प्रतिपक्षस्थले विरुद्धयोरिव हेत्वोरिति तु टीकाकारानुयायिनः। इत्यञ्च साधनाव्यापकत्वसन्देहे साध्यव्यापकव्यभिचारसन्देहात् साध्यव्यभिचारसन्देहो हेतौ स्फुट एव साध्यव्यापकत्वसन्देहे तु साधनाव्यापकव्याप्यत्वसन्देहात्साध्ये साधनाव्यापकत्वसन्देहो बोध्यः। उपाधेः साध्यव्यापकत्वसन्देहेनाहितात्साधने साध्यव्यापकव्यभिचारसन्देहात्साध्यव्यभिचारसन्देहः इत्यमेव च दल-

इये संशयस्थले व्यभिचारसंशयस्यौत्सिकत्वात् इत्यपि वदन्ति । उभयेति एकांशेऽपरस्य एकविशिष्टापरसाध्यतायान्तु एकैकस्यौपाधिकत्वमिति तु तत्त्वम् । ईश्वरेति वस्तुतः सर्वेतायपि तत्त्वायहदशायामुपाधिसन्देहेन व्यभिचारसन्देह इति भावः । सन्दिग्धेति न चानैकान्तिकत्वसन्देहः प्रतिबन्धको नतु तज्ज्ञानमिति तदर्थं तदुद्भावनमफलमिति वाच्यम् अनैकान्तिकत्वमग्रयात् मम व्याप्तिग्रहो मा भूदित्यभिप्रायेण प्रार्था हेतुदोषत्वेनासाधकतासाधकतया जिज्ञासादिद्वारा परम्परया सन्देहोपयोगित्वेन च तदुद्भावनस्य साम्प्रदायिकत्वात् ।

उपाधित्वस्य संशये निश्चये च जायमान यज्ज्ञानमनुमिति विरुणद्धि तदेवास्य दूषकताबीजमित्यभिप्रायेणाह सन्दिग्धेति तद्व्यतिरेकस्य कस्यचिद्व्याप्यत्वेन कस्यचित् पक्षधर्मत्वेन सन्दिग्धत्वात् बाधोन्नीतेति ननु बाधेऽवतीर्णे सतएव हेतोरसाधकत्वात् कृतमुपाधिना न चासाधारण्य पक्षस्यैव सपक्षत्वात् अनवतीर्णे तु नोपाधित्व पक्षेतरान्तरवत् साध्यव्यापकताया एवाग्रहात् अनुकूलतर्कादिना कथञ्चित्तद्ग्रहे च नासाधारण्य व्यतिरेकितयान्वयव्याप्यपक्षस्य सत्प्रतिपक्षरूपतया च सत्प्रतिपक्षान्तरस्याकिञ्चित्करत्वादित्यरुचेराह पक्षतरेति पक्षे तद्ग्रहदशायां तदभावग्रहासम्भवादिति भावः । व्याप्ति विरहरूपतां निरस्य व्याप्तिज्ञानाभावद्वारकतां निरस्यति नापीति अनौपाधिकत्वज्ञानस्य औपाधिकत्वप्रागभावस्य

कारणविघटकतया कारणाभावरूपतादृशज्ञानविषयतया अनौपाधिकत्वज्ञानस्य कारणत्वं नान्वयव्यतिरेकसिद्धम् परन्तु सोपाधित्वज्ञानस्य प्रतिबन्धकताया विना कारणीभूतज्ञानविघटनमसम्भवित्वेन कल्पनीयं सैव त्वसिद्धेति दूषणतात्पर्य्याद्यथाश्रुतमेव साधीय इत्यपि वदन्ति। व्याप्यत्वासिद्धेर्व्याप्यत्वाज्ञानेऽन्तर्भावस्तद्द्वारा दूषकत्वं भिन्नधर्म्मिकत्वं परिहरन्नाह न चेति। नहीति विरोधिविषयकत्वाभावेन साक्षात्प्रतिबन्धकत्वासम्भवादिति भावः। साध्यव्याप्यव्यभिचारित्वेन साध्यव्यभिचारित्वमित्युभयत्रैव बहुव्रीहिः तस्मादित्यादेरदूषणं वेति शेषः दूषकताबीजचिन्तनमिति निश्चयदशामधिकृत्य यन्निश्चयद्वारोपाधित्वनिश्चयस्य दूषकत्व तत्संशयद्वारा तत्संशयस्यापि तथात्वमिति भावः। व्यभिचारज्ञानद्वारेति मानसे व्यभिचारनिश्चये उपाधिज्ञान विशेषदर्शनरूपत्वेनोपयुज्यते व्यभिचारानुमानं पुनरग्रे वक्ष्यति। व्याप्तीति साध्यसम्बन्धितावच्छेदकरूपविरहः साधनतावच्छेदके साध्यसम्बन्धितानवच्छेदकरूपत्वपर्य्यवसन्नः साध्यवदन्यावृत्तित्वविशिष्टसाध्यवद्वृत्तित्वविरहो वोन्नेयः नतु स्वसमानाधिकरणात्यन्ताभावप्रतियोगिसाध्यकत्वं स्वत्वस्याननुगतस्याभावेन तत्तत्साधनत्वपर्य्यवसाने साध्यप्रसिद्धिमात्रेणैव कृतार्थत्वात् साध्यव्यापकोपाधिव्यभिचारित्वेन हेतौ साध्यव्यभिचारित्वं साधनाव्यापकोपाधिव्याप्यत्वेन साध्ये साधनाव्यापकत्वमनुमेयमिति तु नव्याः। व्यति-

रेकिणि साधने व्याप्तिविरहस्य व्यभिचारस्य चोन्नयने उपाधि
साधनाभाववद्वृत्तित्व व्यभिचारास्फुटतादशायामुपाध्यनुसन्
धानताधिकरणे हेतौ साध्यव्यभिचारित्व तदीयधर्मे नास
साध्याव्यापकत्वपर । उपाधिमात्रे ति तेनापि व्यभिचारा
नुमाने तथापि तथाविधोपाधिमन्वयादिति भाव वस्तुतस्तु
व्यापकव्यभिचारिणो व्याप्यव्यभिचारित्वे व्याप्यव्यापकभाव-
व्याघातापत्त्या हेतौ साध्याव्याप्यत्वेन साधनाभाववद्वृत्तित्वस्य
साध्याव्यापकत्वाच्चोपाधित्वमिति तत्त्वम् । पक्षेतीति व्याप्य-
त्वाभावसाधनाभिप्रायेण साधनाव्याप्यत्वस्योपाधित्वे च नैव
दोष । साधनेति यथाश्रुताभिप्रायेण प्रतियोगिव्यधिकर
णसाधनाभाववद्वृत्तित्वस्य साधनवदन्यवृत्तित्वस्य चोक्तौ तथा
त्वासम्भवात् एवञ्च सत्प्रतिपक्षे निश्चितोपाधिवत्सन्दिग्धोपाधि
रुद्भाव्य । न च तत्कृतस्य व्यभिचारसन्देहस्य प्रतिहेतु-
समाजादेव सिद्धे किं तेनेति वाच्य परस्परप्रतिबन्धेनैवानु-
मित्यनुत्पादे तत्र व्यभिचारसन्देहस्यावश्यमुत्पत्तौ माना
भावात् उपाधिसन्देहादिनिर्णीतव्यभिचारसन्देहेन तुल्य
बलत्वाभावात् न चातुल्यबलेन सत्प्रतिपक्षो व्यभिचारादि-
ग्रहाधान वा स्वरसत इति सन्दिग्धव्यभिचारादिमापि तथात्व
प्रसङ्गादिति । अत्र च कश्चिदुपाधेस्तुल्यबलत्वे सत्प्रतिपक्षो
न्नायकतया तर्कादिवाचित्वाद्धिकबलत्वे च बाधोन्नायकत
यापि दूषकत्वं व्याप्त्यादिप्रतिसन्धाने तदुन्नयनस्य ततोऽनु
मिति प्रतिरोधस्य च दुर्वारत्वात् परन्तु सार्वत्रिकत्व न

तस्येति ध्येयम् । असाधारणविपर्य्यय इति इदं सत्प्रति-पक्षोन्नायकत्वमभिप्रेत्य । यद्यपि व्यतिरेकिणा सत्प्रतिपक्षत्वे सत्प्रतिपक्षे सत्प्रतिपक्षान्तरस्यादोषत्वान्नासाधारण्यं दोषाय तथापि सत्प्रतिपक्षोन्नयनौपयिकसाध्यव्यापकत्व-ग्राहकप्रमाणाभावे तात्पर्य्यम् । तदत्र निष्कर्षः यत्र यद्दोषो-न्नायकतया दूषणत्वमुपाधेस्तत्र तदुन्नायनौपयिकरूपवैकल्य-न्नाभावत्वे प्रयोजकम् एवञ्च यत्र स्थापनायां पक्षताव-च्छेदकसामानाधिकरण्येन साध्यसिद्धिरुद्देश्या तत्र पक्षा व्यापकविपर्य्ययस्याभासत्वं तद्विरहेण पक्षैकदेशे सत्प्रति पक्षेऽप्येकदेशान्तरे साध्यसिद्धेरप्रत्यूहत्वात् यत्र तु पक्षताव-च्छेदकावच्छेदेन तथा तत्र तादृशस्योपाधित्वमेव एकदेशे

व्यतिरेकस्य प्रतिहेतावुपाधित्वेनोद्भावने सत्प्रतिपक्षभावस्य केवलेन सर्वत्रैव सम्भवात् आभासत्वेऽपि व्यापनाया विशेषाग्रहदशायामेव सत्प्रतिपक्षोपन्यासात् वस्तुतः साध्या व्यापकस्यापि पूर्वसाधनव्यतिरेकस्य तदानीं तत्त्वेनाग्रहा दुपन्यासासम्भवात् अतो बलवत्तरानुकूलतर्कं विना पूर्व साधनव्यतिरेको नोपाधित्वेनोद्भाव्य इति कथकसमयमाधा टेवासावुपाधित्वेन नोपन्यस्यत इति। यथाकृतकत्वेति कादाचित्कत्वेन सकर्तृकत्वस्थापनायामजन्यत्वे प्रतिहेता वित्यर्थः ।

अनुमिति अपक्षैककार्य्यानुकूलतासङ्गत्या पक्षधर्मतां निरूपयितुमाह व्याप्तीति। म.न्देहेति। यत्र साध्यस्य यादृशसम्बन्धावगाहिनिश्चयनिवर्त्त्यो यः संशयस्तत्र स तादृशसम्बन्धेन साध्यानुमितौ पक्षतेत्यर्थः तेन न पक्षसाध्य विशेष्यकसंशयाननुगमो न वा सम्बन्धान्तरेण सन्देहेऽपि निर्णीतसम्बन्धेन पक्षत्वम् न वा तमःप्रभृतिषु समवायेनाका शादिसाधने तद्वैकल्पम्। अननुयोगितां निरस्यति नापीति साधकबाधकमाने सिषाधयिषा केवलान्वयिनि च पक्षनिष्ठाभावप्रतियोगित्वधौरेव दुर्लभोऽबाध । ननु तथापि पुनरनुमित्सा तत पराभर्शान्तर स्मरणात्मकाद्वा परामर्शा दनुमोतिष्टसाधनताविषयकादनुमित्सा ततोऽनुमितिरिति फलबलात्कल्पनीयमित्यत आह सिषाधयिषेति नचानुमिति जनिकेच्छैव पक्षता सा च क्वचित्सुनिष्ठैव सर्वत्रेश्वरनिष्ठैव

सुलभेति वाच्यं तस्यानित्यत्वेन सिद्धौ सत्यामपि पक्षता प्रसङ्गात् न च तस्यास्तदानीं न तज्जनकत्वं तद्धि न तद्योग्यता अनपायात् न च तदुपधानम् अनुमितेः पूर्वं तदभावात् न च तत्सामग्रीसमवधानं कारणमात्रस्य पक्षताकुक्षिनिक्षेपप्रसङ्गाच्छेषवैयर्थ्यात् तदानीं सामग्रीविरहप्रयोजकव्यतिरेकप्रतियोगिनः कारणस्य वक्तव्यत्वापाताच्च । सिषाधयिषेति यत्रानुमित्सानन्तरं साध्यतद्व्याप्यवत्त्वविशिष्टपक्षस्मरणम् अनुमितीष्टसाधनताविषयकतादृशस्मरणाद्वा अनुमित्सा अनुमित्सापूर्वकालोत्पन्नविशेषणस्मरणाद्वा अनुमित्साकालोत्पन्नेन्द्रिय-सन्निकर्षसहितात्साध्यतद्व्याप्यविशिष्टपक्षप्रत्यक्षं तदनन्तरञ्चानुमितिस्तत्र पक्षतासम्पत्तये सहकृतान्तं साधकमानविशेषणम् । सिषाधयिषा च तत्साध्यविशिष्टतत्पक्षविषयत्वप्रकारिका अनुमितिविषयिणीच्छा यत्किञ्चिद्गोचरं ज्ञानं जायतामितीच्छायामपि सिद्धिसत्त्वेऽनुमित्यनुत्पादात् अनुमितित्वाप्रकारिकायामपि प्रत्यक्षाव्यतिरिक्तं पर्वते वह्निज्ञानं जायतामितीच्छायां प्रत्यक्षाद्यनन्तरमनुमित्युत्पादाच्च यादृशयादृशीच्छासत्त्वे सिद्धौ सत्यामनुमितिस्तत्तदिच्छाभावसमुदायस्य विशेषणत्वादिच्छाया अननुगमेऽपि न क्षतिः धूमेनानुमिनुयामितिच्छायामालोकपरामर्शादसत्यामपि सिद्धौ यदि नानुमितिस्तदान्यमात्रलिङ्गकानुमितीच्छा कामिनीजिज्ञासादिवत् पृथक् प्रतिबन्धिका यदि च तत्रानुमितिस्तदा सिद्धिरूत्वे तत्रानुमिते-

ध्यारणाय तल्लिङ्गिकानुमितीच्छा तदन्यमात्रलिङ्गकानुमिती च्छातिरिक्तानुमितीच्छा या बाध्या लिङ्गविशेषेणापि च नियमेन पक्षत्व तल्लिङ्गकानुमितौ सिद्धिकालीना तल्लि- ङ्गिकानुमितीच्छा विरहविशिष्टान्यलिङ्गकानुमितीच्छैव वा प्रतिबन्धिका साध्यकमानं साध्यवत्त्वनियय पाषाणमयत्वा दिना पर्वते तैजसत्वादिना च वह्नि सिद्धावपि पर्वतत्वेन तत्र वह्नित्वेन च तथानुमितेर्दर्शनत्वसाध्यत्वयोरवच्छेदकावनु प्रवेशनीयौ यदि च पर्वतत्वसामानाधिकरण्येनैकत्र साध्य सिद्धावपि विनानुमित्सामन्यत्र तादृशानुमितिरनुभविकी तदा धर्मिविशेषोऽपि निवेश्यो नान्यथा पक्षतावच्छेदकस्य सामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमिति दर्शनात् पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति तदवच्छेदेन सिद्धेस्तत्सामानाधिकरण्यमात्रेणानुमितिं प्रति तु सिद्धि मात्रस्य विरोधित्वम् इत्यत्र लिङ्गभेदन्यायोऽनुसरणीय साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकानुमितेः प्रामाणिकत्वे तां प्रति पक्षविशेष्यिकैव सिद्धिर्विरोधिनी एवञ्च पक्षविशेष्यक सिद्ध्यनन्तरमपि साध्यविशेष्यिकानुमितिर्जायते तुल्यन्यायात् समानाकारायाः सिद्धेः प्रतिबन्धकत्वे पर्य्यवसानात् तादृशा नुमितिं प्रति सिद्धिमात्र विरोधिसाध्यप्रसिद्धिरेव वा अतएव प्रसिद्धसाध्यकस्थले पक्षविशेष्यिकैवानुमितिरनुभूयत इति अत्र च व्याप्तिस्मरणादिना पूर्व्वानुमित्सानाशे परामर्शकाले च सिद्धिसत्त्वेऽनुमित्सान्तरोत्पत्त्यैवानुमितिस्तस्यैव कारणीभूतस्य

विशिष्टाभावस्य सम्पत्तिरित्युपाध्यायाः । अन्ये तु द्वित्रिचणा-न्तरितायामप्यनुमित्सायामनुमितिदर्शनात् अनुमित्सायो-ग्यता वाच्या सा च न स्वोत्पत्त्यनन्तरं स्वविषयसिद्धग्रनु-त्पादः अनुमित्सानन्तरमन्तरानुमित्यनुत्पादे दिवसादि-विलम्बेनेन्द्रियादिना निर्णीतेऽपि साध्ये लिङ्गपरामर्शादनु-मितिप्रसङ्गात् किन्त्वनुमित्सानन्तरं लिङ्गदर्शनादिक्रमेण यावता कालेनोत्सर्गतः परामर्शो जायते तावानेव कालः फलबलेन तथा कल्पनात् अथवानुमित्सोत्पत्त्यनन्तरमनुमि-त्सानाशेऽपि सिद्धौ सत्यां यावत्कालमध्येऽनुमितिर्जायते तावानेव कालोऽनुमित्सयोपलचितः यदि च सिद्धग्रनन्तरं तन्नाशेऽपि द्वित्रिचणमध्ये विनानुमित्सामनुमित्यनुत्पादोऽनु-भवसिद्धस्तदा सिद्धग्रापि तावानेव समय उपलक्षणीयः विशिष्यच्णनियमस्त्ववहितैः करणीय इति वदन्ति । अत्र च यत्र साध्यनिर्णयेच्छानन्तरं पूर्व्वोक्तन्यायेन साध्यतद्व्याप्य-विशिष्टपचस्य प्रत्यक्षं स्मरणं वा यत्र वा साध्यतद्व्याप्यधर्म्मः तादृशव्याप्यधर्म्मान्तरविशिष्टपक्षस्य तत्पक्षकसाध्यतद्व्याप्यव-त्त्वानुमित्योरिष्टसाधनतायाश्चैकं स्मरणं ततस्तयोरनुमित्सा ततः साध्यतद्व्याप्यवत्त्वानुमितिस्तत्र तदनन्तरमनुमिति-प्रसङ्गः योग्यताविवचणे तु सुतरामेवेति तदिच्छाविषय-सिद्ध्यनुपहितत्वं तद्विशेषणं पक्षसाध्यभेदेन च पक्षताया भेदात् पृथक् पृथगेव कार्य्यकारणभावः तथाच यत्र सिद्धग्रनन्तरं कदाप्यनुमितिर्न जाता तत्र सिद्धग्रभावमात्र

कारणं न तु तदिच्छाविरहोऽपि गौरवात् प्रयोजनाभावाच्च
तेन यत्पक्षकयत्साध्यकानुमितौ कस्यापीच्छा न जाता तत्रापि
साधारण्यमात्रमप्यादायेश्वरेच्छाविरहमादाय नोपपत्तिः ।
यत्तु सिषाधयिषाविरहविशिष्टस्वप्रागव्यवहितोत्तरक्षणो
त्पत्तिकानुमितिकभिन्ना या सिद्धिः सिषाधयिषाविरह
विशिष्टायास्तस्या अभावः पक्षता अथ तृतीयक्षणव्यवधानक-
द्वितीयक्षण एवाव्यवहितत्वपर्यवसानायक्षाविरलक्रमेण सि
द्धिसिषाधयिषानुमितयस्तत्र द्वितीयक्षणे पक्षतासम्पत्तये द्वि
तीयसिषाधयिषाविरहो विशेषणमस्तु सिद्धेः प्राथमिकस्तु
स्वक्षणस्य किमर्थमिति चेत् यत्र क्रमेण सिषाधयिषाप्रत्य
क्षसिद्धिपरामर्शानुमितयस्तत्र तृतीयक्षणे पक्षतासम्प
त्तयमिति तत्र यथानुदितानागतकाले प्रागभावो सिद्धिरथ
च परामर्शानुमितौ तत्र पक्षताविरहप्रसङ्गात् अथ प्रथम
क्षणमपेक्ष्य द्वितीयस्यैव द्वितीयमपेक्ष्य तृतीयस्याव्यवहि
तोत्तरत्वं स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति
स्वाधिकरणकालध्वंसाधिकरणस्य या तादृशाव्यवहितोत्तरत्व
साम्य तथाच त्रयक्रमेण सिद्धिसिषाधयिषानुमितय
स्तत्र प्रथमस्य पक्षतावारणाय उत्तरक्षणस्य विशेषण
प्रथमं विशिष्टास्तु द्वितीयन्तु सिद्धेस्तृतीये द्वितीयक्षणे
पक्षतासम्पत्तये यदि पुनरिच्छाजनिका सामग्री प्रतिबध्ना
त्यनुमिति तदानुमित्यव्यवहितपूर्ववर्त्तिसिद्धिभिन्नसिद्ध्यभाव-
मात्रं पक्षतेति चेत्तादृशसिद्धीनां तत्सम्बन्धित्वेनाभाव

कारणं निरुक्तरूपविशिष्टत्वेन वा नाद्यः अनन्तकार्य्य-कारणभावप्रसङ्गात् तादृशसकलसिद्धौ अनुमित्साविरहविशेषणदानस्य वैयर्थ्यात् तत्तत्समयसम्बन्धव्यक्तीनां तत्तत्समयावच्छिन्नतत्तन्मनोयोगादीनां वा प्रतिबन्धकत्वप्रसङ्गाच्च नान्त्यः सत्यपि परामर्शादौ कस्याश्चित्सिद्धेरनन्तरमनुमितिः कस्याश्चिन्नेत्यत्र नियामकाभावात् न वा कारणतावच्छेदकावच्छिन्नसमाजाधीनकार्य्योत्पादादिक कारणतावच्छेदककोटौ निविशते तथा सति उत्पत्तिकालावच्छिन्नत्वविशेषितेन स्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकस्वसमानाधिकरणानुमिति-कसविषयत्वेन स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणोत्पन्नसविषयत्वेन स्वक्षणाव्यवहितोत्तरक्षणानुत्पत्तिकस्वसमानाधिकरणानुमितिकभिन्नसविषयत्वेन वा किं वा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवर्त्तित्वविशिष्टज्ञानत्वादिना कारणत्वं स्यात् अव्यवहितोत्तरश्च द्वितीय एव क्षण इति नातिप्रसङ्गः न चादिमेषु परामर्शस्थितिक्षणे यत्र विरोधिसिद्ध्यादिविनाशस्तत्रोत्तरक्षणेऽनुमितिर्न स्यात् परामर्शस्यातथात्वादिति वाच्यम् अनुमितिसामग्र्या विरोधिन्या विरहेण तदानीमुत्पन्नादनुव्यवसायादेरन्ततः संस्काराद्वा तत्सम्भवात् संस्कारजन्यत्वेन स्मृतित्वस्य प्रागेव निरासात् स्याद्वा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवृत्तिभिन्नत्वेन स्वसमानाधिकरणानुमित्यव्यवहितपूर्वत्वानधिकरणवृत्तित्वविशिष्टत्वेन वा स्वस-

मानाधिकरण्यानुमितित्वस्यानधिकरणे समया व्यवच्छिन्नपूर्वक्षण
वृत्तित्वविशिष्टत्वेन वा प्रतिबन्धकत्वे तदव्यवच्छिन्नपूर्वत्वस्य
तदुत्पत्तिक्षणोत्पत्तिकस्य समप्रतियोगित्वम् । न चात्र प्रथमे
यत्र सिद्ध्यात्मकपरामर्शानन्तरं सिषाधयिषाया उत्पत्तिकाले
तादृशयोर्यस्य कस्यापि धर्मस्य न विनाशोऽनन्तर पुनरनु
मितिः तत्र तदुत्पत्तिसमयेऽपि सा स्यात् तत्पूर्वकालीनानां
सर्वेषां तादृशपूर्ववर्त्तित्वेनाविरोधित्वादिति वाच्यम् अनव
रतपरिस्पन्दमानापरिमितपवनादिपरमाणुदेशान्तरसंयोगसन्ता
नस्य प्रतिक्षणमविरतमेवोत्पादात् कर्मान्तरासम्भवे
नापि तादृशकम्पनासम्भवात् कारणान्तरकल्पने गौरवात्
अव्यभिचारसन्देहस्य च कारणग्रहाविरोधित्वात् उप
दीयता वा तत्तदात्मसमयविशेषसम्बन्धो यत्र तादृशपूर्ववर्त्ति
भिन्ना भवेत्तत्र तत्तत्कयोरनुमितिं प्रति तत्तदीयानु
मित्यव्यवहितपूर्वक्षणत्वादिना तादृशक्षणवर्त्तित्वविशिष्टत्वा-
दिना वा कारणत्वे तथाप्युपमानादेः प्रमाणान्तरत्वं भज्येत
सर्वत्रानुमितिसामग्रीसम्भवात् विनीयेत च परामर्शत्वादिना
कारणस्य बाधकत्वादिना च प्रतिबन्धकत्वम् अनयैव रीत्या
कार्य्यान्तरेष्वपि क्लृप्तानां कारणानां प्रतिबन्धकानाञ्चान्यथा
त्वमक्लृप्तानाञ्च तथात्वं प्रसज्येत अतएव न द्वितीयोऽपि प्र
कारः वैयर्थ्याच्च सिद्धेः । सिषाधयिषाविरहविशिष्टस्य
सिद्ध्यनुमानातिरिक्तसाधकमानयोरन्यतरस्याभावः कारण
मिति तु केचित्तन्न साधकमानं हि सिद्धिस्वरूपयोग्य

तदुपहितं तत्सामग्री वा नाद्यः चक्षुरादिमत्त्वे विनानु-
मितीच्छामनुमित्यभावप्रसङ्गात् न द्वितीयः सिद्धेः पूर्वं
तदुपहितत्वाभावेन प्रत्यक्षसामग्रीसत्त्वेऽप्यनुमित्यापत्तेः अनु-
मानातिरिक्तेत्यस्य वैयर्थ्याच्च न तृतीयः अनुमितिसामग्र्य-
भावत्वेन प्रत्यक्षकारणत्वम् अनुमित्साविरहविशिष्टप्रत्यक्ष-
सामग्र्यभावत्वेन चानुमितिकारणत्वमित्यन्योऽन्याश्रयात्
स्थाणुत्वाभावव्याप्यदर्शनक्षणे प्रतियोग्यारोपविरहेणाभाव-
प्रत्यक्षसामग्रीविरहात् पक्षतासत्त्वे स्थाणुत्वारोपक्षणे तद-
भावानुमित्यापत्तेरित्यपि कश्चित् वस्तुतस्तु स्वतन्त्रान्वय-
व्यतिरेकशालित्वान्नियमेन प्रथममुपस्थितत्वाल्लाघवाच्च प्रत्ये-
कमेव तथात्वमन्यथा बाधादेरप्यतत्त्वान्तर्भावप्रसङ्गात् न
चानुमित्साविरहस्य प्रत्येकं विशेषणत्वे गौरवं शाब्द-
सिद्धौ सत्यामशाब्दं ज्ञानं जायतामितीच्छायामनुमितेरुत्-
पादात् सिद्धावनुमितिविषयेच्छाविरहस्य प्रत्यक्षसामग्रीसत्त्वे
च तादृशेच्छायामनुमित्यनुत्पादात् साधकमाने अनुमिति
त्वादिप्रकारकेच्छाविरहस्य पृथगेव विशेषणतायास्त्वयापि
वाच्यत्वात् स्वनिवर्त्तकप्रत्यक्षादिसामग्रीसमवहितान्यत्वादिना
च तादृशेच्छयोरनुगमेऽतीव गौरवम् अन्यतरत्वघटकयोरन्यो-
ऽन्याभावयोर्मिथोविशेषणविशेष्यभावे विनिगमकाभावश्च आ-
त्मनिष्ठस्य समवायेन सिद्धेरभावः भिन्नभिन्नेन च सम्बन्धेन
तत्तदसाधारणकारणरूपायास्तत्सामग्र्याः मणिविशिष्टस्य
वह्नेरिवेतरेतरविशिष्टस्य मनोयोगादेः प्रतिबन्धकत्वायोगात्

तथा च कथमनुगतरूपेण तयोरभाव कारणम् एवं सिद्धे
सिषाधयिषाविरहेण वैशिष्ट्यमेककालावच्छेदेनैकात्मवृत्तित्व
प्रत्यक्षादिकारणचन्तु मयोगादिस्वन्यादनुमितिसामग्रीविशि
ष्टाभावस्य हेतुत्वेऽपि लाघवात् सिद्ध्यभाव एव पक्षताव्यवहार
निमित्तम् एतदेवाभिसन्धाय प्रकृतिनिमित्तमुक्तमिति
वदन्ति यत्तानुपपत्तिसंज्ञीव्याविरहविशिष्टसिद्ध्यभावापि
यथा साध्याभावस्य लघुत्वेऽपि सिद्धसाधनस्थलपक्षताव्यवहार
विरहेण तादृशसिद्ध्यभावस्यावश्यकत्वे साध्याभावो न निवि
गते गौरवात् विशिष्टसिद्ध्यभावस्य चात्मनिष्ठस्यैवानुमितिहेतु
त्वेऽपि तस्य परम्परासम्बन्धादेव पक्षतादौ पक्षव्यवहार
इति ध्येयम् एकस्य पुंसोऽनुमित्सायामन्येऽपि अन्यस्य तद्विर
हेण प्रत्यक्षादिसामग्रीसत्त्वेऽनुमित्युत्पादात् तत्पुरुषी
यानुमितिं प्रति तत्तत्पुरुषीयानुमित्साविरहकालीनतत्त
त्पुरुषीयसिद्धिसामग्रीविशेषविरहोऽनन्यगतिकत्वेन हेतुर
पेतव्य इति वदन्ति । अथ सिद्ध्युत्तरानुमितौ सिषाधयिषा
हेतुरस्तु नचैवं मण्यादिसत्त्वीयदाहं प्रत्युत्तेजकस्य हेतुत्वा
पत्ति उत्तेजकानामननुगतत्वात् तावदभावविशिष्टमण्याद्य
भावस्य चानुगतत्वादिति चेदिहापि दर्शितोऽननुगम सिषा
धयिषाया सिद्ध्युत्तरानुमितित्वस्याननुगतानतिप्रसक्त दुर्वचं
सिद्धिस्थितिकालीनां स्वेतरसिद्धिकालीनां वानुमितिं प्रति
हेतुत्वकल्पने च विनापि सिषाधयिषां सिद्धिनाशकालेऽनु
मित्युत्पादोदुर्वार एकस्य च पुंस सिद्धिसत्त्वेऽन्यस्य सिषा

धयिषाशून्यस्यानुमित्यनुत्पादप्रसङ्गः तत्तत्पुरुषीयतादृशानुमितिं प्रति सिषाधयिषाया हेतुत्वेऽनन्तकार्य्यकारणभावप्रसङ्गः अपि च सिद्धौ सत्यां विनापि सिषाधयिषां सामान्यसामग्रीतोऽनुमितिसामान्योत्पत्तिप्रसङ्गात् न हीदृशविशेषसामग्रीं विना सामान्यसामग्र्या अनुमितिजनकत्वं नास्ति न चान्यत्रापि तद्विशेषसामग्र्यन्तरमस्तीति तत्कल्पने चातिगौरवम् इह जायमाना सा सिद्ध्युत्तरैव स्यात् सा च न जायते कारणाभावादिति चेत् समाजनिष्ठानुमितिसामान्यन्तु स्यादेव कार्य्योत्पादविरहस्य विना कारणाभावमसम्भवात् कारणव्यापारत्वेनावश्यककारणभावस्य परामर्शस्य कारणतावच्छेदिका पक्षता न कारणमिति तु भ्रमः प्रतिबन्धकान्तराभाववदन्वयव्यतिरेकशालित्वेन हेतुत्वात् अन्यथा यथासम्भवनिमित्तकारणस्य समवायिकारणत्वाद्यवच्छेदकत्वप्रसङ्गात् अथानुमितिसाधारणसिद्धेः प्रतिबन्धकत्वे तदभावस्य मण्याद्यभाववत् प्रतिबन्धकाभावत्वेन कार्य्यकालवृत्तेरेव हेतुत्वात् अनुमितिकाले च तदसम्भवात् सा नोत्पद्यतेति चेन्न यस्य मण्याद्यभावादेः कार्य्यसमकालतयान्वयव्यतिरेकित्वं तस्यैव तथात्वेन हेतुत्वं नतु सर्वस्य गौरवात् अन्यथा समवायिकारणस्य कार्य्यसहभूतस्यैव हेतुत्वात् कारणमात्रस्य तथात्वप्रसक्तौ प्राभाकरा एव विजयेरन्निति। प्राभाकरास्तु विनाप्यनुमित्सां क्वचित् परामर्शानुमितिप्रवाहस्याविरललग्नस्यानुभविकत्वात् कालभेदकल्प-

मायाञ्च मानाभावात् मानाभावाच्च पक्षता नानुमिति
हेतुः परार्थानुमाने तु सिद्धसाधनमर्थान्तरविधया दूषण
मित्याह ।

लक्षणोपोद्घातेन विशिष्टज्ञानस्य कारणत्वं व्यवस्थापयति
पक्षेत्यादि । व्याप्तिस्मरणेति स्मरणत्वमविवक्षितम् अव्याप
कत्वात् लाघवात् । प्रथमोपस्थितत्वलाघवात् । कल्पना-
लाघवमाह परामर्शेति परामर्शहेतुत्वयादिनाप्यनुमितेः
पूर्वं तादृगज्ञानमवश्यं वक्तव्य तथाचातिरिक्तधर्मिण
स्तत्रानन्यथासिद्धनियतपूर्ववर्त्तित्वयोश्च कल्पनामपेक्ष्य उ
भयवादिसिद्धनियतपूर्ववर्त्तिनोऽनन्यथासिद्धत्वमात्रकल्पनाल
घीयसीति । ननु धूमत्वावच्छेदेन व्याप्तिग्रालोकनेन च पक्ष
धर्म्मताया ग्रहेऽप्यनुमिति स्यादित्यत आह एवमिति यद्व
च्छावच्छेदेन व्याप्तिज्ञानं तेनैव रूपेण पक्षधर्म्मताज्ञानं हेतु
रिति नातिप्रसङ्गः ग्रामद्वयादिति द्वित्वमविवक्षितं लाघ-
वात् अवच्छेदकलाघवात् आवश्यकत्वात् व्याप्यतावच्छे
दकप्रकारकव्याप्तिज्ञानस्य हेतुत्वे व्याप्तिज्ञानहेतुताया आव
श्यकत्वात् । क्वचिदुपजीव्यत्वादिति पाठः उपजीव्यत्वञ्च व्याप्ति
ज्ञानं विना यद्धर्म्मावच्छेदेन व्याप्तिज्ञानं तत्प्रकारकपक्षधर्म्म
ताज्ञानस्यासम्भवात् एवञ्च सिद्धे व्याप्तिज्ञाने हेतावतिप्रसङ्ग
भङ्गाय पक्षधर्म्मताविषयत्वमवच्छेदकं कल्प्यते लाघवात् नतु
कारणान्तरं गौरवादिति भावः । सिद्धस्य व्याप्तिज्ञानस्य न पक्ष-
धर्म्मताविषयत्वमित्याशयेनाह तस्येति । यद्वा व्याप्यत्वज्ञान

मिति व्याप्यत्वप्रकारकं पक्षधर्म्मताज्ञानमित्यर्थः। ननु विशिष्टज्ञानान्यथानुपपत्त्याज्ज्ञानद्वयस्यावश्यं वाच्यतया तस्यैव हेतुत्वं युक्तं तदिदमुक्तमावश्यकत्वादित्यत आह उपजीव्यत्वादिति विशिष्टज्ञानान्यथानुपपत्त्या तत्कल्पने विशिष्टज्ञानस्योपजीव्यत्वादित्यर्थः। स्वसम्वेदनसिद्धमेव ज्ञानद्वयं आवश्यकत्वञ्च तस्योभयवादिसिद्धमित्याशयेनाह तस्येति। असिद्धिं परिजिहीर्षुराशङ्कते अथेति अयं पक्षवृत्तिः हेतुरिति लाघवादिति शेष.। अनुमितिसामग्र्या इति स्मृतिहेतुतावादिनां नव्यानां नये दूषणमिदं ननु संस्कारकारणतावादिनां प्राचामिति। अथेत्यादि अत्र यत्र प्रथमं पक्षाग्रहे गृहीतधूमे स्मृतव्याप्तिवैशिष्ट्यभानमनन्तरञ्च गृहीते पक्षे तादृशविशिष्टधीस्तत्रेत्यपि द्रष्टव्यम्। प्रथमत इति विशिष्टज्ञानात् पूर्वमनुमितिसामग्रीविरहप्रदर्शनाय। एवञ्च सिद्धे पूर्ववर्त्तिनि विशिष्टज्ञाने तस्यैव तत्त्वेन हेतुत्वं गुरुधर्म्मद्वयावच्छेदेनान्यथासिद्धत्वकल्पनामपेक्ष्य लघ्वेकरूपावच्छेदेन नियमागन्यथा सिद्धिकल्पनाया एव न्याय्यत्वात् गृह्यमाणव्याप्यवच्छेदकताकधर्म्मप्रकारकपक्षधर्म्मताज्ञानत्वेन पक्षधर्म्मताग्रहप्रकारीभवद्धर्मावच्छिन्नव्याप्तिज्ञानत्वेन वैकरूपेण कारणत्वे चातिगौरवात् विनिगमनाविरहाच्च तवापि च नियतपूर्ववर्त्तित्वं कल्प्यमित्याह यत्र चेति। तेन विनेति तथा च व्यभिचारात्कारणत्वं बाधितमितिभावः। स्वतो व्यभिचारं निरस्यति अस्मदुक्तेति। अनवस्थानादिति। न च

धूमालोकसन्निकर्षे सत्यपि क्वचित् धूमस्य वह्निव्याप्यत्वमिति
लिङ्गविशिष्टकपरामर्शाद्यास्त्वनुमितिमध्य धूमालोकसन्नि
कर्षेऽपि तत एवानुमानात् तथापि वृत्तित्वं मतत्ववैशिष्ट्यप्रा
त्यक्षविरहात् असाधारणमिति शरीरादित्युक्तम् ध्यानाकादि
पारणाय प्रमाणान्तरमनुकारोति याच्य तदपि प्रमाणा
न्तरं भवत्येव प्रत्यक्षाप्रिमाकरणत्वेन च विभागात् तथा
प्यत्र इत्यपि कश्चित् । यदा असाधारणमनन्तर्भाव्य तथा च
तज्जातीयप्रमायां मनोऽन्यकरणेनाजन्यत्वम् तत् तदपि
विषयकप्रमोत्पादकतज्जातीयप्रमाजनकयोग्यत्वं वा तत्र
मोत्पादकतज्जातीयप्रमासुलिङ्गेऽव्याप्ति तत्र लि-
ङ्गायां विलक्षणप्रमायां विलक्षणे च संस्कारे कल्पनीये लाघ
वस्य तत्वात् बाधकाभावात् तत्रैव तथात्वं पर्य्यवस्यतीति । संशय
स्वप्नौ च न विशिष्टानुभवरूपौ येनोपनयादिवशादपि विषया
नुभवजनने कृतार्थत्वेन मनसा दोषवशात् प्रमेय तदभावा
दिवशात् प्रमापि जनयितव्येत्याशङ्क्येत किन्तु धर्मिमात्र
कोटिस्मरणादिरूपौ धर्मिमात्रे पुनरनुभवरूप यथासम्भव
सत्ताद स्मरणञ्च संस्कारादित्याशयेनाह संशयेति । व्या-
प्यत्वानुमानादिति धूमत्वादौ वह्न्यादिव्याप्तिर्व्याप्यत्व जा
नतो धूमत्वस्यादिना तद्धत्वनिश्चयदशायामन्यदात्मसर्गो
पस्थादेवेति । अतीन्द्रियार्थे लिङ्गे व्याप्यत्वप्रकारकज्ञान
व्यासमभवेऽप्यनुमिते सर्वानुभवसिद्धतया तस्य कारणत्वे बाधिते
परिशेषात् लिङ्गेऽपि व्याप्यतावच्छेदकप्रकारकज्ञानस्य हेतुत्वे

सिद्धे शाब्दव्याप्यवत्तावोधस्थलेऽपि तत्कल्पाते कारणं विना कार्य्योत्पत्तेरसम्भवात् तेन च विना तत्रानुमितेरसिद्धत्वान्न तस्यापि हेतुतावाधः तवातीन्द्रियलिङ्गादौ सर्वानुभवसिद्धाया अप्यनुमितेः सर्वथैवापलापः मम तु क्वचित्कालविलम्बादिमात्रकल्पनमित्याशयवानाह अतएवेति तुल्यमित्यभ्युपगमवादः यत्र यदवच्छिन्ने यथाहि तदभावेन तदभावव्याप्यतया गृहीतेन वा विशिष्टेन तत्संशयः तथा यदवच्छेदेन तद्-व्यावर्त्तकधर्मदर्शनं तद्विशिष्टेऽपि अनुभववलाद्यावर्त्तकञ्च तदभावो यदवच्छेदेन वा तदभावोऽवगतो यो वा तदभाव-व्याप्यत्वेन गृहीतः यथा स्थाणुत्वाभावस्य पुरुषत्वावच्छेदेन ग्रहे पुरुषत्वस्य स्थाणुत्वाभाव व्याप्यत्वेन गृहीतस्य करादेर्वा इदन्त्वावच्छेदेन ग्रहे पुरुषोऽयं स्थाणुर्नवेति न संशयः तदभावादिवच्च तद्वदन्योऽन्याभावादिस्तादात्म्येन संशये च तदन्योऽन्याभावादिरपि द्रष्टव्यः एवं न तद्भ्रमोऽपि विशेषदर्शनस्य विपरीतज्ञानमात्रविरोधित्वादित्यग्रे व्यक्तीभविष्यति। नन्वित्यादि इदं नीलत्वेन प्रतीयमानं भावोऽभावो वा भावत्वाभावत्वयोस्तत्त्वयोरित्यर्थः लिङ्गत्वाभावादप्रसिद्धत्वेन तत्त्वासम्भवात् भावत्वाभावत्वेत्यादिक केवलान्वय्यनुमानमतिरिक्ताभावमभ्युपेत्य केवलान्वयिनः साध्यस्य धर्ममात्रमेव व्याप्यमिति तु द्रष्टव्यम्। एवमिति लिङ्गं व्याप्यत्वे साध्ये लिङ्गतावच्छेदकं वा वह्नौ। यद्यतिरेकेति यत्संशयव्यतिरेकनिश्चयावित्यत्र व्याख्याततत्त्वमेतत् यद्वा

तद्व्यतिरेकविषये कार्य्यानुत्पत्तौ तद्व्यतिरेकविषयाभाव
कारणतामपेक्ष्य तद्विषयस्यैव कारणत्व युक्त[illegible]
त्यभिप्रायकमिदम् अतएव क्लृप्तनियतपूर्वभावतया [illegible]
पक्षाभाव एवानुमिति हेतुरित्यभिप्रेत्याप्तु देत्यादि [illegible]
सामान्यतो विशेषदर्शनात् सामान्यतो भ्रमो न [illegible]
विशेषतस्तु स्यादित्येत्यभिप्रायिकामाशङ्का निरस्यति न [illegible]
अस्तु चेत्यभ्युपगमवाद । नचेत्यादि अभेदज्ञानस्या[illegible]
भेदपक्षे न प्रतिबन्धको भवितुमर्हतीत्यर्थ । अभेदेति तथा
चातथाभूतस्यापि प्रतिबन्धकत्वमनायत्या वक्तव्यमिति भाव ।
अतथाभूतत्वस्य सन्दिग्धत्वे व्यभिचारमाह तथापीति नि[illegible]
पणानुरक्ताने चाप्रयोजकत्वमिति भाव । गोत्वे [illegible]
यच्चतावच्छेदकत्वमविशेषित विशेषित वा तद[illegible]
मधुरत्वेति मधुरत्वस्याव्यो धर्मो जातिरखण्डोपाधिर्वेतिचान्तो
न विशेष । गौरितिज्ञाने गोत्वप्रकारकत्व विशेषमात्र
ज्ञात्व भव्ययेति । व्यक्ते प्रकारत्वेऽपि लिङ्गतावच्छेदक[illegible]
मभवादाह गवेतरेति गोत्वत्वस्याताप्रवेशायायामाय[illegible]
यथा साध्य गवेतरासमवेतत्वादिकमेवोपादेय [illegible]
व्यभिचारवारणाय समवायेन सम्बन्धेन हेतुत्वस्याव[illegible]
विनाभावादिसाधारण्येऽप्यदोषात् व्यतिरेकेऽपि [illegible]
सम्बन्धान्तरेण च गोत्वाभावस्यापि व्यभिचारितया [illegible]
समवेतस्य तत्त्वेन समवायसम्बन्धेनाभावस्यैव गमकत्वात् ।

लिङ्ग लिङ्गतावच्छेदक तथाच न व्यभिचार न तथा

न तेन व्यभिचारवारणम् । नहीति धमान्यान्यत्वमिति दृष्टान्तार्थं न चैकधर्मस्यावच्छेदकत्वापेक्षया धर्मद्वयस्य तत्त्व एव गौरवमिति वाच्य तादृशैकधर्मघटकानेकभेदादिघटकतया धर्मद्वयस्यैव प्रथमोपस्थितत्वेन चावच्छेदकत्वौचित्यात् अन्यथा वह्न्यादीनामपि व्याप्यतया तावदन्यतमत्त्वस्यैवावच्छेदकत्वं स्यात् । अन्वयेति विशेषदर्शनं हि विपरीतज्ञानविरोधितया प्रत्यक्ष उपयुज्यते तत्त्वञ्चान्यतरत्वदर्शनस्यापि व्यावर्त्तकधर्मदर्शनत्वेनाक्षतम् अत्र च तदन्यान्यत्वस्यातिरिक्तत्वे धूमत्वत्वादेस्तदवृत्तित्वात् धूमत्वादिरूपत्वेऽपि च धूमत्वत्वादेरप्रवेशाल्लिङ्गत्वेऽपि न वैयर्थ्यमित्यपि द्रष्टव्यम् एवञ्चान्यतरत्वस्य व्याप्यनवच्छेदकत्वे स्थिते तदवच्छेदेन तद्ग्रहोपगमे तवाप्यन्यथाख्याति स्वीकारप्रसङ्गः । अस्तु वा गुरुरपि धर्मोऽवच्छेदकस्तथापि शुद्धव्याप्तिप्रकारकज्ञानस्थले व्यभिचारान्न तस्य हेतुत्वमित्याह किञ्चेति । वह्नीत्यादि व्याप्तेर्व्याप्यनवच्छेदकत्वादिति भावः ।. मानाभावादिति वस्तुतो विशेषव्याप्यवच्छिन्ना महाव्याप्तिरतिरिच्यताम् किं तेन न हि वस्तुतो व्याप्यवच्छेदकप्रकारक पक्षधर्मताज्ञानं हेतुरतिप्रसङ्गात् परन्तु यदवच्छेदेन व्याप्तिर्गृह्यते तत्प्रकारकम् । न च तदानीं व्याप्यवच्छेदेन व्याप्तिर्गृह्यते न च तद्ग्रहेऽनुमितिरपलपनीया मानाभावात् कल्प्यत्वाविशेषे लघुरूपावच्छिन्नस्यैव नियतपूर्ववर्त्तितायाः कल्पयितुं युक्तत्वात् एतेन व्याप्तिग्रहविषयधर्मिमात्रवृत्तिधर्मप्रकारकं पक्ष-

धर्मताज्ञानं हेतुरित्यपास्तं सामान्यलक्षणानङ्गीकारे धूमत्वाग्नेरपि तथात्वायोगात् वह्निव्याप्य सर्व्वं प्रमेय धूमवान् पर्वत इति ज्ञानादप्यनुमितिप्रसङ्गाच व्याप्तिसमानाधिकरणत्वेन साध्यधर्म्मसमानोभयो च सा धूमव्यक्तिर्वह्निव्याप्येति ज्ञानसहितात्तद्व्यक्तिमत्तापक्षज्ञानात् वह्निव्याप्यवानिति ज्ञानस्थलेऽसंभवः अतएव व्याप्यत्वभानांशे प्रकारता यस्तादृशो धर्म्मो भासते सप्रकारक पक्षधर्मताज्ञान हेतु वह्निव्याप्यवानित्यत्र च वह्निव्याप्यत्वमेव तथा धूमवानित्यादौ च धूमत्वादिक धूमसमानाधिकरणमेत्यादिव्याप्तिज्ञाने तस्यापि प्रकारकतादिति परास्तम्। धूमसमानाधिकरणवह्निव्याप्य सर्व्वं प्रमेय धूमवानय प्रमेयत्वव्याप्य सर्व्वमभिधेय समानाधिकरण वांश्चायमित्यादि ज्ञानादप्यनुमित्यापत्तेः । न च धूमत्वादेरतिरिक्तवृत्तित्वपक्षे एवं प्रतिबन्धकस्तदपक्षेऽप्यनुमितावि ष्टापत्तिरिति वाच्यम् एवमपि धेटापत्त्यैव सर्व्वत्र प्रतीकारे विशेषणानुसरणवैयर्थ्यात् व्यभिचारस्यपक्षधर्म्मताज्ञानयोरेव हेतुत्वस्य सुवचत्वात् किञ्च पुरुषान्तरस्य तस्यैव वा कालान्तरे वर्त्तमान व्याप्तिप्रत्यक्षमादायातिप्रसङ्गस्य भङ्गाय स्वसमानकालीनस्वसमानाधिकरणव्याप्तिप्रत्ययविषयधर्म्मिमात्रवृत्तिधर्म्मप्रकारक पक्षधर्म्मताज्ञान वाच्य तथा च स्वत्वस्याननुगतत्वात्कारणतावच्छेदकस्य तत्तद्धर्म्मिमात्रपर्य्यवसायित्वेमिथो व्यभिचार तत्तत्पक्षधर्म्मताज्ञानत्वेनैव हेतुत्वे सम्भवेऽधिकवैयर्थ्यञ्च एतेन गृह्यमाणव्याप्यवच्छेदकताकेव्या

ह्युपदर्शितप्रकारद्वयमपि प्रत्युक्तं वेदितव्यं एवं यद्धर्मावच्छेदेन व्याप्तिज्ञानं तद्धर्मप्रकारकं पक्षधर्मताज्ञानं हेतुरित्यपि परास्तम्। तद्धर्मविश्रान्तमूर्त्तिकत्वेनाप्यननुगतत्वाच्च वह्नेश्च्छा तत्साधनताज्ञानस्येच्छाहेतुत्वेऽपि समानमिति चेत् सत्यं प्रतिवक्ष्यते हि तत्र लघुगुरुरूपाभ्यां युगपदुपस्थितौ लघुरूपावच्छेदेनैवकारणत्वं कल्प्यते लाघवात् नियमादेरेकतररूपावच्छेदेनाप्यक्लृप्तत्वात् इत्याशयवानाह अपि चेति। ननु स्वसमानाधिकरणाभावे इत्यादिव्याप्तौ स्वपदार्थस्यैकस्याभावेन धूमादिकमेव विशिष्य उपादेयं तत्र च धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नवह्निसमानाधिकरणेन्धनवानयमिति ज्ञानादप्यनुमितिप्रसङ्गेन तादृशवह्निसमानाधिकरणधूमत्वं व्याप्तिस्तत्प्रकारकमेव च पक्षधर्मताज्ञानमननुगतमपि हेतुरिति वक्तव्यं तथा च यद्धर्मविशिष्टसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके गृह्यते तत्प्रकारकपक्षधर्मताज्ञानत्वेनैव हेतुत्वम् अयं वह्निव्याप्यवान् धूमो वह्निव्याप्योऽयं धूमवान् वह्निधूमव्यापकोऽयं धूमवानित्यादिसकलवित्तिव्यापकत्वात् न तूपदर्शितव्याप्तिप्रकारकज्ञानत्वेनाव्यापकत्वात् किञ्चान्यथाख्यातिवादिभिर्धूमादिसमानाधिकरणात्यन्ताभावाप्रतियोगिगगनसमानाधिकरणधूमादिमानयमिति-ज्ञानादनुमित्यङ्गीकारादखण्ड-व्याप्तेश्चाप्रसिद्ध-तया प्रकारकत्वासम्भवात् साध्ये साधनव्यापकत्वग्राहकमधिकर-

नादौ च साध्यीयसाध्यतादि पक्षे च तादृशसाधनवत्त्वाय नादि यज्ज्ञान तत्त्वेन कारणत्ववाच्य तथा च साध्यता तादृशव्यापकत्वघटकधर्मेणावगाहितयैव कारणावच्छेदक धर्मस्फूर्त्तित्वगुरोधेन व्यापकत्वस्यापि चानुगतोऽनिर्वाहमीर्वा चरमतिरिच्यते यथा च सामानाधिकरण्यज्ञानस्य हेतुत्वेऽपि न चातिमात्रा चल्यते इति चेन्न गृह्यमाणव्याप्यतावच्छेद कताक्षिप्यादिप्रकारकदोषदूषणपदत्वात् पक्षात्यत्ताभावपद वृत्तिधर्मवानयमित्यादिज्ञानादप्यनुमित्युदयाच्च व्यभिचार ज्ञानविरोधिज्ञानविषयत्वेनैव व्याप्तेरननुगमात्। नन्वेवं कारणे कार्यमेव प्रमाणं तत्र कार्यकारणभावग्रहे सति स्यात् सच तु न सम्भवति गौरवज्ञानेन प्रतिबन्धादित्यत आह कारणतापरीति कारणतानिर्णयं विना तत्फलस्य धर्म्मान्तरनिर्णयस्याभावेन तद्घटितगौरवस्यानिर्णयादित्यर्द सम्भाव्यते तावदिदं धर्मान्तरकल्पनं विना कारणत्वस्यैवा ग्रहनिर्वाहत्वादिति चेत् सम्भाव्यतां न तु तत्प्रतिबन्धक सामान्यत कार्यकारणभावग्रहस्य चावगोपित्वप्रसङ्गात् तव तत्र क्लृप्तनियतपूर्ववर्त्तितावच्छेदकरूपान्तरविरहेणा-गत्या गौरवमप्याश्रीयते इति चेदिहापि तद्विरहस्याम छदायेदित्वादिति तत्र पर्यवसितमेवेति। व्यभिचारनिर्णयेन कारणत्वग्रहासम्भवं निरस्यति न चेति। अनुमानयोरिति अनुमितैकसाध्यविशिष्टे साध्यान्तरानुमित्या सहचारग्रहोप-गमेऽपि नियमांशग्रहासम्भवादिति भाव । नियतव्यापा

रेति एकसम्बन्धिज्ञानाधीनसम्बन्ध्यन्तरस्मरणान्वितः क्वचि द्विशिष्टज्ञानोत्पत्तावपि नियतत्वेन न तस्य व्यापारत्वं य जनयित्वैव यस्य यज्जनकत्वं तस्यैव तत्र तद्व्यापारत्वादि-त्यर्थः। वस्तुतस्तु तदुपनयव्यक्त्यादेस्तत्प्रमाव्यक्तिं प्रति का-रणत्वेऽपि न क्षतिः प्रमावैजात्यस्यैवात्र प्रमाणान्तरनिमित्त-त्वात् न चात्रापि प्रमावैजात्यमनुपलम्भबाधितत्वात् माना-भावाच्च उपनयस्य च विशिष्टज्ञाने विशेषणज्ञानत्वेन प्रत्यक्षे च सन्निकर्षविधयोपयोगितया जात्यव्यवस्थापकत्वात् अतएव वाह्यान्तरप्रत्यभिज्ञासादृश्याभावादिप्रत्यक्षाणां तत्ताप्रति-योग्यादिविषयत्वमन्यथा जातिसङ्करप्रसङ्गात् ज्ञानद्वय-कल्पने च स्थैर्यमात्रमुच्छिद्येतव्यवस्थापितञ्च विशिष्टज्ञानस्य व्यवहारहेतुत्वम्। न च प्रमाणान्तरासहकृतोपनयजन्यता-वच्छेदकतया वैजात्यसिद्धिः इतरासहकृतत्वेनाजनकत्वात् असिद्धेश्च उपनयात्मकसन्निकर्षवशेन मनसा प्रत्यक्षजनन-स्यैवोपगमात्। पृथगिति न चैवं धारावाहिकोच्छेद इतर-मात्राविशेषणत्वेनोपस्थितेरेव तन्त्रत्वात् कोटिस्मरणस्य स-शयेन तस्य च व्याप्तिस्मरणादिना नाशात् विशेषदर्शनकाले च संशयायोगादाह न चेति। गौरवादिति न चैवमभाव-विशेषणत्वेनोपस्थितस्यापि भावस्य ग्रहापत्तिरभावग्राहक-सामग्र्या बलवत्याः प्रतिबन्धात् अभावाविशेषणत्वेनोपस्थि-तिस्तन्त्रमित्यपि कश्चित् वस्तुतः स्वतन्त्रविशेषणज्ञानस्य वि-शिष्टधीहेतुत्वेऽनुमित्यर्थमेव त्वयापि तत्स्वीकरणीयं न हि

विशिष्टसंशय एवेत्य तथात्वे मानाभावात्। तर्कोत्यादि वस्तुतो यत्र क्वचिदपि दृष्टान्तस्य धर्मिणि साधारणधर्मदर्शनात् स्मृतस्य संशयादिसाधारण्यो विशिष्टधीरियमस्तु विशेष्यां यत्कोटिद्वयसहचरितधर्मादर्शनात् कोटिद्वयस्मरणे संशयोऽन्यथा त्वेककोटिनिश्चय इति एतेन धूमत्वादिना पक्षधर्मतासिद्धसमये वह्न्यनुमितिरिति परास्तम् धूमत्वाद्यनुपस्थित्या धूमत्वावच्छिन्नव्याप्तिविषयत्वाग्रहे वह्न्यनुमितिप्रसङ्गात् एतेन यद्धर्मावच्छेदेन यस्य दृष्टान्तमुपनयवशात् तद्धर्मविशिष्ट एव तद्भासते धूमवत्त्वावच्छेदेन च वह्निमत्त्वप्रहाद् महानसेव वह्निमानिति बुद्धिः स्यात् न तु पर्वतो वह्निमानित्यपि परास्तं मानाभावात् चन्दनत्वावच्छेदेन दृष्टान्तस्य सौरभग्रहे पुरोवर्तिनि चन्दनत्वादिदर्शनादिदं सुरभि इत्यादिबुद्धौ व्यभिचाराच्च यदि चावच्छेदकावगवैशिष्ट्यमपि तत्र भासते इति नियमोऽपि तत्र प्रामाणिकस्तदा धूमवान् पर्वतो वह्निमानित्येव धीरस्तु न हि लिङ्गोपधानभाने बाधकमस्त्यसाधकविरहात्। हेतुसाध्येति सम्बन्धिद्वयनिरूप्यपदार्थत्वं प्रति सम्बन्धिद्वयसत्त्वस्य हेतुतया संयोगादिस्थले तथैव क्लृप्तत्वात् तदभावेऽपि साध्यघटितमूर्तिकव्याप्तिमत्त्वस्य साध्यसत्त्वसामग्रीं विना सम्भवादिति भावः । विशेषणेत्यादि विशेषणविशेष्यसम्बन्धस्तदंशे प्रमात्वे लौकिकत्वे वा विशेषदर्शनञ्च विपरीतज्ञानप्रतिबन्धकतया क्वचित् क्वचित्सहचरितधर्मदर्शनत्वेन विशेषण

स्मारकतया विशेषणस्य च ज्ञानसत्त्वेऽप्यतिरिक्तसन्निकर्ष-स्तद्ग्रहे लौकिकतायामुपयुज्यते। एकैव चोक्ति वस्तुतो व्याप्तिभेदेऽपि न क्षतिः सामान्यतो व्याप्तित्वेन गृहीतानां सकलव्याप्तीनां तथैव स्मरणसम्भवात् वह्नेरसन्निकर्षादिति। ननूपनयात्मकसन्निकर्षेणैव नयनेन निरूप्यतां हुताशनो न हि वह्निरिन्द्रियेण द्रव्यसाधेयतया तद्वत्त्वस्य वा ग्रहे तत्संयोगो हेतुः दण्डी पुरुषो नास्तीत्यादौ व्यभिचारात् कथमन्यथा पक्षधर्मे वह्निमत्त्वगर्भिता व्याप्तिरेव गृह्यते न चाधेयतया मुख्यविशेष्ये साक्षात् द्रव्यग्रहे तत्संयोगो हेतुः अभेदारोपे च नाधेयतया रजतादिकं प्रकारो दण्डाद्यात्मकतत्तावगाहि-प्रत्यभिज्ञायाञ्च तत्तावदभेदो भासत इति न दण्डादेः साक्षा-त्प्रकारतेति वाच्यं मानाभावात् धूमवान् वह्निमानिति सामान्यलक्षणया ग्रहे व्यभिचारात् तत्तासंसर्गस्यापि प्रत्य-भिज्ञायां भानसम्भवात् प्रकृतेऽपि वह्निमदभेदग्रहणेव कृतार्थ-त्वाच्च एतेन तत्ताकारानुपनीततादृशद्रव्यग्रहे स हेतुरिति निरस्तं चैत्रपदवाच्योऽयमित्यादिवत् दण्डयमासीदयं दण्डी-त्यादिग्रहस्यानुभविकत्वात् तत्तात्वस्यातिरिक्तस्याभावात् त-च्छब्दप्रयोगजननाभावस्य च निमित्तान्तरविरहप्रयुक्तस्य जन्य-तानवच्छेदकत्वात् तज्जननयोग्यतायाः प्रकृतेऽपीष्टत्वात् अतएव तदिन्द्रियग्राह्यविद्यमानद्रव्यस्य तेन ग्रहे तत्संयोगो हेतुरिति परास्तम् नयनादिनारजतादेरभावग्रहाभेदारो-पादौ व्यभिचाराच्च अथैवं व्यवहितदण्डे पुंसि न कथं

नायनोत्कटोऽस्ति निश्चय इति चेत् कचित्तत्सहचरितधर्मा
दर्शनात् तदनुस्मरणात् क्वचिच्च साधारणधर्मदर्शनादिना
संशयस्यैव जननात् सति च विशेषदर्शनादावपि तत्त्वात्
पुरुषे तत् कथमन्यथा दृष्टो न वेत्यादिक संशय न हि
नाशो तद्विशिष्टबुद्धि न तन्निश्चय इति चेत् किं तेन उक्त
हि संशयत्वं निश्चयत्वञ्च न अन्यतावच्छेदकमिति अस्तु वा
तथा तथापि विशेषस्यादर्शनात् संशयस्यैव तद्दर्शनान्निश्चय
स्यापि सम्भवात् मा भूद्वा गायनादिरव श्रुतागमादिनिर्णयो
मानसम्तु स्यात् तत्र साधूक्तनियमस्यास्याप्त बाधितत्वादिति ।
उच्यते । अस्ति तावदनुमितौमीत्यनुव्यवसायसाक्षिको
ज्ञानविशेषो यत्र कारणमन्वयव्यतिरेकाभ्यां व्याप्यपरामर्श
मानसप्रत्यक्षविशेषोऽस्माविति चेत् कुतोऽस्य प्रत्यक्षमनुभव
स्यादिति चेत् किमेवमनुभवत्वमन्यत्प्रत्यक्षत्वात् ग्रन्त्वन्य
ज्ञानत्वमिति चेन्न प्रयोजकत्वात् अनुमितौ साक्षात्कारि
त्वप्रत्ययप्रसङ्गाच्च तद्युक्तकमानिकसन्निकर्षादिजन्यत्वविरहाच्च
तर्पति चेदाप्यनुमितौ तस्यापि सम्भवात् वह्निमनुमिनोमि
न तु साक्षात्करोमीत्यबाधितसाक्षात्कारत्वाभावप्रत्यय अ
गत्या तु सौरभं न पश्यामीत्यादावन्यथात्वकल्पन ज्ञानान्य
लक्षणानङ्गीकर्तृनये चाप्रसिद्धवस्त्वादिव्यक्तिकानुमितौ न
प्रत्यक्षत्वसम्भावनापि सन्निकर्षासम्भवात् एतेन प्राप्त्यादिक
व्याख्यातं व्यपव्यापयिष्यति तावदप्रसिद्धाभावसाध्यकानु
मितिमं च साक्षात्कारिणी तदोपनयस्यासम्भवात् एवञ्च

प्रसिद्धसाध्यकानुमितेरपि न साक्षात्त्वं जातिसङ्करप्रसङ्गादित्यपि केचित् तत्र भेदत्वादिनोपस्थिते जलादिप्रतियोगित्वग्रह इत्यपरे। मानाभावादिति तन्निष्ठावच्छेदकान्तरग्रहमन्तरेणासम्भवाच्चेत्यपि द्रष्टव्यम्। उपसंहरति तस्मादिति वाशब्दोऽनास्थायाम् उभयथापि प्रकृतात्तेः वस्तुतो व्याप्यपक्षयोर्वैशिष्ट्यावगाहिज्ञानत्वेन हेतुत्व विनिगमनाविरहेणान्यतरविशेषणविशेष्यभावस्यातन्त्रत्वात्। लाघवादिति अथाव्याप्यवृत्तेर्व्यापकत्वसम्पत्तयेऽभावस्य प्रतियोग्यसामानाधिकरण्यं वाच्यं तच्च स्वप्रतियोग्यनधिकरणवृत्तित्वम् एवञ्चावृत्तिगगनादेर्धर्म्मिमात्रव्यापकत्वं स्यात् तादृशघटत्वाद्यभावाप्रतियोगित्वात् तदधिकरणाप्रसिद्ध्या च तदभावस्य स्वप्रतियोग्यनधिकरणवृत्तित्वासम्भवात् तथा च तद्व्यावृत्तये व्यापके हेतुसमानाधिकरण्यं वाच्यं नचैवं हेतोर्व्यापकसामानाधिकरण्यापेक्षया लाघवमिति चेदस्तु तावदेवमापाततस्तथापि वृत्तिमत्त्वमात्रमुपादेयम्। तच्चैवं हेतोः साध्यसामानाधिकरण्यस्य संशये व्यतिरेकनिश्चये वा अनुमित्यापत्तिरिति वाच्यं संशये इष्टत्वात् व्यतिरेकनिश्चये च पक्षधर्म्मत्वाग्रहे परामर्शविरहात् तद्ग्रहे च साध्यासमानाधिकरणधर्म्मान्तरग्रहस्येव तस्यापि विरोधित्वात् अन्यथातिष्टत्वात् पर्वतो वह्निव्याप्यधूमवान् पाषाणमयः पाषाणमयावृत्तिश्च वह्निरिति ज्ञानेन च तुल्ययोगक्षेम पर्वतवृत्तिधूमव्यापको वह्निर्धूमवदवृत्तिश्चेति ज्ञानम्। न च साध्याप्रतियोगिकस्वसमानाधिकरणयावदत्य-

न्ताभावकत्वं साध्यप्रतियोगिकत्वावच्छेदकत्वसमानाधिकर
णात्यन्ताभावत्वकत्वं वा व्याप्तिः साध्यप्रतियोगित्वस्य केवलान्व
यिनि साध्यस्यान्योऽन्याभावे सम्बन्धविशेषावच्छिन्नात्यन्ताभावे
वा प्रसिद्धमिति वाच्यं गौरवात् व्यापकत्वाघटकस्याभावेन
यावत्त्वस्य दुर्वचत्वात् प्रमाणाभावेन स्वरूपसम्बन्धविशेषरूपत्वा
सम्भवेनावच्छेदकत्वस्यानतिरिक्तवृत्तित्वपर्यवसायितया व्या
पकतायाश्च प्रतियोगित्वादेः सामान्याभावस्याप्रसिद्धत्वात् सम्ब
न्धादिनिष्ठसाध्यप्रतियोगित्वव्यक्तेरभावस्य व्यभिचारिसाधन
समानाधिकरणयावदत्यन्ताभाववृत्तितया त्वयापि तस्यावश्य
वाच्यत्वात् साधनसमानाधिकरणात्यन्ताभावप्रतियोगितानव-
च्छेदकधर्मवत्त्वरूपव्यापकत्वज्ञानमपेक्ष्य साध्यवदन्यावृत्तित्व
ज्ञानस्य लघुत्वात् । तद्वृत्तितायाद्विना निरस्यति अतएवेत्या
दिना वीप्सासमभिव्याहारादिवशादुद्देश्य धर्मावच्छेदेरत्यन्ता
भावस्यान्योऽन्याभावस्य वा प्रतियोगित्वाभावो विधेयधर्मे
तद्वति वा भासते न तु विधेयधर्मतद्वतोरत्यन्तान्योऽन्याभा
वानधिकरणत्वमुद्देश्य धर्मवति यथा घटमिधेय तत्प्रमेयमित्या
दावसम्भवादिति भाव । साध्येति प्रयोगोऽभावप्रतियोगित्व
तथाच साध्ये साधनवन्निष्ठाभावप्रतियोगित्वस्यावच्छेदे-
त्यर्थ । व्यादिति न व्याप्त केवलान्वय्यनुमानमित्यपि द्रष्ट
व्यम् । न पक्षेति एतच्च विरोधस्यातिस्फुटत्वमभिसन्धाय
साध्याभाववद्वृत्तित्वबुद्धेरपि व्यापकताधीविरोधित्वादिति
वदन्ति । मानसप्रत्येति माथिकत्वाभिप्रायेण तेन प्रविष्ट

ब्दादिना क्वचिच्च साध्येन्द्रियसन्निकर्षात् परामर्शेऽपि न क्षतिः पक्षसाध्यसम्बन्धस्याग्रहात् ग्रहेऽप्यनुमित्साया अनुमितिसम्भवात्। व्यभिचारादिति न च यत्र यदुभयवैशिष्ट्यावगाहि ज्ञानं कारणं तत्र तदेकतरोपसर्ज्जनस्यान्यतरस्य जन्यज्ञाने प्राधान्येन न भानमिति वाच्यं मानाभावात् अत्र चेदमस्वरसवीजं पक्षधर्म्मसमानाधिकरणाभावप्रतियोगित्वेनाभावज्ञानं वह्न्यादावभ्रान्तमसम्भवितादृशप्रतियोगित्वप्रतियोगिताकाभावावगाहि चातिप्रसक्तं पक्षधर्म्मधूमसमानाधिकरणाभावप्रतियोगित्वेन च तज्ज्ञानं न व्यापकं येन रूपेण पक्षधर्म्मताग्रहस्तद्रूपावच्छिन्नव्यापकताज्ञानञ्च मीमांसकमतनिरासेनैव निरस्तमिति स्वर्गकामो यजेतेत्यादावन्वयबोधं शब्दमणिदीधितौ विवेचयिष्यामः।

परिचायकत्वं परिचेयव्यावर्त्तकत्वं तच्च नोपलक्षणतयेत्याह परिचेय इति। विशेषणतया तत्त्वे पुनराह तथाचेति। अवच्छेदकतामात्रेण चान्यथासिद्धावाह अन्यथेति। अपिचेत्यादि या यद्विशेषणसमानकालीनत्वेन तादृशी बुद्धिः सा ज्ञायमानतद्विशेषणजन्येति। सामान्यव्याप्तौ पक्षधर्मतासम्पत्तये धूमविशेषणिकेत्यादि तादूप्यस्यानुभविकत्वप्रदर्शनाय च धूमवानित्यादिज्ञायमानेति च तज्ज्ञानस्यापि जनकत्वलाभाय साध्यविशिष्टानुमितेः साध्याजन्यत्वाद्विशेषणसमानकालतयेति धूमकालीनवह्निमान् धूमध्वंसादित्यनुमितेः मजधून्यत्वात् विशिष्येति विशिष्य विशेषणभावापन्नं

समानकालीनत्वेन धर्मान्तरवैशिष्ट्यावगाहीत्यर्थं तदानीं
मवान् पर्वतो धूमकालीनवह्निमान् धूममवमयत्वादित्यादौ
विशेषणे विशेषणतापन्नस्यैव धूमस्य समानकालत्व वह्नौ
भाते नतु विशेष्ये तथात्वापन्नस्य अनुभवसिद्धोऽयं विशि
वैशिष्ट्याद्युक्तीनां विशेषणताविशेष विशेषण धर्मितावच्छे
क विशेष्यत्व विधेयम् तथाच विधेयतावच्छेदकावच्छिन्न
धर्मविशिष्टे तत्समानकालीनत्वेनावगाहते या अग्न्यादौ
दि' मा तद्धर्मसम्बन्धेति पर्य्यवसितोऽय धूमकालीनवह्नि
ानित्यादौ च विधेयतावच्छेदकधूमकालीनवह्नितावच्छिन्न
धूमकालीनत्वेन भासते परन्तु वह्नित्वावच्छिन्न धूमवामय
मकालीनवह्निमान् पर्वतो वह्निमानालोकादित्यादौ च न
मवत्त्वविशिष्टे धूमकालीनवह्निमत्त्व भासते किन्तु साध्य
ाशिष्टपक्षतावच्छेदकवति वह्निमत्त्व सम्बन्धमय्यादया तत्स
ानकालीनत्वमवगाहते इत्यपि यदस्ति। अथवा विशि
त्व व्याप्तसत्त्व तत्र तत्समानकालीनत्वप्रकारकत्व विशे
णविशेष्यपदे च धर्मद्वयमात्रोपदर्शके तथाचैकस्मिन् धर्मे
धर्मसमानकालत्वप्रकारजन्या या अग्न्यादौ तद्धर्मसमान
ालीनत्वधीः सा तत्समानतद्धर्मसम्बन्धेत्यर्थः एव न क्वापि
भिचारशङ्का साध्यस्य पक्षतावच्छेदकसमानकालीनत्व
ापि नानुमितिविषयो मानाभावात्। नवीननये तु
ग्न्यादि' पक्षतावच्छेदकत्वे तदवच्छिन्नत्व साध्यस्य भासत
त्यन्यदेतत् दण्डी पुरुषो गच्छतीत्यादिशाब्दधीवारणाय

अशाब्देति तुल्यन्यायतयोपनीतभानवारणाय तदन्यत्वमपि वाच्यमित्यपि वदन्ति एतन्नये चातीतत्वाग्रहेऽप्यतीतादिलिङ्गज्ञानान्नानुमितिरिति नातीतलिङ्गकालीनत्वावगाह्यनुमितौ व्यभिचारः कालोऽत्र वर्त्तमानो विवक्षितः तद्वैशिष्ट्यांशे च प्रमात्वं वाच्यं वर्त्तमानत्वं वा तादृशधर्म्मविशेषणमित्यपि कश्चित्। केचित्तु विशेषणं विशेष्यतावच्छेदक तथाच वर्त्तमानविशेष्यतावच्छेदकसमानकालीनतया धर्म्मान्तरवैशिष्ट्यावगाह्यशाब्दज्ञानत्वादित्यर्थः सतश्च पक्षतावच्छेदकस्य हेतुत्वमिष्टमेव समानकालीनत्वानुसरणन्तु ताद्रूप्यविषयत्वे प्रतिज्ञायमानविशेष्यतावच्छेदकजन्यत्वस्य प्रयोजकत्वसूचनायेत्याहुः। परामर्शएवेति न च कारणतावच्छेदकस्य तस्य न व्यापारता परामृश्यमाणत्वेन परामर्शाजननादिति वाच्यं व्यापारं प्रति रूपान्तरेण हेतुत्वेऽपि फलम्प्रति ताद्रूप्येण हेतुतायां विरोधाभावात् लिङ्गत्वेनैवानुमितिहेतुतापरामर्शस्तु व्यापारमात्रमित्यपि केचित्। परामर्शाविषयस्येति विनिगमनाविरहो विशेषणत्वं वा तस्य हेतुत्वे वीज नचेदमज्ञायमानेऽस्तीति भावः न च विशिष्टस्य कारणत्वं गृह्णत् प्रमाणं विशेषणतावच्छेदकावच्छेदेनापि तत्परिच्छिनत्ति तथाचापरामृश्यमाणस्यापि लिङ्गत्वेन हेतुत्वमविरुद्धमिति वाच्यं यतो हि लिङ्गत्वं न साध्यव्याप्यत्वादिकं तदप्रसिद्धावपि गगनाद्यनुमानात् नापि परामर्शविषयतावच्छेदकमात्रं तथा सति वस्तुमात्रस्य वानुमिति-

हेतुतापत्ते नचेद प्रामाणिकं तयान्वयव्यतिरेकादिविरहात् अन्यथेच्छाशाब्दबोधादिक प्रतीष्टसाधनताकाङ्क्षादिकुक्षि- निक्षिप्तस्य जगतएव हेतुतापत्ते न मा यामायां विनिगमना विरहोऽपि प्रमेयत्वादिना ज्ञानादपि लिङ्गादनुमित्यापत्ते व्याप्तिपक्षधर्मत्वेन ज्ञायमानयोर्मो च साधकत्वात्तादृशज्ञान त्वेनैव हेतुत्वात् । किञ्च कान्तासंसर्गयतादृशज्ञानविषयादपि लिङ्गादनुमितिप्रसङ्गः कारणतावच्छेदकायत्नोद्कारणसत्त्व स्यैव कार्योत्पत्तिनियामकत्वात्तु तद्विशिष्टसत्त्वस्यैव गौरवात् इतोऽपि च प्रतिबन्धकाभावादीनां न कारणतावच्छेदकत्व परामर्शविशिष्टसत्त्वस्य चात्र प्रयोजकत्वाभिधाने लाघवादा वश्यकत्वाच्च परामर्शस्यैव तथात्वं तत्र च नातिप्रसङ्गशङ्कापि । यथैव संयुक्तेन्द्रियादीन्द्रियसंयोगादौ कारणतायामपीदमेव विनिगमकं स्यादिति चेत्स्यादेव यदि न स्यातामिन्द्रियाद न्वतन्त्रान्वयव्यतिरेकौ स्यात्र व्यापारेण व्यापारिणोऽन्यथ धानम् न चानुमितिनाशे तौ लिङ्गस्य न चातीन्द्रियस्यापि तस्य परामर्शो व्यापार इति । अपि च चैत्रेण परामृश्य मानाल्लिङ्गादपरामृशतोऽपि मैत्रस्यानुमित्यापत्तिः मत्तात्तु रूपीयानुमितिं प्रति तत्तत्पुरुषपरामृश्यमानलिङ्गत्वेन हेतुत्वे चानन्तकार्यकारणभावप्रसङ्गः इच्छाद्वेषसुखदुःखस्मरणवि- शिष्टज्ञानशाब्दबोधादिषु ज्ञानेच्छाधर्माधर्मनिर्णयविशेषण • आत्मपदार्थज्ञानादीनामिवानुमितौ परामर्शस्याप्येकार्यप्रत्या सत्त्या हेतुत्वात्नातिप्रसङ्गशङ्कापीति कृतं पल्लवितेन । एवं

न्योऽन्याभावविशिष्टापरान्योऽन्याभावादिर्वर्त्तमान एव सर्वत्र हेतुः सम्भवतीत्यत आह यदि चेति। किन्तु तत्प्रागभाव इति तस्य च विरोधिकालावच्छेदेन व्याप्यत्वग्रहान्न तत्कालीनसाध्यसिद्धिरिति भावः। अपिचेत्याद्यभ्युपगमवादः नियतसामानाधिकरण्यरूपाया व्याप्तेः प्रागभावादौ दुरपवादत्वात् धूमप्रागभावत्वादिकं नावच्छेदकमिति चेत् किञ्चातः न चैतदपि व्याप्तेरवच्छिन्नत्वनियमात् परिशेषेण तस्यैव तथात्वात् अन्यथा धूमादिवृत्तिव्याप्तीनामपि धूमत्वादिकमवच्छेदकं न स्यात्। अथ स्वव्यापकसमानाधिकरणं व्याप्यं व्यापकत्वञ्च तद्धर्मविशिष्टसमानाधिकरणाभावप्रतियोगित्वाद्यवच्छिन्नप्रतियोगिताकाभाववत्त्वादिकं स च विशेषणं धर्मो व्याप्त्यवच्छेदकः न च धूमप्रागभावसमानाधिकरणाभावप्रतियोगितात्वादिकं प्रतियोगितावच्छेदकं गौरवादपि तु धूमसमानाधिकरणाभावप्रतियोगितात्वादिकमेव लाघवात् एवञ्च न धूमप्रागभावो व्याप्यो न वा तत्त्वं व्याप्त्यवच्छेदकम् अतएव प्रमेयधूमत्वादिकमपि नावच्छेदकमिति चेत् गतं तर्हि जातिसमनियतोपाधिगुणादीनां व्याप्यत्वेन लाघवेन गोजत्वादिनिष्ठाभावप्रतियोगितात्वादेरवच्छेदकत्वात् नतु सास्नास्नेहादिमन्निष्ठाभावप्रतियोगितात्वादेर्गौरवात् प्रस्थितञ्च गोत्वादिवृत्तिधर्माणामवच्छेदकत्वेन आपतितञ्च ते नीलधूमत्वादेर्व्याप्त्यवच्छेदकत्वेन नीलधूमसमानाधिकरणाभावप्रतियोगित्वाद्यभावस्यातिरिक्तत्वात्

प्रमेयधूमत्वादिना वह्न्याद्यव्यापकत्वार्थमिव च इत्यादिना व्याप्यत्वार्थमपि अनुगमसाधारणस्यावच्छेदकत्वस्योपादाने कृतमक्षुद्राम इति । तथाचेति तथैव च प्रसामान्यकारणस्य विशेषरूपेण हेतुत्व यत्र कम्पकारणतावच्छेदकमपेक्ष्य न गौरवम् अन्यथा विशेषकारणकमापविसयप्रसङ्गादिति भाव । धूमकामीनेत्यादि सामानाधिकरण्ये कामविशेष स्यापि सम्बन्धघटकतया प्रविष्टत्वादित्यर्थ । यद्वा यथेति कालिकदेशिकव्याप्तिद्वयज्ञानात्कामटेशयो साध्य सिध्य दसति बाधके लाघवादेकमेव सिध्यतीत्यपि वदन्ति । पक्ष तावच्छेदकेति पक्षतावच्छेदककामाद्यवच्छिन्नमित्यर्थ । किन्तु व्याप्तीति न च स्मरणात्मकपरामर्शस्थले तदसम्भव तत्र व्याप्तिविशिष्टानुभवस्य संस्कारद्वारा परामर्शहेतुत्वात् फलाजनकव्यापारस्य फलजनकव्यापारजनकत्वे विरोधाभा वात् । न च विशिष्टपरामर्शत्वेन न कारणत्व व्याप्तिज्ञानत्वेन च न तद्विशिष्टस्मृतिहेतुत्व न वा विशिष्टस्मृतित्वेनानुमिति हेतुत्वमिति वाच्यम् व्याप्तिविषयकज्ञानत्वस्मृतित्वाभ्यां वि शिष्टविषयकत्वत्वाभ्यां वा हेतुहेतुमद्भावेऽपि व्यापारव्यापा रिभावाविरोधात् न हि द्वारद्वारिणो फलजनकत्व येन रूपेण तेन रूपेण तयोर्मिथोहेतुहेतुमद्भावेऽपि नियमो मा माभावात् इन्द्रियतत्संयोगपदज्ञानपदार्थोपस्थित्यादिषु प्र- त्यक्षशाब्दादिकरणव्यापारेषु व्यभिचाराच्च नचैवं धारावाहन स्थले पूर्वपूर्वेषां विशेषणज्ञानानामुत्तरोत्तरतद्द्वारा शिष्ट-

प्रत्यक्षं प्रति कारणत्वाणत्ति' यं जनयित्वैव यस्य यज्जनकत्वं तस्यैव तत्र व्यापारत्वात् । यत्तु तथानियमेऽपि न चतिर्विशिष्टस्मृतेरपि व्याप्तिविशिष्टज्ञानतया विशेषणव्याप्तिविषयकेण पूर्वानुभवेन संस्कारेण वा जननाद्व्याप्तिविषयत्वेनैव कारणत्वादिति तन्न जन्यत्वविशेषितेन संशयसाधारणेन व्याप्तिविशिष्टज्ञानत्वेन तज्जन्यत्वात् नित्यसाधारणेन च व्याप्ति विशिष्टवैशिष्ट्यावगाहिपक्षनिश्चयत्वेनानुमितिहेतुत्वात् यदि च विशिष्टव्याप्तेः प्रथममनुपस्थितावपि विशेष्ये विशेषण तत्रापि विशेषणमितिरीत्या परामर्शादनुमितिस्तदा नियतपूर्वोपस्थितिकपदार्थोपस्थितेरेव कारणत्वं वाच्यम् । यत्तु परामर्शजनकत्वेन तत्तद्विशेषणज्ञानानां कारणत्वमिति तन्न अन्यम्प्रति पूर्ववर्त्तित्वं गृहीत्वैव तथात्वग्रहेणान्यथासिद्धत्वात् न च तत्र फलाननुगुणमन्यं प्रतीति वाच्यं गौरवात् न चैवं भ्रमिजनकत्वलक्षणं द्दढत्वमपि दण्डे घटजनकतावच्छेदकं न स्यादिष्टत्वात् दण्डत्वेनैव तथात्वात् क्वचिद्घटानुत्पादो भ्रमिरूपद्वारविरहात् क्षुद्रचक्रभ्रमिजननसमर्थान्महाचक्रमसमवहितादृण्डाद्घटानुत्पत्तौ तत्प्रयोजकताया आवश्यकत्वात् भ्रमिविशिष्टत्वेन च जनकत्वे चक्रादीनामपि पृथक्कारणत्वं न स्यान्नस्याच्च घटार्थितया दण्डे निष्कम्पा प्रवृत्तिः प्रथमं भ्रमेरुपधानानिर्णयात् अस्तु वा भ्रमिप्रयोजकोऽवयवसंयोगविशेषादिरेव तथा प्रथमोपस्थितत्वादावश्यकत्वाच्च अन्यथा घटजनकत्वेनैव भ्रमिजनकतां किमिति

त्वात् किं तर्हि मानसत्वे प्रयोजकमिति चेत् किन्नाम प्रयोजक कारणञ्चेन्न किञ्चित् कार्य्यञ्चेत्तत्प्रत्यक्षं व्यापकञ्चेत्प्रमेयत्वादि व्याप्यञ्चेत्तत्सामग्रीजन्यत्वादि तदवच्छिन्नोत्पत्तिनियामकञ्चेत्तत्सामग्री करणाभेदे कथं कार्य्यवैजात्यमिति चेत् सामग्रीवैलक्षण्यात् यथा मनःकरणकानामेव चिकीर्षा सुखादीनां यथावाग्निकरणकानां पाकजानां कथं तर्हि प्रमाणविभाग इति चेत् करणविशेषकक्रियावैजात्यविशेषादिति विभाव्यताम्। अपरे तु व्याप्तिज्ञानत्वेन विशिष्टपरामर्शत्वेन वा नानुमिति मात्रं प्रति हेतुता साध्यादिभेदेन व्याप्तेर्भेदात् किन्तु पक्षज्ञानत्वेनाभावज्ञानत्वेन ज्ञानत्वेन वा पक्षोऽपि धर्म्मिमात्रं पक्षताया अप्यननुगमात् तत्तपक्षतावच्छेदकविशिष्टवह्न्यनुमितिं प्रति तत्तद्विशिष्टे वह्निव्याप्यवत्तापरामर्शत्वेन हेतुतायां आवश्यकत्वे वह्न्यनुमितिमात्रं प्रत्यपि न सादृश्यपरामर्शत्वेन हेतुता गौरवात् किन्तु वह्निव्याप्तिज्ञानत्वेन लाघवात् वस्तुतो वह्निज्ञानत्वेनैव तथा अतिलाघवात् एवं वह्न्यभावानुमितिं प्रत्यपि एतेनानुमित्यन्तरं व्याख्यातमिति वदन्ति। इत पल्लवितेनेति।

केवलान्वयीत्यादि केवलान्वयिसाध्यकादीत्यर्थः। तत्र तेषु मध्ये असिद्धिपक्षम् अत्यन्ताभावाप्रतियोगिसाध्यक केवलान्वयि एवमगृहीतान्वयव्यतिरेकिसाध्यकं केवलव्यतिरेकिगृहीतान्वयव्यतिरेकिसाध्यकमन्वयव्यतिरेकि व्याप्तिग्राहकसहचाराभेदाद्भेदे त्वन्वयसहचारमात्रगृहीतव्याप्तिकत्वं

केवलान्वयित्वं तत्र प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्व व्यापकाश्रयसहचारत्वकत्व साध्यसहचारत्वव्यापकप्रकृत व्याप्ति घटकसहचारत्वकत्व वा गृहीतव्याप्तिभेदाद्धेदे तु प्रकृतहेतुकप्रकृतसाध्यानुमिति हेतुज्ञानविषयव्याप्तित्वव्याप कप्रकृतसाध्यव्याप्तित्वकत्व तत्त्वम् अन्नं निगन्ध पृथिवीत्व व्यापकाभावप्रतियोगित्वादित्यादौ हेतुतावच्छेदिका च व्याप्तिर्न प्रकृतसाध्यानुमित्यौपयिकी तद्विशिष्टपक्षधर्मताज्ञा नेऽपि व्याप्यत्वस्मरणार्थं विना निर्गन्धत्वानुमित्यनुदयादिति सा व्याप्ति यद्भावभावान् वह्निव्यापकाभावप्रतियोगित्वादित्या दावन्वयव्याप्तेरवच्छेदिका व्यतिरेकव्याप्तिर्न तु सैवेति नाम सङ्ग अतएवेतरव्यापकाभावप्रतियोगित्वे नाभावप्रतियोगित्वे न वा यत्किञ्चिज्ज्ञान न प्रकृतसाध्यानुमितिहेतुस्तत्केवलान्वयीत्यपि वदन्ति एव केवलव्यतिरेकित्वादिकमपि निर्वाच्यम् । अभिधे यत्व शब्दगमपन विपक्षव्याघातो विपक्षत्वासिद्धि । ननु व्याप्तत्वमन्योऽन्याभावप्रतियोगितावच्छेदकत्व तच्च लघु गुरुसाधारण गगनादिनिष्ठान्योऽन्याभावप्रतियोगितावच्छे दकत्वेति न व्यभिचार इत्यत आह । एवमिति । नन्वभाव- प्रतियोगित्वादिकमभावादिव्यक्तिभेदान्नानैव अनुगतव्यवहा रस्तु कथञ्चिद्विशिषणतावच्छेदकधर्मानुगमादेवेव सत्ख्या प्रसिद्धा लक्षणासम्भव इत्याशङ्कते तत्त्वेत्यादि । यत्र होत्या द्यभ्युपगमवाद यत्तो भूतलादिदेशे समये च तत्र वर्त्तमा- नत्वादाकाशाभावतुल्यत्वाच्च । अभावाभावस्येति सावधारणं

भावत्वात् यदाहुराचार्याः स्वाभावविरहात्मत्वं वस्तुनः प्रतियोगितेति प्रतियोग्येवेति प्रागभावादेरत्यन्ताभावाभावरूपत्वनयेऽपि न क्षतिः तन्मतेऽत्यन्ताभावस्यापि तदभावरूपतया तस्यापि प्रतियोगित्वात्। असाधारण इति प्रतियोगितावच्छेदक इति तु तत्त्वम् अथान्योऽन्यात्यन्ताभावसाधारणः प्रतियोगितावच्छेदकसम्बन्ध एवाभावाभावः स च क्वचित्तादात्म्यं क्वचिच्च संयोगादिरिति चेत् यद्वत्त्वे हि ज्ञाते यद्वत्त्वं न प्रतीयते तदभाववत्त्वञ्च व्यवह्रियते तस्यैव तदभावात्मकत्वमुपेयते प्रतियोगितदभाववत्त्वबुद्ध्योश्च मिथस्तथात्वमानुभविकं न च तत्सम्बन्धवत्त्वञ्च तद्विषयः सम्बन्धसम्बन्धवत्त्वाबुद्धिवत् क्वचित्सम्बन्धबुद्धिविशेषदर्शनतयोपयुज्यते न च स्वतो मानाभावात् अथ सम्बन्धान्तरावच्छिन्नाभाववति सम्बन्धान्तरेण प्रतियोगिनो वृत्तेर्न तदभावविरोधित्वमिति चेत् प्रतियोगितावच्छेदकसम्बन्धस्याभाववति सम्बन्धान्तरेण वृत्तेर्न तथात्वम् सम्बन्धविशेषेण च विरोधित्व तुल्यमेव अनतिप्रसक्तये च स्वप्रतियोगितावच्छेदकसम्बन्धत्वेनाभावत्वकल्पने क्वानुगमसम्भावनापीति व्यधिकरणसम्बन्धस्यापि प्रतियोगितावच्छेदकत्वात्तद्वत्यत्यन्ताभावविलयप्रसङ्गो भवतां तदभावविलोपप्रसङ्गो वेति। लक्षणम्परिष्कुरुते वृत्तिमदित्यादि आकाशस्य तदभावाभावत्वमित्यभ्युपगममात्रं भाववति तदभावासत्त्वप्रतीत्या हि भावस्य स्वाभावाभावत्वं कल्प्यते न चेह तथा अभावप्रतियोगित्व स्वरूपसम्बन्ध एवेत्युक्तमवस्तात् अभाव-

प्रतियोगित्वप्रयोजकम् एवञ्च यत्सम्बन्धावच्छिन्नप्रतियोगि-ताकाभावाप्रतियोगित्वं यस्य तस्य तेन सम्बन्धेन केवलान्वयित्वमिति फलितम्‌ वृत्तिमदिति अतएव ज्ञाताद्य ज्ञानत्वस्य च समवायेन ज्ञानविषयत्वादेश्च व्यधिकरणसमवाया दिना सम्बन्धेनाभावप्रतियोगित्वेऽपि विषयतया परम्परा सम्बन्धेन स्वरूपसम्बन्धेन च केवलान्वयित्वं संयोगाद्यभा वोपसङ्ग्रहाय च प्रतियोग्यसमानाधिकरणत्वेनाभावो विशेष्य ज्ञानाद्यभावोऽपि च तथा प्रतियोग्यसमानाधिकरणस्तयोश्च मध्यतात्‌ वृत्तिमतस्तादृशाभावाप्रतियोगित्वमितियार्थं व्या प्यवृत्तित्वार्थक वृत्तिमत्पदमभावविशेषणमित्यपि कश्चित् ता दात्म्येनाभिधेयस्य केवलान्वयित्वसम्पत्तये व्याप्तिवदत्रापिसमा-लोचनीयम् । प्रमाजातीयेति तथाच तादृशभावप्रतियोगिता नवच्छेदकधर्मवत्त्वमथ इत्यत्र प्रतियोगितावच्छेदकावच्छि न्नासामानाधिकरण्यमेवाभावविशेषणं तेन द्रव्यगुणभेदयोर्हि त्वादिना न केवलान्वयित्वम् । नचैवं विरुद्धयोर्धर्मयोर्द्वित्वेन केवलान्वयित्वापत्तिः तदवच्छिन्नाधिकरणाप्रसिद्धा तदव च्छिन्नाभावे प्रतियोग्यसामानाधिकरण्यस्यासम्भवादिति वाच्यं तादृशधर्मावच्छिन्नस्य यत्किञ्चिदधिकरणवृत्तिताया विवक्षितत्वात्‌ क्वचिदपि तादृशोभयवत्त्वाप्रतीतेस्तस्यास्तथा त्वात् । सन्दिग्धसाध्यवत्त्व पक्षत्वमित्याशयेनाशङ्कते तथापीति अस्थितसाध्यस्य घटवृत्तित्वसाध्यस्य साध्यसिद्धिविरोधी सा ध्यसिद्धिनिवर्त्त्य विशेषणविशेष्यभावभेदेऽपि विरोधिविषय

तामात्रेण प्रतिबन्धकत्वमनुभवबलादास्थीयते नहीदं साध्यवदत्र वा साध्यमित्येकतरनिश्चयेऽत्र साध्यं न वा इदं साध्यवन्न वेति अन्यतरः सन्देह इति। पक्षनिष्ठेत्यादि पक्षनिष्ठाभावप्रतियोगित्वज्ञानविरोधिज्ञानस्य साध्यसाधकत्वेन कथञ्चित्साध्यसिद्ध्यनुगुणत्वेन पक्षनिष्ठाभावप्रतियोगित्वज्ञानाभावस्य वा साध्यस्य साधकत्वेन तदभावस्य तस्य साध्ये पक्षनिष्ठाभावप्रतियोगित्वज्ञानस्य सध्ये पक्षनिष्ठाभावप्रतियोगित्वावगाहिज्ञानत्वेन साध्यविशिष्टपक्षज्ञानविरोधित्वेन वा रूपेणाभावस्य योग्यतात्वात् व्यतिरेकः विपक्षे हेतोरभावः व्यतिरेकव्याप्तौ साध्याभावहेत्वभावयोर्यौ व्यतिरेकौ साध्यहेतूतयोर्व्याप्तौ। अत्र वदन्ति साध्याभाववदवृत्तित्वमेव व्याप्तिर्लाघवात् प्रायशः साधनभेदेऽप्यभेदाच्च यत्सम्बन्धावच्छिन्नसाध्याभाववति हेतोरवृत्तित्वं गृह्यते तेन सम्बन्धेन साध्यसिद्धिः फलं साध्याभाववति येन सम्बन्धेन हेतोरवृत्तित्वं गृह्यते तेन सम्बन्धेन पक्षधर्मताधी कारणमिति नातिप्रसङ्गः आकाशादेस्तथात्वेऽपि पक्षधर्मताज्ञानविरहान्नानुमितिः निविशतां वा तत्र साध्यसामानाधिकरण्यं वृत्तिमत्त्वं वा अथ साध्याभाववदवृत्तित्वं तद्वृत्तिभिन्नत्वादिरूपं व्यभिचारज्ञानविरोधिज्ञानविषयत्वेनानुगमनीयं तच्च व्यापकसामानाधिकरण्यसाधारणमिति चेत् स्यादेवं यदि व्यापकताज्ञान व्यभिचारबुद्धिं विरुन्ध्यात् नचैवं वह्न्यभाववद्वृत्तिर्धूम इति ज्ञाने हि वह्नित्वं स्वरूपेण प्रतियोगित्वं

तदवच्छेदकत्वञ्च सम्बन्धमर्यादया भासते धूमसमा
नाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यपि च
वह्नित्वत्वेन वह्नित्वे प्रतियोगितात्वविशिष्टतदवच्छेदकत्वस्य
विशिष्टाभाव इति विषयविरोधविरहात् विशिष्टस्य वह्नि
त्वस्यानवच्छेदकत्वेन प्रकारान्तरानुसरणे च सुतरामपि
गमकादिस्वभावेन च प्रतिबन्ध्यतायां मानाभावात् व्यापकता-
ज्ञानादेरनुमितिरिति च नानुभविकं न वा यौक्तिकं ज्ञान
त्वत्वादिना ज्ञानत्वादेर्व्यापकतावच्छेदकत्वपक्षे ज्ञानादि
नामित्यनुमितेरयोगात् अन्यथा ज्ञानत्वेनानुभवत्वव्यापक
गुणत्वव्याप्यजातित्वादिना वा तथात्वपक्षेऽपि स्मरणात्
एतेन वैधर्म्यव्याप्तिमात्रज्ञानमेवानुमितिहेतुरित्यपि
परास्तम् । सर्वजनानुभवसिद्धानुमितिं प्रति धूमादिदर्शना
नन्तरं आत्मनि घटानात्मव्यतिरेकसाध्यादिज्ञानेऽनुगमाच्च
प्रमेयत्वस्येव घटादिभिन्नत्वस्य वैधर्म्यव्याप्त्वेन क्वचित्तत्-
दृष्टिधर्मव्यापकत्वेन वानुमेयं न तु ज्ञेयत्वादिहेतुकातदनु
मितिरनुभविकी एवं साध्याभावव्यापकाभावप्रतियोगित्व
मपि नानुमित्यौपयिकं गौरवात् व्यभिचारज्ञानाविरोधित्वाच्च
वह्न्यभावसमानाधिकरणाभावाप्रतियोगी धूमाभाव इति ज्ञान
धूमाभावाभावत्वेन तत्र वह्न्यभावसमानाधिकरणवृत्ति
कदाचिद्दिरन्वयात् न तु धूमत्वेन भिन्नप्रकारकत्वात् व्यति
रेकव्याप्तिग्रहाधीना च धीरनुमितित्वेनाननुभवात् कम
कारणाभावात् सामग्रीभेदकल्पनायामनुभवैकाधीनत्वात्

किन्तु विजातीयात्करणमपि प्रमाणान्तरमर्थापत्तिरेव क्लृप्तप्रमाणद्वयसजातीयसमशीलञ्च युगपदन्वयव्यतिरेकिधर्मद्वयप्रतिसन्धानम् अथ निर्णीतिं विना सिद्धीच्छामर्थापत्तेरनुत्पादात् पक्षताजन्यत्वात् साप्यनुमितिर्लाघवेन पक्षताजन्यत्वस्यैवानुमितित्वे प्रयोजकत्वात्। नचैवं पक्षताप्रत्यक्षस्यापि तथात्वापत्तिरिच्छासत्त्वेऽपि कालान्तरे प्रदेशान्तरे वा तद्विरहसत्त्वेनैककालीनत्वाद्यतीन्द्रियघटितप्रतियोगित्वेन तस्या अतीन्द्रियत्वादिति चेन्न अनुमितावेव पक्षताया हेतुत्वस्य निरस्तत्वात् साध्यादिभेदेनाननुगतत्वात् तज्जन्यत्वस्याप्रयोजकत्वाच्च प्रयोजकत्वञ्च न जनकत्वमसम्भवात् न व्याप्यत्वं मानाभावादित्यादेरसकृदावेदितत्वाच्च एतेन व्याप्तिज्ञानादिजन्यत्वमनुमितित्वे प्रयोजकमित्यपि परास्तम्। साध्याभावव्यापकाभावप्रतियोगिधर्मत्वेन साध्यव्याप्यत्वानुमानात् प्रसिद्धसाध्यकैवानुमितिरित्यपि केचित्। अथ वह्न्याद्यभाववति धूमादेः समवायेन तन्तुत्वाद्यभाववति च पटादेः संयोगेन वर्त्तमानत्वात् साध्याभाववति स्वसंयोगेन समवायादिना वर्त्तमानत्वस्य विशिष्यैवाभावो वाच्यः तथाच जलं जातिमत् गुणवत्त्वात् गुणवच्च घटादेरित्यादिकं विलीयेत जातिगुणाभाववतोः समवेतत्वसंयोगित्वयोरप्रसिद्धेरिति चेदुपदर्शयेनमपि केवलान्वयिनः सरणिं स्वीकुरु वा स्वाधिकरणावृत्तिसाध्याभावादिकत्वमेव व्याप्तिं स्वत्वाननुगमस्य प्रागेव स्वच्छितत्वादिति एतेन नीलेतररूपवान् नीलासमवेतत्वे

सति गोत्वादित्यादिकं विभावयेत विशेष्यस्य व्यभिचारित्वात् विशिष्टस्य चाननिरूपित्वादिति परास्त साध्याभावस्य विशिष्टस्यैत्वधिकरणासिद्धत्वात् परम्परासम्बन्धेन विशेषणविशिष्टसम्बन्धस्यैव वा तत्र हेतुत्वादिति। व्याप्तिग्रह इति साधारणोक्ति तत्र फलमात्मविरूपभावाय अाप्यव्याप्यत्व सद्यदन्याहसिद्धादिरूपमस्मत साध्यस्य प्रसिद्धम्। निरपायीति उपाधिज्ञानादित्यभिचारनिरासाय पृथिवीत्वमिति पृथिवीत्वमितरभेदसाध्यमित्यस्य हि पृथिवीत्वविशिष्टे पृथिवीत्वे इतरभेदसामानाधिकरण्य भासते पृथिवीतरभिन्नत्वस्य गृहपृथिवीत्वविशिष्टे तदवच्छेदेनेतरभेद इति न सिद्धसाधनमित्यर्थः सर्वेति च पृथिवीत्वव्यापकच्छेदकत्वस्फोरणाय यत्र च पृथिवीत्व पृथिवीतरसमवेतत्वमात्र न तु पृथिवीवृत्तित्वघटितमित्यतोऽपि गोपनयवैयर्थ्यम्। यथा व्यव्याप्तिघटकताधटार्थोपस्थित्यादिक विना न तद्ग्रह सम्भवस्तथात्वे च तत एव व्याप्तिग्रहसम्भवे व्यतिरेकसहचारज्ञानस्य हेतुत्वे मानाभाव न च व्यभिचारशङ्कानिवर्त्तकत्वेनैवान्वय व्यतिरेकसहचारयोरुपयोगित्व तद्ग्रहेऽपि तज्ज्ञातादवस्थात् अधिकरणविशेषे च दर्शितयोः साध्यवत्त्वसाधनाभाववत्त्वयोरन्यतरग्रहस्यैव तन्मात्रात् व्यतिरेकव्याप्त्युपन्यासेऽर्थान्तरादितादवस्थ्याच। यत्तु सहचारमात्रसाभाव्यैव सर्वत्रोदाहरणोपन्यास इति तन्न भर्वान्तराद्यापत्तेर्दुर्वारत्वात् यच्छब्दादिवैयर्थ्याच्च व्युत्पादयिष्यते च तस्य

व्याप्तिबोधकत्वम । नचान्वयिन इव व्यतिरेकिणोऽप्युदाहर-णात् स्वरससिद्धान्वयव्याप्तिधीरानुभविकी येन तदर्थमपि प्रकारान्तरमास्थेयमत आह यद्वेति । साध्याभावेति नन्वि-च्छादौ साध्ये आत्मत्वादेर्व्यतिरेकित्वं न स्यात् स्याच्च संयो-गादेरात्मत्वे तथात्वमिति चेन्न । साध्यतावच्छेदकावच्छिन्नसा-धनासमानाधिकरणत्वेन साध्याभावस्य साधनतावच्छेदकाव-च्छिन्न साधनासमानाधिकरणत्वेन च साधनाभावस्य विशेषि-तत्वात् संयोगाभावे साध्ये विभागाभावः केवलान्वयी प्रतियो-गिवैयधिकरण्यावच्छिन्ने च तत्र स तादृशो व्यतिरेक्यपि व्या-प्यव्यापकभावश्च साध्याभावत्वसाधनाभावत्वाभ्यां बोध्यस्तेन न व्यभिचारिण्यतिप्रसङ्गः साध्याभावत्वादिकञ्च वैज्ञानिकं न तु वास्तवं तेन मेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिभ्रमादनुमा-नम् । व्यापकीयत्वेनाभावस्य ज्ञानाद्व्याप्यीयत्वेनाभावस्य सिद्धिं पुनरप्रसिद्धसाध्यकसाधारणीमाह व्यापकाभावेने-त्यादि अभावो अभाववत्त्वनिश्चयो अवश्यम्भावश्चासति प्रति-बन्धके अत्र च यद्रूपावच्छिन्नं प्रति व्यापकता गृह्यते तद्रूपा-वच्छिन्नीयत्वेनाभावसिद्धिः फलं येन रूपेण व्यापकता गृह्यते तद्रूपावच्छिन्नीयत्वेन व्यापकत्वविशिष्टतत्तद्रूपाव-च्छिन्नीयत्वेन चाभाववत्ताज्ञानं हेतुरिति मन्तव्यं व्यापक-प्रतियोगिकस्याभावस्यातिप्रसक्तत्वात् व्यापकत्वावच्छिन्नप्रति-योगिताकस्य च सम्बन्धविशेषावच्छिन्नस्य सम्भवतोऽप्यसार्व-त्रिकत्वात् कारणानुगमः परम्परिचिन्तनीयः एवञ्च वह्नि-

धूमव्यापकीवह्न्यभाववांश्चायमिति ज्ञानाद्धूमव्यापकवह्न्यभाव
वानयमिति ज्ञानाद्वा निर्धूमोऽयमितिधीरिति धूमव्यापक-
तावच्छेदकावच्छिन्नप्रतियोगिताकाभाववानयमिति ज्ञाना
दित्यपि कश्चित्। व्याप्तिज्ञानस्येति अत्र व्याप्तिपदेनान्वय
व्यतिरेकव्यापकतावच्छनियतविषयताकोऽर्थोऽभिमत पक्षस्य
पक्षतावच्छेदकस्य वा ज्ञानमनुमितिमात्रे हेतुरित्यपि व
दन्ति। अन्वयीति अन्वयिनि ताद्रूप्येण वह्नित्वादिना व्यति-
रेकिणि तु इतरप्रतियोगिकत्वेन वह्न्यभावादिनिषेधतया
सिद्धिरित्यनुभवसिद्धः कार्यगतो विशेषः कारणविशेषजन्य
तावच्छेदक अतएव तत्र तत्र सर्वत्र व्यतिरेकिणि तस्मान्न
तथेत्येव निगमनशरीरम् अन्वयिना वह्न्यभावेन धूमाभाव
सिद्धौ धूमाभावस्य प्रकारः व्यतिरेकिणि तु तत्सिद्धौ प्र
त्यक्ष इव प्रतियोगितया धूमः प्रकार इति वदन्ति इत्यत्र
ह्रदो धूमाभाववान् वा पर्वतो वह्निमान् नवेत्यादिजिज्ञा
सायां विप्रतिपत्त्यादुद्देश्यायां साध्यतावच्छेदकरूपेण
साध्यवत्त्वप्रतीतेरनुपयोगिनो व्यतिरेक्युदाहरणादेः कथ
मवतार इति विभावनीयम्। केचित्तु अन्वयव्याप्तिज्ञाना
नन्तरत्वादिकमेवानन्यगतिकतया जन्यतावच्छेदकमित्याहुः।
अन्यतरत्वेन तादृशपरामर्शयोः कारणत्वमित्यपि कश्चित्।

उचितानुपूर्वीक प्रतिज्ञादिपञ्चकसमुदायस्य न्यायस्य
प्रतिज्ञात्वादिकं पुनरुदासीनवाक्यवारकन्यायान्तर्गतत्वमू
न्यमेवोपादेयमिति नाम्योऽन्यास्य साध्यादिविशेषेनिय

न्वितार्थ प्रतिज्ञादयो वाच्या इति न भिन्नसाध्यादिकप्रतिज्ञादिसमुदायेऽतिव्याप्तिः व्याप्त्यादेरिव साध्याद्यननुगमाद्ननुगमो न्यायादेरोऽस्त एव एतेन प्रतिज्ञानिगमनयोरुदाहरणावयवान्तरयोश्च न सम्भूयैकार्थप्रतिपादकत्वं प्रागेव तु पञ्चानामवयवानां परन्तु प्रतिज्ञाहेत्वोः कथञ्चिदुपनयनिगमनयोरेकवाक्यताव्यवहारस्तु विशिष्टैकार्थप्रतिपत्तिपरतामात्रेण तादृशपरामर्शप्रयोजकत्वञ्च यदि तद्विषयतत्पदार्थसार्थोपस्थापकतया तदोदाहरणोपनययोरेव तत्पर्यवस्यति अथ तदानुकूल्यमात्रेण तदा को वह्निमान् पर्वतो वह्निमान् कुतो धूमवत्त्वादित्यादेरपि तथात्वमित्यादिक समाहितम्। अवयवत्वन्तु न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वं प्रतिज्ञाद्यघटकत्वे सति उभयघटकभागद्वयाघटितत्वं वा वक्तव्यम् उभयञ्च प्रतिज्ञाहेतुहेतूदाहरणे उदाहरणोपनयावुपनयनिगमने इति विशिष्य वक्तव्यमिति प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थविषयकज्ञानपञ्चकान्यतमज्ञानजनकवाक्यत्वं तत्त्वमित्यपि केचित्। तस्यैवेति तथाच तादृशजातौ साधकाभाव इति भावः। बाधकमप्याह अन्यथेति न्यायजन्यज्ञाने पञ्चावयवजन्यत्वात् पञ्चहित्यादिजन्ये द्वित्र्याद्या एकैक जन्ये चैकैकाजातय इति सङ्कर इत्यर्थः तच्च तत्र भिन्नभिन्नजातिकल्पने सुतरां मानाभावादिति भावः। केचित्तु यदि चानुगतं कारणमन्तरेणापि तादृश जातिमत्त्वसम्भवस्तदा कदाचित् प्रतिज्ञादिजन्येऽपि हेत्वा-

न्यष्टत्तिहेत्वादिजन्ये च प्रतिज्ञादिजन्यष्टत्तिर्जाति
दिति सङ्कर इत्यर्थः एवं सर्वेषां सर्वजातीयत्वमेकज्ञा
नस्य वा स्यादित्यपि द्रष्टव्यमित्याहुः। साध्यनिर्देश
त्रेति सप्तम् साध्यो विधेयधर्मविशिष्टो धर्मी तथा च
तावच्छेदकपर्यन्तमादिविशिष्टे साध्यतावच्छेदकवह्निमत्वा
विशिष्टवैशिष्ट्यज्ञानजनको न्यायावयव इति पर्य्यवसि-
र्थः उदाहरणाय साध्यतावच्छेदकविशिष्टज्ञान न
तावच्छेदकविशिष्टे उपनयाय पक्षतावच्छेदकविशिष्टे
साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानमिति तयोर्दासः ।
न्वित्यादि प्रकृतयावयवभिन्नं तवावयववारणाय सत्यन्त
प्रकृतन्यायावयवत्वपर्य्यवसितार्थकम् । उद्देश्येति प्रकृते
र्थः वह्निसाध्यकन्यायोपनयस्य वह्निव्याप्यधूमसाध्यकानु
त्वन्यूनानतिरिक्तविषयकज्ञानजनकस्य वारणाय प्रकृत
य तथाच यादृशसाध्यपक्षकन्यायावयवत्वं तादृशसाध्यपक्ष
ानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्व पर्य्य
सितार्थः । धूमादालोकवान् पर्वतो वह्निमान् धूमादि
ाद्यावनतिरिक्तविषयकज्ञानजनकस्य हेतोर्वारणाय अन्यू-
ेति निगमनवारणाय अनतिरिक्तेति यद्यपि निगमने
ाध्यात्पक्षबाधक पदं न श्रूयते तथापि न्यूनताभङ्गायोप
यस्यायमादिपदस्यानुषङ्गस्तथा बोध्यम् इत्थमेव च प्रस-
ामतिप्रसक्ति निगमनश्चेत्यादिना निराकरिष्यति तद-
ाय निगमनमन्यूनानतिरिक्तविषयकज्ञानजनकं सत्र परा

मर्शहेतुर्येन निरुक्तन्यायावयवत्वरूपं प्रतिज्ञात्वं तदपि व्याप्तुयात् अबाधितत्वादेस्तद्बोधौपयिकविशिष्टहेतुसम्बन्धस्य च बोधकतया तस्यातिरिक्तविषयकज्ञानजनकत्वादिति । यत् पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ यन्न पृथिवीतरेभ्यो भिद्यते न तत् पृथिवीत्युदाहरणवारणाय तदिति तत्तुच्छम् तेन पृथिव्यामितरभेदस्याविषयीकरणात् तात्पर्य्यभ्रमेण तादृशबोधजनकत्वस्यातिप्रसक्तत्वात् न च तावताप्युदाहरणस्य तथात्वसम्भवो यन्नेत्यादेरनन्वयात् यदि च निगमनेनायमादिपदं निविशते वाक्यैकवाक्यतयैव विशिष्टलाभादिति विभाव्यते तदा हेतौ साध्यसामानाधिकरण्यभाने सामान्यतः पक्षेऽपि साध्यवत्त्वभानात् पक्षे हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतुमत्ताबोधकस्योपनयस्य यत्र च पक्षसाध्ययोस्ताद्रूप्येण दृष्टान्तत्वहेतुत्वाभ्यामुपन्यासस्तादृशसिषाधयिषया च न्यायप्रयोगस्तत्रोदाहरणोपनययोर्यत्र वा पर्वतत्वाद्यवच्छेदेन साध्यसिद्धेरुद्देश्यतायामितरपर्वतत्वादिना दृष्टान्तस्योपन्यासस्तत्रोदाहरणस्य सत्यन्तस्य चावयवाघटकन्यायान्तर्गतत्वपरतया हेत्वन्तस्यायमादिनिगमनान्तभागस्य वारणाय तत् यद्यपि सर्वमभिधेयं प्रमेयमित्यादावतिरिक्ताप्रसिद्धिर्न च कोऽप्यप्रसिद्धा प्रमेयं न वेति विप्रतिपत्तेः संशयस्य चायोगान्न तादृशी प्रतिज्ञा प्रकृतानुमितिविषयतासमव्याप्तविषयताकत्वं प्रकृतानुमितिप्रकारतासमव्याप्तप्रकारताकत्वं वा वक्तव्यमिति वाच्यम् सकल

भिधेयत्वविधर्म्मवत्त्वकमभिधेयमित्याद्यन्याभावायामसियोग्या-
काद्याभाववद्वा इदं द्रव्यमित्यादौ विशिष्टपक्षबोधके उपनयेऽ
तिव्याप्ते तथापि प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यविषयत्व
तदन्यूनविषयत्व प्रकृतपक्षधर्म्यर्थपक्षकप्रतिज्ञादिघटके तु पक्षे
प्रकृतन्ययस्य वैशिष्ट्यबोधका हेतुर्न तु प्रकृतसाध्यस्य तादृश
विषयताविलक्षणविषयताशून्यस्य प्रकृतहेतुकप्रकृतसाध्यसि-
द्धौपयिकव्याप्तिविषयकत्व वा तदनतिरिक्तविषयत्व वह्नि-
व्याप्यत्वोपकवत्त्वधर्म्मा पर्वतो वह्निमान् धूमादिन्धनव्याप्य-
धूमवान् पर्वतो वह्निमान धूमादित्यादौ तस्या सम्प्रदाय
प्रकृतहेतुसाध्ययोरुपादान वह्निव्याप्यधूमवान् पर्वतो वह्नि-
मान् धूमात् सत्तादिव्याप्यद्रव्यत्ववदिदं सत्तादिमद्द्रव्यत्वा
दित्यादिषु न प्रयोग विशिष्टपक्षोपस्थापकादेव तादृश
व्याप्तिमतोऽसावाकाङ्क्षाविरहेणोदाहरणानुत्थानात् अन्यथा
तिप्रसङ्गात् अतएव नैकदोभयव्याप्त्युपन्यासोऽपि वह्नि मैव
पक्षति अथ गौरित्यादेरेव प्रतिज्ञाया ययोपदर्शितविशिष्ट
ज्ञानजनकस्य तादात्म्येन गो साध्यत्वात् गोत्वस्याद्यनुपस्थित्या
गोत्वादि साध्यत्वानुपपत्ते पदार्थतावच्छेदकमात्रो हेतुर्वा
व्यवायोगाय वह्निमानित्यादौ पुनरनुमितौ पक्षे साध्यस्य
वह्नेः संयोगात्मक सम्बन्धो भासते यथैव वह्निव्याप्यधूमवा
नित्याद्युपनयप्रसङ्गात् शाब्दभाने तु वह्निमतोऽभेद एवं
भेदे साध्ये भिन्नवत् भिन्नमित्यादावपि वैलक्षण्यमिति सूक्ष्म
मीक्षते तदा यादृशपक्षसाध्यिका पक्षे यादृशयादृशविशिष्टार्थ

बोधिकाः प्रतिज्ञाः सम्प्रदायप्रसिद्धाः तादृशानां बोधाना-मन्यतमेनाप्यनिवर्त्त्यस्य संशयस्यानिवर्त्तको यस्तावद्बोधाना-मन्यतमो बोधस्तज्जनकत्वं वक्तव्यम् एवञ्च तादात्म्येन गवि साध्ये पक्षे गवाभेदस्य संयोगेन समवायेन वा वह्नौ वह्निमद्भेदस्य समवायेन पाकस्य कृतौ पाककृतिमत्त्वस्य पाककर्त्रभेदस्य विशेषणतयेतरेभ्यो भेदे इतरभेदवत्त्ववत्त्व-स्येतरान्याभेदस्येतरभेदवत्त्वस्येतरभिन्नाभेदस्य च बोधा विशिष्य वक्तव्या इति दिक् तावद्बोधानिवर्त्त्य संशयानिवर्त्तक तावद्बोधनिवर्त्त्य यावत्संशयनिवर्त्तकबोधजनकत्वं वाच्यमि-त्यपि कश्चित् । चैत्रः पचति घटो नेतराणीति प्रतिज्ञायां साध्ये विषयित्वानुयोगित्वयोः सम्बन्धविधयैवानुप्रवेशाद्यथो-पदर्शितसाध्यगमकतौपयिकव्याप्तिविशिष्टहेतुमत्त्वस्य च पक्षे उपनेयत्वात् तथाचायमित्याकारः सूत्र एव प्राचामुपनयः नव्यानां पुनरनन्यगतिकतया तद्व्याप्यहेतुमांस्तद्वान् वेत्या-कारः योग्यतावशाच्च तदा साध्यस्य तद्व्याप्यस्य वा परामर्शः । केचित्तु वह्निमान्नवेति विप्रतिपत्तौ तदधीनसंशये च वह्नि-मत्तदन्योऽन्याभावयोस्तादात्म्यविशेषणत्वाभ्यां कोटित्वेन जिज्ञासितत्वात्तादात्म्येन वह्निमानेव साधयितुमुचितो नतु वह्निः अजिज्ञासितत्वात् तथा च तथा चायमित्याकारो वह्निमद्व्याप्यो धूमवांश्चायमित्याकारो वा उपनयो न तु वह्निव्याप्यधूमवांश्चायमित्याकारोऽर्थान्तरत्वादिति प्राहुः । यत्र चान्तरा तादृशबोधो न जातस्तत्रापि तादृशाकाङ्क्षा-

योग्यत्वादिघटितस्वरूप तज्जननयोग्यत्वमचत तमाभव जाति विशेषोपस्थापकत्वात्स्वाक्यशब्दयोरुपसन्दानादेवेति । अन्यूने त्यादि तथा चोद्देश्यानुमितिसमानविषयकलिङ्गाविषयकत्वा न्द्र्ज्ञानजनकन्यायावयवत्वमर्थं व्यतिरेकिणि ह्रदो निर्धूम इ त्यादौ निर्वह्निवहेतुके यथा ह्रदभिन्नमित्यादि दृष्टान्तमतो ह्रदावृत्तिधर्मशून्यत्वादिहेतुके योदाहरणस्य वारणाय समा नविषयकान्त पक्षविशेष्यकार्थकम् उपनयवारणाय लिङ्गावि षयकेति । यद्यपि प्रकृतलिङ्गाविषयत्व पृथिवीतरेभ्यो भिद्यते पृथिवीत्वात् गन्धवती तथा गन्धादित्यादावव्यापक न चात्रोपनयासम्भव इदमागन्धवत्त्वेन परामृष्टे हेतुभूतगन्धव त्त्वान्वयायोगादिति वाच्यम् साध्याभावव्यापकगन्धाभावाभा वत्वे नान्वयात् अतएव व्यतिरेकिणि न च नेय पृथिवीत्या दिक' प्रायो प्रयोग' यदि च दण्डवान् रक्तदण्डवानित्यत्रा न्वयोगानुपपन्नस्तद्विशिष्टे गुणभूतविशिष्टान्वयस्यैवाव्युत्पन्न त्वादित्युपेयते तदा नानुपपत्तिगन्धोऽपि पक्षाविशेषणत्वेन तदविषयत्वञ्चायं वह्निसामग्रीमान् वह्नेरित्यादौ पक्षाविशे षणत्वेन साध्याविशेषणत्वेन च तदविषयत्व दधि द्रव्य दध्न प्रमेयत्वमभिधेयं प्रमेयत्वात् गोत्वाभावो न साक्षादिमान् गोत्वाभावादित्यादावव्यापकमतिव्यापकश्चोपनयस्य तथापि पक्षतावच्छेदकविशिष्टपक्षे यत्साध्यतावच्छेदकविशिष्टसाध्य- वैशिष्ट्यावगाहित्व तद्विशिष्टत्वेन लिङ्गविषयत्वस्याभावो वाच्य वस्तुतो लिङ्ग लिङ्गत्व तयाच प्रकृतहेतुतावच्छेदकावच्छि

न्नस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नगमकतौपयिकं यद्-
व्याप्तिविषयत्वं तच्छून्यत्वमर्थः तच्च हेतौ साध्यव्याप्यताव-
गाहित्वम् हेतुभूताभावप्रतियोगितावच्छेदकावच्छिन्ने साध्या-
भावव्यापकतावगाहित्वञ्च द्रव्यत्वव्याप्यसंयोगवद्दृत्तिधर्मवानयं
द्रव्यत्ववान् गुणात् गुणव्याप्यरूपवानय स्पर्शवान् रूपादि-
त्यादौ प्रतिज्ञासंग्रहायावच्छेदकद्वयोपादानम् अन्यूना-
नतिरिक्तपदमिति च मूलमुद्देश्यानुमित्यन्यूनानतिरिक्तवि-
षयभागपरं हेतुत्वमभिधेयं मेयत्वादित्यादौ पञ्चम्यर्थपञ्चक-
हेतुवारणाय पञ्चम्यन्तान्यत्वस्य हेत्वन्यत्वस्य वावश्यं वाच्य-
त्वात् संख्यातिरिक्तसुबर्थस्य प्रातिपदिकार्थे विशेष्यत्वेनैवा-
न्वयात् प्रातिपदिकार्थयोः क्रियाप्रातिपदिकार्थयोश्च भेदेन
साक्षादन्वयस्याव्युत्पत्तेर्वक्ष्यमाणत्वात् चैत्रस्येदं न मैत्रस्य
मैत्रस्येदं न चैत्रस्य द्वयोरिदं नेदमेकस्यापीत्यादौ चैत्रादि-
सम्बन्धाभावबोधस्य विना विभक्त्यर्थविशेष्यतामनुपपत्तेः
चैत्रो न पचतीत्यादौ तिङर्थस्येव विनाप्यनुयोगिनि सप्तमीं
सुबर्थस्याप्यभावान्वयात् हेतुविषयकज्ञानजनकत्वव्याप्याव-
यवतावच्छेदकरूपशून्यत्वे सत्युदाहरणान्यन्यायावयवत्व त-
त्त्वम् तादृशञ्चावच्छेदक हेतुत्वादिकमिति केचित् । हेत्व-
भिधानेति जिज्ञासाजनकत्व तद्योग्यतावाश्रयत्वं न्यायावय-
वत्वम् । लिङ्गेत्यादि लिङ्गाविषयेति पूर्वोपदर्शितार्थकम्
अभावहेतुकव्यतिरेक्युदाहरणवारणाय लिङ्गीति लिङ्गिसाध्यं
तद्विषयकं तद्वद्विशेष्यकं तेनेदं जलं निःस्नेहत्वप्रकारकप्रमा-

विषयत्वशून्यत्वात् इदं द्रव्यं जलान्यत्वप्रकारकप्रमाविषयत्व शून्यत्वादित्यादौ यत्र जले तद्विशेष्यत्वप्रकारकप्रमाविषय त्वाद्युदाहरणे नातिप्रसङ्गः। लिङ्गाविषयेत्यस्य पूर्वोक्त व्याप्यत्वाविषयार्थकत्वे हेतुवारणाय लिङ्गेति लिङ्गवि षयत्वस्य प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्व विषयत्वावच्छिन्नभावेन वाच्य तेन वह्निमान् वह्निमद्धर्मवत्त्वात् अयं हेतुरिदं वा हेतुत्वं तत्त्वेन प्रतीयमानत्वादित्यादौ हेतौ नातिप्रसङ्गः लिङ्गविषयकज्ञानजनकत्वानियतलिङ्ग विषयकज्ञानजनकत्वनियतावयवतावच्छेदकरूपवत्त्वं तत्त्व मित्यादिकं तादृशावच्छेदकरूपान्तरापरिचये दुर्ग्रहत्वा- दनुपादेयम्। अनुमितीत्यादि जलकान्त न्यायावयवार्थक निगमनवारणाय साध्याविषयेत्यादि साध्याविषयत्वस्य प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयतावच्छि न्नभावेन पूर्वोपदर्शितसाध्यापरम्परासाधारणप्रकृतपक्षविशेषण त्वेन वा तेन पूर्वोपदर्शितहेतौ साध्यासिद्धिः इदं न दण्डाभाव दण्डसंयोगाजन्यद्रव्यत्वात् अयं न धूमादालोकवान् आर्द्रे- न्धनशून्यत्वादित्यादौ व्यतिरेकिण्युदाहरणस्य हेतुत्वपक्षक साध्याभिमतार्थबोधकेदंपदशालिन उपनयस्य च वारणाय हेतुविभक्तिमदिति तदर्थस्य प्रकृतसाध्यान्वयबोधकसमार्थोप स्थितिजनकत्वं [illegible] नेति सम्पातायातम्। यदि च पर्वते पर्वतभिन्नप्रकारकज्ञानस्य विशेष्यतया अभावस्य साध्यत्वं हेतुत्वस्य सिषाधयिषया च न्यायप्रयोगस्तत यथा

तादृशज्ञानाभावादुत्पन्नं ज्ञानमिति दृष्टान्तशालिनि व्यति-रेक्युदाहरणेऽतिव्याप्तिरित्युच्यते तदावयवान्तरोपस्थितार्थान्वितस्वार्थबोधकविभक्तिमत्त्वं वक्तव्यम् उदाहरणान्यत्वेन वा विशेषणीयम् । केचित्तु साध्यविषयकधीजनकत्वानियतहेतु-विभक्तिमत्त्वनियतावयवतावच्छेदकरूपवत्वं समुदितलक्षणार्थं इत्याहुस्तच्चिन्त्यम् । हेतुत्वप्रतिपादकेति विभक्त्यर्थः हेतुत्वविशिष्यकान्वयबोधजनकन्यायावयवत्वमित्यर्थः हेतुत्वं प्रमेयमित्यादिप्रतिज्ञावारणाय विभक्त्यर्थेति तस्मादितरेभ्यो भिद्यते इत्यादि निगमनवारणाय हेतुत्वेति विशेष्येति च । घटो दण्डाद्वह्निधूमादित्यादिका तु न प्रतिज्ञा तद्वृत्तेरतदात्मनश्च तद्धर्मव्यापकत्वायोगात् सम्प्रदायविरोधाच्च तेन तन्न्यनिगमने नातिव्याप्तिरिति भावः । उदाहरणेति क्वचिज्जिज्ञासानुत्पादेऽपि तद्योग्यतासत्त्वान्नाव्याप्तिः अनुक्तोदाहरणस्थलेऽपि तादृशयोग्यतासत्त्वान्न्यायावयवेति उदाहरणत्वञ्चेह न न्यायगर्भं वैयर्थ्यात् । साध्याविषयेत्यादि अयं न दण्डाद्दण्डसयोगाजन्यद्रव्यत्वादित्यादौ प्रतिज्ञानिगमनयोर्वारणाय साध्याविषयेत्यादिव्याख्यातार्थकमुपनयविशेषवारणाय हेतुपञ्चम्यन्तेति । हेत्विति हेतुत्वबोधकार्थकं हेतुपञ्चम्योर्वैकल्पिकमुपादेयम् उपनयस्य चान्तेऽनुसन्धीयमाना प्रथमैवान्तः एवं दण्डादित्यादेः स्वपरस्यापि दृष्टान्तस्य पञ्चम्यन्तत्वेऽन्वयायोगात् कस्यचिद्व्यतिरेकिण उदाहरणस्य पञ्चम्यन्तत्वसम्भवे तु तद्वारणं

पूर्ववदत्र चार्थपञ्चकस्य हेतुपञ्चम्यन्तस्य बोध्यम् तेन निरु
क्तसमभिव्याहृतप्रमात इत्यादौ नाव्याप्तिः पञ्चम्यादेस्त
त्सिद्ध्यादेश्चवादिनां मते तु नानुपपत्तिगन्धोऽपि । केचित्तु
हेतुपञ्चम्यन्तस्य हेतुत्वप्रतिपादकपदगाम्रिव पूर्ववत्साध्या
विषयकज्ञानजनकत्वञ्च इतरनैरपेक्ष्येण प्रकृतहेतुत्वविशिष्ट
साध्यविषयकज्ञानाजनकत्वं साध्यत्वेन न विवक्षितं वैयर्थ्या
दित्याहुः । पञ्चम्यन्तेति अनुमितिपरत्वाख्यानम् अवयवत्व
हेतुत्वादौ पञ्चमी सार्वत्रिकी हृष्यादिभजत इत्यादौ साध
नेनाबाधितत्वे अवधिमत्त्वे वा गमकत्वात् द्रव्यनिष्ठमवधित्व
मिव विभागनिष्ठमवधिमत्त्वमपि सम्बन्धविशेषः स चाति
रिक्तोऽनतिरिक्तो वेत्यन्यदेतत् तत्सम्बन्धाश्रये च व्यवहार
शक्तिभ्रमात् वृक्षात्पतति पतति इत्यादौ साधवाद्विभागे
शक्तिस्तज्जनकत्वञ्च क्रियाया सम्बन्धमर्यादया भासत
इत्यपि वदन्ति । अतो निगमनेऽतिव्याप्तिरतः पञ्चम्यन्तेति
तस्मादित्यत्र च तत्पदे न लक्षणा शक्त्यैव तादृशज्ञानोप
स्थितिसम्भवात् पर्वतो वह्निमान् वह्निसामग्रीमान् वा
तस्मादित्यादिकन्तु न न्यायप्रयोग सम्प्रदायविरोधात् इति
वदन्ति । यत्तु हेत्वन्वयानुरोधात् वह्निमानित्यादावपि ज्ञान
लक्षणेति तत्र पञ्चम्या ज्ञापकत्वे ज्ञाप्यत्वे वा लक्षणयैवोपपत्तौ
तत्र च लक्षणायां मानाभावादतएवोक्तम् आहत्य सैव
प्रतिज्ञेति अतएव व्याचष्टे यतो द्रव्यं गुणः कर्मेत्यत्र
हेतुत्व यथायथमवस्थापकत्व ज्ञापकत्वञ्चेति अतएव लोके

किं वह्निमदिति प्रश्ने तद्गृहं वह्निमदितित्युत्तरिते कुत इति जिज्ञासा धूमवत्त्वादित्युत्तरञ्च नहि तत्र ज्ञाने प्रश्नः येन लक्षणया ज्ञानेनोत्तरयेत् न वा परकीयभाविप्रश्नानुरोधात् अजिज्ञासिताभिधानं न वा कुत इति प्रश्ने ज्ञातमेतदित्यध्याहार्य्यं मानाभावात् दाहो दहनात् न जलात् जलस्पर्शवत् रूपात् न गन्धान्नापि शब्दादित्यादौ नञ अन्वयानुरोधात् जन्यत्वरूपं हेतुमत्व जन्यज्ञानविषयत्वरूपञ्च ज्ञाप्यत्वमर्थः एवञ्च हेतुमत्वे शक्तावपि ज्ञाप्यत्वे लक्षणैव न च धूमादालोकवान् पर्वतो वह्निमान् धूमाद्वह्निमतः सधर्म्मा पर्वतो वह्निमानित्यादौ प्रतिज्ञायां पर्वतो धूमाद्वह्निमानित्यादौ च तत्रत्यनिगमने चातिव्याप्तिः प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितप्रकृतसाध्यान्वितस्वार्थबोधकपञ्चम्यन्तलाक्षणिकपदवदवयवत्वस्य विवक्षितत्वात् । यत्तु अयमात्मा ज्ञानादित्यादावव्याप्तिः शक्त्यैव ज्ञानोपस्थितिसम्भवेन लक्षणाविरहादिति तन्न यद्विषयकज्ञानस्य हेतुत्वादिकमवगतं तस्य व्याप्त्यादिजिज्ञासायामुदाहरणादिप्रयोगः न चेह ज्ञानविषयत्वेनोपस्थितिर्विना लक्षणाम् अन्यथा सुखादेरपि व्याप्त्याद्युपदर्शनप्रसङ्गात् । केचित्तु पञ्चम्यन्तलाक्षणिकपदवत्त्वनियतावच्छेदकरूपवत्त्वं तादृशपदवत्त्वव्याभिचार्य्यवयवतावच्छेदकशून्यावयवत्वं वा विवक्षितमित्याहुः । नव्यास्तु पञ्चम्याज्ञानज्ञाप्यत्व लक्षणयैवोपपत्तौ न प्रातिपदि-

प्रातिपदिकार्थो विपदस्येनाभ्रे ति कर्पष्ठतीय सतौ भावयं यद्धर्मविशिष्टय हेतु प्रयुज्यते भाकाङ्क्षावसात् तद्धर्मवि शिष्टस्यैव व्याप्यत्वमुपदर्श्यते अन्यथा यथार्थधूमज्ञानादित्या दिप्रयोगेऽपि धूमादेर्व्याप्यत्वोपदर्शनप्रसङ्ग इति प्राञ्चः ।

इतरान्वितस्वार्थबोधकत्वे सति स्वीयं यद्न्यभिन्न पद तदर्थविशेष्यकान्वयबोधजनकत्वे सति अन्यपदवत्त्वे सति स्वीयानन्यपदार्थविशेष्यकान्वयबोधाजनकान्यत्वे च सति वा न्यायावयवत्व प्रतिज्ञात्वं प्रतिज्ञाहेत्वोरुपनयनिगमन योश्चार्थौ परस्परमन्वितौ न तुदाहरणस्य येनापि विभ क्त्यन्त पद तेन निगमने मातिव्याप्तिः प्रकृतपक्षान्वितस्वार्थ बोधकपदोपस्थापितार्थान्वितस्वार्थबोधकन्यायावयवत्व हेतुत्व निगमनवारणाय उपस्थापितान्तम् । प्रमेयत्वमभिधेयं प्रमेय त्वात् इत्यादौ प्रकृत्यर्थपचान्वितस्वार्थबोधकपदस्यर्थान्वितो न प्रतिज्ञार्थं अपि तु तदेकदेशार्थ इति स्वार्थविशिष्टवैशिष्ट्य बोधजनकन्यायावयवत्व विशिष्टवैशिष्ट्यबोधजनकस्वार्थोपस्थि तिजनकन्यायावयवत्व विशिष्टबोधजनकस्वार्थविशिष्टबोधजन- कन्यायावयवत्व वा तस्य एकवाक्यतया हेत्वर्थविशिष्टसा- ध्यस्य वैशिष्ट्य भासते न पुनरवयवान्तरार्थविशिष्टस्य कस्य चिदिति इतरान्वितस्वार्थबोधकन्यायावयवत्वम् उदाहरण त्वन् अन्वयव्याप्तिबोधकत्व व्यतिरेकव्याप्तिबोधकत्वञ्च विशेषस्तत्रद्य इतरोपस्थापितार्थविशेषणकस्वार्थबोधकन्या यावयवत्व स्वार्थविशेष्यकेतरार्थान्वयबोधजनकन्यायावयवत्व

वोपनयत्वम् अवयवार्थविशेष्यकस्वार्थबोधजनकन्यायावयवत्वं निगमनत्व हेत्वर्थश्च प्रतिज्ञार्थे न विशेषणत्वेनान्वेति किन्तु तदेकदेशार्थ इत्युक्तप्रायम् ।

एतावता प्रबन्धेन सपरिकरं हेतुं निरूप्य तत्प्रसङ्गात् तत्त्वनिर्णयादिरूपतत्कार्य्यकारित्वाच्च तदाभासनिरूपणं प्रतिजानीते अथेति अनुमितीति यथाश्रुतमिदं हेतुदोषाणां लक्षणं तद्वत्त्वञ्च दुष्टहेतूनां तदभिप्रायेणैव उपधेयसङ्करेऽपीत्यादि वक्ष्यति तत्रानुमितिपदम् अनुमितिनिष्ठकार्य्यतानिरूपकसम्बन्धित्वेनानुमिति तत्कारणज्ञानपरं साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारानुमितिपरं वा तेनैकत्र हेतौ व्यभिचारादिग्रहेऽप्यन्यस्य परामर्शादनुमित्युत्पादेन व्यभिचाराद्याश्रयादिज्ञानेनान्यथासिद्धत्वाच्च व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽपि न क्षतिरिति वदन्ति । पर्वतो निर्वह्निर्धूमो वह्नेरभिधेयत्वं वा मेयत्वस्य व्यभिचारीत्यादिभ्रमादनुमितिप्रतिबन्धादाह यथार्थेति ननु प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्यादेरपि प्रत्येकं हेत्वाभासतापत्तिः । अथ विशिष्टविषयज्ञानं प्रतिबन्धकं तद्घटकञ्च न विशिष्टमिति चेत्तर्हि यथार्थेति व्यर्थं भ्रमविषयविशिष्टस्याप्रसिद्धत्वादित्यनुशयेनाह यदिति । केचित्तु दुष्टावनामेि हेतूनामेतानि लक्षणानि तत्र तृतीयमिव प्रथममपि ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमभ्युपेत्य तदर्थस्य तादृशाभावप्रतियोगिनो ये व्यभिचारादयस्तत्प्रकारकयथार्थ-

ज्ञानविषयत्वसमये च तत्त्वमित्यस्य सत्त्वमित्यर्थं प्राग्वदेव वा दुष्टहेतुप्रकरणत्वमिति प्राहुः । निरुक्तमविवक्षित यदि च यत्त्वेन यादृशविशिष्टविषयत्वेन तेनानुमितिप्रतिबन्धकपक्ष विधेयकभ्रमविषये साध्याभावादौ महत्त्वादिविशिष्टे नाति प्रसङ्गः अवच्छेदकत्वेनानतिरिक्तवृत्तित्वं तेन विशिष्टस्या सत्त्वेऽपि भ्रमात् प्रतिबन्धेऽपि न क्षति विशेषणीयञ्च तादृशविशिष्टान्तराघटितत्वेन तेन प्रमेयत्वादिविशिष्टे व्य- भिचारादौ नातिप्रसङ्गः एवञ्च पक्षतावच्छेदकादिविरह विशिष्ट पक्ष पक्षनिष्ठस्तद्विरही वा साध्याभाववद्वृत्ति साधनं साधनवद्वृत्तिसाध्याभावो वा हेतुदोष येन केनापि सम्बन्धेन तदीय प्रकृतो हेतुर्दुष्टः यादृशधर्मिणि चादृश धर्मवत्ताज्ञानं अनुमितिप्रतिबन्धक तस्य धर्मिणस्तादृश धर्मवत्त्व हेतुदोष इत्यपि कश्चित् । अथ पर्वतत्वेन पक्षत्वे वह्नित्वेन साध्यत्वे विशिष्टधूमत्वेन च हेतुत्वे पर्वतादे काञ्चनमयत्वविरहो ह्रदस्य वह्निधूमशून्यत्व पर्वतस्य महान सीयवह्निधूमविरहित्व मेयत्वस्य केवलधूमस्य वा वह्निव्यभि चारो विशिष्टस्य धूमस्य वा पर्वतीयवह्निव्यभिचारो न दोषः न वा तत्सम्बन्धेन तत्र तस्य हेतोर्दुष्टत्वम् अतस्तद्धर्मावच्छिन्न तत्पक्षकतद्धर्मावच्छिन्न तत्साध्यकतद्धर्मावच्छिन्नतद्धेतु कानुमितिप्रतिबन्धकत्व वाच्य तथा च निर्वह्निः पर्वतो वह्निमान् पर्वतावृत्तिवह्निमान् वा तद्व्यभिचारि च पर्वता- ष्टमेयं धर्मादित्यादौ न कोऽपि हेत्वाभासः स्यात् तादृशा

नुमितेरप्रसिद्धत्वादिति। अत्र वदन्ति यद्विषयनिश्चयस्य विरोधिविषयताप्रयुक्तस्तदुत्तरम् अनुमितौ अनाहार्य्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्ट-हेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वं हेतुदोषत्वं पक्षतावच्छेदकवैशिष्ट्यादिकञ्च वैज्ञानिकं न तु वास्तवं ग्राह्यं व्याप्तिश्चानूयतो व्यतिरेकतश्च वाच्या तादृशावगाहित्वप्रसिद्धिराहार्य्यज्ञान एवाभ्युपेतव्यानन्यगतिकत्वात् एवञ्च वस्तुमात्रनिश्चयादनन्तरं निर्वह्नित्वाविशिष्टे वह्नेरग्रहेऽपि न क्षतिस्तस्य विरोध्यविषयकत्वात् एवं साध्यनिश्चयोत्तरं तस्यानुमितावपि मानसज्ञानाविरोधित्वाच्च तादृशि पक्षे तादृशसाध्यवैशिष्ट्यस्य तादृशसाध्यनिरूपितव्याप्तिविशिष्टतादृशहेतुवैशिष्ट्यस्य चावगाहिनो ज्ञानस्य यद्विषयं ज्ञानं विरोधिविषयकं तत्त्वं तादृशज्ञानविरोधित्वं वा हेतुदोषत्वं ज्ञानविरोधित्वञ्च तद्विषयविषयकग्रहविरोधिग्रहविषयत्वम् एवंविधैव रीतिरुत्तरत्र सर्वत्र सव्यभिचारलक्षणादावनुसर्त्तव्या इत्यपि केचित्। केचित्तु यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः सम्भवन्ति तावदन्यान्यत्वमेकमात्रदोषस्थले च तत्त्वमेव हेत्वाभासत्वं स चातिरिक्त एवान्योऽन्याभाव इति न वैयर्थ्यं पञ्चविधभेदोक्तिस्तु तत्सम्भवस्थलाभिप्रायेण व्यभिचारादेः साध्यादिभेदनियन्त्रितत्वात्

शब्दाभेदमादाय चाकिञ्चित्करत्वादिति भावः । स्यादेतत्
शब्दोऽनित्यः शब्दत्वात् इत्यसाधारणेऽव्याप्तिः सर्वसाध्य
वद्व्यावृत्तत्वासत्त्वात् एवं शब्दोऽनित्यः कृतकत्वात् इत्यस्य
सत्प्रतिपक्षे नित्यत्वव्याप्याद्रव्यद्रव्यत्वादावपि पक्षस्य सद्भा-
विरहादित्याशङ्कां तयोरलक्ष्यत्वेन निराकुरुते दशाविशेष
इति । हेतौ सद्धेतौ असाधारणः पक्षमात्रवृत्तिः सन्
[स]तिपक्षो विरोधिपरामर्शो यस्य स तथा तयोर्दशाविशेषे
[हे]तौ सर्वसाध्यवद्व्यावृत्तत्वस्य पक्षे साध्याभावव्याप्यवत्त्वस्य च
[भ्र]मदशायामाभासत्वात् अनुमित्यजनकत्वात्तद्दुष्टत्वादौ
साध्यवद्व्यावृत्तत्वादिषु च प्रतिबन्धकत्वं पर्य्यवस्यति न तु
[त]द्विषयस्य दोषत्वम् असत्त्वात् अन्यथा व्यभिचारेणानुमि
[त्य]नुदयात् तस्यापि दोषत्वं स्यात् कोऽपि साध्याभावतद्
[व्या]प्यवत्ता भ्रमयोरनुमितिविरोधित्वे विशेषः निर्युक्तिकस्तु
[प]क्षपातो न सहेय यस्तु ज्ञानस्य यदनुमितिप्रतिबन्धकताव
च्छेदकं तद्वत्त्वं तत्प्रकारकप्रमाविषयत्वञ्च लक्षणार्थः तच्च
द्विविधं विषयरूपं साधारण्यादिसाधे च प्रमितसाध्याभाव
वान् पक्ष तद्विषयत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वात्
अविषयरूपञ्च विरोधिसामग्रीकालीनत्वादिकं तद्वत्त्वञ्च
ज्ञानस्यैव तद्विषयस्य हेतोरपीति तत्र तद्वत्त्वं हि हेतोर्ना
भेदेन साध्ये तदभावात् अतएव साश्रयतया वह्निव्यभिचारि-
द्रव्यत्वादिमति धूमेऽतिप्रसङ्गाच्च साध्याभाववत्पक्षस्येव
साध्याभाववद्वृत्तिहेतोर्ज्ञानस्य प्रतिबन्धकत्वात् साधारण्यादि

विषयकत्वस्य ज्ञाननिष्ठस्यैव प्रतिबन्धकतावच्छेदकत्वात् सत्ता-
दिसाध्यके ज्ञानेऽतिप्रसङ्गाच्च यथाकथञ्चित्तद्वत्त्वस्य चाति-
प्रसञ्जकत्वात् विरोधिसामग्रीसमवहितोऽपि च लिङ्गपरा-
मर्शो न स्वसाध्यकानुमितेः प्रतिबन्धको मणिसमवहितो
वह्निरिव दाहस्य अथ यद्धर्मविशिष्टज्ञाने सत्यवश्यमनुमिति-
प्रतिबन्धः तदेवात्र प्रतिबन्धकतावच्छेदकमुक्तं भवति च प्रति-
बन्धकीभूतविरोधिसामग्रीकालीनत्वादिविशिष्टे परामर्शे तथा
इति चेत् न वैकालादिसाधारणकारणघटिता सामग्री क्वापि
प्रतिबन्धिका विशेषतस्त्वत्र तत्सत्त्वे कार्य्योत्पादस्य दुर्वारत्वात्
किन्तु विरोधिपरामर्शस्तथा यदि च तत्सत्त्वेऽपि तत्साध्ये
बाधावताराननानुमितिप्रतिबन्धः प्रामाणिकस्तदा अप्रा-
माण्यग्रहाभावस्येव तदभावस्यापि वैशिष्ट्यन्तत्र निवेश्यतां
यथा च भ्रमप्रमासाधारणविरोधिपरामर्शसत्त्वे नानुमिति-
स्तथा तथाविधबाधादिग्रहेपीत्यतिप्रसङ्गः। नचातीतादौ
लिङ्गे विरोधिपरामर्शकालीनत्वमपि यदपि तद्विषयत्वेन
ज्ञानस्य अनुमितिप्रतिबन्धकत्वं तद्वत्त्वमेव वाच्यं सत्-
प्रतिपक्षे च विरोधिव्याप्त्यादिकमेव तथा तद्वत्त्वमपि हेतौ
स्वज्ञानरूपसम्बन्धेन तस्य समूहालम्बनरूपतया हेतुद्वय-
विषयत्वादिति तदपि तुच्छं साध्याभाववत्पक्षविषयत्वेन
तादृशपक्षज्ञानप्रमात्वविषयत्वेन वा ज्ञानस्य प्रतिबन्धकत्वं
तस्य च साध्यवत्यपि पक्षे सम्भवादतिव्याप्तेः विशिष्टविषय-
त्वेन प्रतिबन्धकत्व विशिष्टञ्च तत्राप्रसिद्धमिति चेतर्हि किं

सर्वत्र सत्प्रतिपक्षे साध्याभावव्याप्यवान् पक्ष प्रसिद्ध यथाकथञ्चित् सम्बन्धेन तद्वत्त्वञ्चातिप्रसक्त धूमादेरपि ज्ञान रूपेण तदाश्रयाश्रयत्वादिना वा सम्बन्धेन व्यभिचारादि मत्त्वात् यादृशसम्बन्धावगाहित्वेन ज्ञानस्य प्रतिबन्धकत्व तेन तद्वत्त्वञ्च न सर्वत्र सत्प्रतिपक्षिते हेतावस्ति च क्वचित् सद्धेतावित्यत उक्त पक्षवितेन ।

यद्यपीति स्थाणुत्वाभावस्य तद्व्याप्यकरादेर्वा निश्चये स्थाणुत्वप्रत्यक्षशाब्दयोरनुदयात् । नचैव नरशिर कपाल शुचि प्राण्यङ्गत्वादित्यादिनाप्यागमप्रतिरोध स्यात् तत्रानु कूलतर्काभावेन बलवत्तरागमविरोधेन च व्याप्तिनिश्चय स्यानुमितेर्वानुत्पत्तेरिति भाव यद्वेत्याद्यभ्युपगमाच प्रत्यक्ष प्रत्यानुमानिकबाधादिनिश्चयस्याप्रतिबन्धकत्वेऽपि शाब्द प्रति प्रतिबन्धकत्वात् योग्यताज्ञानेनान्यथासिद्धत्वात् तदभावो न तत्र हेतुरिति चेदेवमप्युपनीतभानविशेष प्रतितत्त्वेन हेतु तायादुर्वारत्वात् । यद्यपि लक्षणत सामान्यप्रतीतवतो विशेषजिज्ञासानुदयात् सामान्यलक्षणानन्तरमेव विशेष विभागो युक्तस्तथापि सव्यभिचारपदस्य साधारणमात्रे प्रसि द्धतया तन्मात्रस्य सव्यभिचार बुध्यमानैरसाधारणादिभिरसाधा रणादिसाधारणस्य सव्यभिचारत्वस्याप्रसिद्धत्वैव च साधुता प्रतीयेत अतस्तद्वारणाय लक्षणान्तरमपि दर्शयति सव्यभिचार इति । कश्चित्तु सामान्यज्ञानाधीनो विभागो न तल्लक्षणत प्रत्ययमपेक्षतेऽत प्रथमं विभागकरणेऽपि न दोष

इत्याह । प्रसक्तिरनुमितिरापत्तिर्वा तदुपधानमव्यापकमति-
व्यापकञ्च तथाविधव्याप्तिभ्रमेण सद्धेतावतस्तद्योग्यता वाच्या
सा च तादृशव्याप्त्यादिरूपा न च विरुद्धो भयव्याप्यत्वमे-
कस्य सम्भवतीत्याह एकस्येति । साध्येति कोटिद्वयोपस्थापकं
सत् साध्यसन्देहजनकं साध्यसन्देहजनककोटिद्वयोपस्थिति-
जनकमिति यावत् । आश्रयतया विषयितया वा नित्यत्वा-
नित्यत्वोपस्थापकस्य नित्यत्वे साध्ये ज्ञानस्यानुवृत्तत्वव्यावृत्त
त्वाभ्यां वह्नितदभावोपस्थापकस्य वह्नौ साध्ये धूमस्य वारणाय
जनकान्तम् । तथोपस्थितेः साध्यसन्देहाजनकत्वात् धर्म्मि-
तावच्छेदकपुरोवर्त्तित्वादिविशिष्टधर्म्मिज्ञानस्य संशयजनक-
तया तद्वारणाय कोटिद्वयोपस्थापकेति । न च तदसाधा-
रणतया संग्राह्यमेवेति वाच्यं तथात्वेऽपि तदुत्तीर्णताद-
शायां विशेषदर्शनात् संशयानुपधायकत्वेऽपि तज्जननयोग्य-
ताया अनिवृत्तेः । अन्यथा यथायथं पक्षे साध्यतदभाव-
निश्चयदशायां साधारणाव्याप्तिप्रसङ्गात् । प्रतिपक्षसम्वलन-
दशायां हेतुमत्ताज्ञानस्य साध्यसन्देहजनकत्वपक्षे हेतु-
वारणाय कोटीत्यादिहेतुना साध्यस्य प्रतिहेतुना तद
भावस्य उपस्थापनादुभयोपस्थापकत्वं न कस्यापीत्यपि का-
श्चित् । इद द्व्यणुकं नित्यमणुत्वादित्यादौ साधारणधर्म्म-
वत् धर्म्मिज्ञानस्य कोट्युपस्थितिं संशयञ्च प्रतिहेतुतया-
तद्विपक्षे धर्म्मिणि सद्धेतौ अतिप्रसङ्गः स्यादतः पक्षधर्मतेति
पक्षपद धर्म्मिमात्रपरम् । नचैव नित्यो घटः शब्दत्वादित्यत्र

साधारणवतारेऽसाधारण्यापत्तिरिष्टत्वात् अन्यथा साधासिद्धौ रन्यतरावतारदशायां साधारणासपक्षापत्तेः प्रतिज्ञिसद्धी र्णत्वे सव्यभिचारमध्याप्रवेशे सव्यभिचारसङ्कीर्णतया भ्रमि तेऽप्यनन्तर्भावापत्तौ सव्यातिरिक्तहेत्वाभासत्वापत्तिः न च व्याप्यविरुद्धयोः साधारण्यभ्रमदशायामतिप्रसङ्गः धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं साध्यसंशयजनकं तद्रूपावच्छिन्न त्वस्योक्तत्वात् तत् रूपं साधारणत्वादौति सिद्धान्ते स्फुटी भविष्यति । दृष्टं सविपचकमात्मादृत्ति वा ज्ञानत्वात् इत्यादौ प्रामाण्याप्रामाण्यसंशयस्य तद्घटकीभूतसाध्यतदभावविषय कतया कोट्युपस्थितिरूपस्य धर्मिकीभूतज्ञानविषये ज्ञानत्वे तु नातिप्रसङ्गस्तदापि साधारणधर्मवत्ताज्ञानस्य तत्सन्यकोट्युप स्थितेर्वा संशयजनकतया तज्ज्ञानस्य तादृशसंशयहेतुत्वात् प्रामाण्यसंशयस्थले तु ज्ञानत्वलक्षणसाधारणधर्मदर्शनात् ज्ञाने प्रामाण्यस्य ज्ञानविषयतात्मकसाधारणधर्मदर्शनाच्च विषये तद्वत्त्वस्य सन्देहः अप्रामाण्यशङ्काधन्वयानुविधानन्तु भ्रमत्वज्ञानशून्यविरोधिज्ञानस्य प्रतिबन्धकतया तदपसारण प्रयुक्तमित्यस्याकरे व्यक्तत्वात् व्याप्यवत्तासंशयस्य पृथग्व्या पकवत्तासंशयहेतुत्वपक्षे ज्ञानपदं निश्चयपरं हेतुत्वाभिमत विशेषणन्तु येन सम्बन्धेन तदुभयसाहचर्यं तेन सम्बन्धेन तद्वत्ताज्ञानस्य संशयादिजनकतासूचनार्थं तेनात्मत्वकापा लत्वादिसाध्यके समवायसम्बन्धेन हेतौ ज्ञानघटादौ वि षयत्वसंयोगादिना तत्सन्देहजनके नातिप्रसङ्ग इति। वि

प्रतिपत्तौ प्रत्येकं कोटिद्वयोप स्थापकत्वाभावात् लक्षण-स्थद्वयपदेन तद्वारणात् मिलितस्य तदुपस्थापकत्वेऽपि तद्वृत्ताज्ञानं न तथा न वा मिलित्वा द्वयोर्ज्जनकत्व तथात्वेऽपि वा येन सम्बन्धेन तद्वृत्ताज्ञानमुभयकोट्य-पस्थापकं तेन सम्बन्धेन हेतुत्वेऽवश्यं सव्यभिचारत्व-मिति ।

अनुपसंहारी पक्षएवेति अनुपसंहारितादशायां साध्य-तदभावसहितत्वनिर्णयाभावेऽप्युक्तक्रमेण वास्तवतत्सहचरित-त्वमादायैव लक्षणसमन्वय इति भावः । केचित्तु व्याप्यादि-धर्मेऽपि साधारण्यज्ञानात् संशयस्योदयात् तदज्ञाने च वस्तुतः साधारण्यज्ञानेऽप्यनुदयात् साधारण्यज्ञानं हेतुस्तत्र निश्चयत्वमकिञ्चित्करं गौरवात् तथाच पक्षएव तत्संशया-त्मकतदुभयसाहचर्य्यज्ञानाद्भवति तथात्वमिति भाव इत्याहु तच्चिन्त्यम् । ननु केवलान्वयिसाध्यकानुपसंहारिणि साध्या-भावाप्रसिद्धा तत्संशयाद्यभावादव्याप्तिः एवं यत्र स्थिरे धर्म्मिणि पूर्वं घटत्वं गृहीतमुत्तरदशायां तत्रैव दोषात् घट-त्वाग्रहे तद्घटभिन्नोऽयमिति भ्रमे च घटत्वनिश्चयविषयीभव-द्धर्मिव्यावृत्तत्वेन गृह्यमाणतया असाधारणे इदन्त्वेऽपि वस्तुतस्तद्व्यावृत्तत्वाभावेन तत्र लक्षणायोगादित्यतस्तयोर्ल-क्ष्यत्वाभावेन परिहरति केवलान्वयीति । अतएवेति अतएव पुरुषदोषाधीनं तद्दोषत्वम् अतएव तस्यानित्यदोषत्वं साह-जिकत्वे कादाचित्कत्वानुपपत्तेः एवञ्च यत्र दोषताप्रयोजकं

वस्तुतो हेतौ तयामित्यदोषत्वमपि यत्र पुरुषस्य तद्भ्रमो न तत्र तदपि भ्रममात्राद्दृष्टत्वेऽतिप्रसङ्गमाह अन्ययेति केचित् । परे तु अय घट एतत्त्वादित्यादावव्याप्ति । साध्यसन्देहप्रयोजकत्वं हि तस्य साध्यतदभाववद्व्यावृत्तत्वं साटकस्य धर्मस्य तदुभयव्यावृत्तत्वं सम्भवति असाधारण्यन्तु तस्य पक्षमात्रवृत्तितया अतसाध्यासन्ततयोस्त्ययति अय घट इत्यादि पक्षवावृत्तिगगनादिकमेवासाधारणं पक्षवृत्तित्वभ्रमदशायां व्यासाधारण्यस्यासद्व न चोभयव्यावृत्तत्ववृत्तित्वयो स्वरूपतो विरोध निश्चितसाध्यतदभाववद्व्यावृत्तत्वस्य न सन्देहप्रयोजकतया सति तुल्यन्यायतया निश्चितसाध्यतदभाववद्वृत्तित्वस्यापि तथात्वे सद्देतापि साध्याभाववत्त्वभ्रमविषयवृत्तित्वग्रहदशायामतिप्रसङ्गात् न च तादृगनिययविषयस्य धर्मिणो वास्तव साध्याभावादिमत्त्वमपि तस्य मानाभावात् किञ्च सन्देहजनकतावच्छेदकरूपस्य विशेषणत्वे व्यभिचारिणि रासभादौ सद्दानमादिहेतितादशायामव्याप्ति उपलक्षणत्वे असाधारण्योत्तीर्णतादशायामतिव्याप्ति असाधारणप्रकरणसमयोरुक्तत्वेन भ्रमविषययोरनित्यदोषत्व विशेषादर्शनदशायामनुमित्यनुत्पादप्रयोजकत्व नतु वास्तव हेतुदोषत्वम् अन्यथानुमित्यनुत्पादप्रयोजकज्ञानविषयतामात्रेण वास्तवहेतु दोषत्वे इत्याहु । अन्वयगतसाध्यसहचारत्वे सति व्यतिरेकगतसाध्याभावसहचारतया विरुद्धत्वमिव तयोरिति इदमभ्युपगमवादेन वस्तुतो ययोपदर्शितलक्षणस्य न तत्राव्याप्तिरिति

ध्येयम् । यद्रूपज्ञानमनुमितिप्रतिबन्धकं तदेव विभाजकम् अन्यथा अतिप्रसङ्ग इत्यभिप्रेत्य दूषयति नैतदिति । वस्तुतस्तु उपस्थापकत्वादिज्ञानमनुमितेस्तज्जनकस्य वा न प्रतिबन्धकं विरोधिविषयकत्वाभावात् एवमुत्तरत्रापि पक्षवृत्तित्वे सतीति विरोधित्वं विरोधिज्ञानविषयत्वम् अव्याप्तिपदम् अत्यन्तायोगव्यवच्छेदार्थकं तेन संयोगसम्बन्धेन व्यभिचारिणि द्रव्ये हेतौ व्यभिचाराभावदशायां नाप्रसङ्गः साध्यवद्वृत्तिस्तु नासाधारण इति हृदयम् । अपक्षधर्म्मधूमादिवारणाय सत्यन्तं पक्षः सन्दिग्धसाध्यो धर्म्मी विशिष्टहेतौ तद्वृत्तित्वग्रहाविरोधित्वञ्च तदर्थः तथाच पक्षतावच्छेदकरूपेण पक्षे साध्यतावच्छेदकरूपेण साध्यस्य हेतुतावच्छेदकरूपेण हेतोर्व्वा यज्ज्ञानं तदविरोधित्वस्य लाभात् पक्षसाध्यसाधनाप्रसिद्धिस्वरूपासिद्धिबाधप्रतिरोधानां निरासोऽसिद्धिसङ्कीर्णसंग्रहः विरोधोऽपि फलतः प्रतिरोधएव तदन्यत्वेन वा विरोधि विशेषणीयं वक्ष्यते च सिद्धान्ते विरुद्धान्येति हेतुसाध्यसामानाधिकरण्यग्रहाविरोध्यर्थकं सम्बन्धपदबलेन प्रकृतहेतुसम्बन्धितया विरोधित्वे तात्पर्य्योपवर्णनेन प्रायशो बाधादिवारणेऽपि घटत्वमनित्यं घटत्वादित्यादौ प्रयत्नसाध्यमिव तत् प्रतिभाति वस्तुतस्त्वनुमितिपदं तत्कारणज्ञानपरम् आश्रयासिद्ध्यादिवारणाय सत्यन्तं तादृशपक्षकतादृशहेतुकग्रहाविरोध्यर्थकम् अनया च वाचोभङ्ग्या व्याप्तिग्रहविरोधित्वमेवाभिदित्सितं तेन वह्निमान् वह्निमान् ह्रदत्वादित्यादौ हेतोः

साध्यवद्वृत्तित्वादेर्मसंग्रह विवेचयिष्यते चेदमपरिहार्यम् ।
सपक्षेति सम्प्रतायातम् अतएवानुपसं विरुद्धोऽपीत्यादिक
व्यर्थेति विशेषण पक्षावृत्तित्व साध्याव्याप्यत्व इति हेत्वाभासत्व
हेतुवदाभासनानात्व चतुर्थस्य वृत्तिमत्त्वम् एवञ्च साध्यतद
दभावव्याप्यत्वपक्षविरोधिवृत्तिमत्त्वपक्षाविरोधिरूपवत्त्वमर्थ ।
साध्यतदभाववद्वृत्तित्व साधारण्य मिति साध्यतदभाव
वद्व्यावृत्तत्वमसाधारण्यं तत्र व्याप्तिग्रहपक्षविरोधीति द्वि
यम् असिद्धिविशेषस्य वृत्तित्व वृत्तिमत्त्वपक्षाविरोधि सा
ध्यतदभाववद्व्यावृत्तत्वमपि यद्गीत्या तदा असिद्धिरेव
सो चेदिदमेवासाधारण्यं योध्य साध्यासमित्यादिवार-
णाय विशिष्टसाध्यसाधनपक्षाविरोधित्व वाच्य व्यापकसा
मानाधिकरण्यमिह व्याप्यत्व तेन च द्वितीयस्य भेद
रीतिस्तुल्यैव । केचित्तु असाधारण्याभाववत्तानवच्छिन्नसा
ध्यतदभावव्याप्तिशून्यत्व विवक्षितं विशेषणाभावात् वस्तुतो
व्याप्यस्य विरुद्धस्य सा असाधारणस्य संग्रह इत्याहुस्तच्चि
न्त्यम् । व्यर्थेति विरोधाद्यवारक साध्याभावेत्यादि व्यर्थं
तस्य पार्थक्ये प्रमाणाभावादिति भाव । प्रथममित्यादि
गगनमित्यादि च दूषण यथाश्रुते नापीत्यादि सपक्षविप-
क्षावच्छिन्नव्यावृत्तत्व सर्वतोव्यावृत्तत्व व्यर्थेति सपक्षवृत्ति
त्वविपक्षव्यावृत्तत्वयोर्दूषकतायामनुपयोगादिति भाव ।
पक्षातिरिक्तेत्यादि व्याप्यविरुद्धयोरसाधारणयो संग्रहाय
पक्षातिरिक्तपदे पक्षत्व सन्दिग्धसाध्यकत्व धूमेत्यादिदूषण

यथा श्रुते ननु सप्तमीसमासात् पक्षातिरिक्ते वर्त्तते यात्साध्य-वन्मात्रवृत्ति साध्याभाववन्मात्रवृत्ति च तद्भिन्नत्वमित्यर्थे इति ध्येयम् । पक्षवृत्तीत्यादि विरोधः साध्यासामानाधिकरण्यं पक्षवृत्तित्वसाध्यासामानाधिकरण्यग्रहाविरोधी योऽनुमितेरौपयिकस्य जनकज्ञानविषयस्य सम्बन्धस्य सपक्षसत्त्वादेरभाव-स्तद्वत्त्वमित्यर्थः सपक्षविपक्षव्यावृत्तत्वस्य चासाधारण्यस्य असाधारण्य निश्चये पक्षे साध्यसामानाधिकरण्यसन्देहान्न तस्य तज्ज्ञानविरोधित्वं पक्षवृत्तौ विरुद्धभिन्ने च वर्त्तते यस्ताद्दृ-शोऽभावस्तद्वत्त्वमर्थ इति केचित् । पूर्वोक्तलक्षणानां यथोक्त-रीत्या यथामतं नाव्याप्त्यादिसम्भावना परन्तु तज्ज्ञानस्यानु-मित्यप्रतिबन्धकतया तेषां हेत्वाभासतावच्छेदकत्वं न घटते न घटतां किन्तेन तेषां हेत्वाभासविभागमात्रोपयोगित्वादित्या-शयेनाहउच्यत इति । सन्देहं प्रत्येव साधारण्यादिविशिष्टध-र्म्मवद्धर्म्मिज्ञानत्वेन हेतुता तज्जनककोटिद्वयोपस्थितिं प्रति तु तादृशधर्म्मज्ञानत्वमात्रेणेत्यभिप्रेत्याह उभयेति । साध्यसन्दे-हजनकेति प्रकृतं यथाकथञ्चित् कोटिद्वयोपस्थितिः स्मृत्यनु-भवसाधारणीसन्देहजननीनियामकन्तु साधारण्यादिविशि-ष्टधर्म्मवत्ताज्ञानम् अतएव धारावाही सन्देह इति मते तु धर्म्मितावच्छेदकविशिष्टे धर्म्मिणि यद्रूपविशिष्टज्ञान साध्य-सन्देहजनकं तद्रूपवत्त्वमेव वक्तव्यं कोटिद्वयसहचरित-त्वादिना ज्ञातस्य ऊर्द्ध्वत्वादेरूर्द्ध्वत्वत्वादिना धर्म्मिणि ज्ञानमेव सशयजनकं ननु तदानीं साहचर्य्यज्ञानमपेक्षत इति नये तु

यद्रूपविशिष्टत्वे न गृहीतस्य धर्मस्य धर्मिष्टत्तितामात्रम् तथा तद्रूपमेव साध्यम् । तथेति ननु साधारण्यं न साध्यतदभाव वद्यावृत्तत्वं वृत्तिमतस्तथात्वामसम्भवात् एककोटिव्याप्यस्येव एककोटिमद्यावृत्तस्यापि धर्मस्य युद्धेर्विशेषदर्शनतया संशय विरोधित्वाच्च सत्प्रतिपक्षे च परामर्शप्रामाण्यसंशयोत्तरमेव साध्यसन्देहात् नापि निश्चितसाध्यतदभाववद्यावृत्तत्वं तद्धि यत्र यत्र साध्यादिमत्तानिश्चयस्तद्यावृत्तत्वं येन येन रूपेण यत्र यत्र तन्निश्चयस्तेन तेन तद्यावृत्तत्वं वा आद्ये सर्वाणि साध्यव्याप्यवन्ति साध्यवन्ति सर्वाणि वा असाध्य वन्ति प्रमेयाणीत्यादिनिश्चये सामान्यत पक्षेऽपि साध्यादि निश्चयादतथात्वप्रसङ्गः द्वितीये तु विशिष्यपक्षे साध्यनिश्चय विनैव शब्दादिना साध्यव्याप्यत्वनिर्णयेऽपि तथात्वापत्तिः नैव दोषो यादृशव्याप्तिपक्षे सति नासाधारण्यं तदुभयभावेन विशेषलक्षणस्य साधारण्याभावविशिष्टस्य तदुभयस्य चाभा वेन सामान्यलक्षणस्य विशेषणादतिव्याप्तिनिरासात् विशिष्टा भावादेव च साधारण्ये व्याप्तिभ्रमदशायां नाव्याप्तिरिति चेत् एवं सत्येकेन व्याप्तौ गृहीतायामसाधारणस्य न कञ्चि दपि प्रति सव्यभिचारित्वं स्यात् स्याद्वा तदपि तथात्व रूप घटितमसाधारण्यमत् साध्यादिव्याप्यपक्षेन रूपेण साध्या दिमत्त्वनिश्चयेऽव्याप्तिप्रसङ्गाच्च न हि घटोऽनित्यो घटाद्यावृत्त शब्दत्वमितिवत् अनित्यत्वव्याप्यवती व्यावृत्त शब्दत्वमिति तदानीं निश्चय अभिहितश्च निश्चितसाध्यसदभाववद्यावृ-

त्त्वं न संशयप्रयोजकं किन्तु साध्यतदभावाभ्यां सहचरितत्वमिव तत्सहचरिताभावप्रतियोगित्वं व्याप्यविरुद्धयोस्तु तत्त्वेन निश्चितयोर्दर्शने विशेषदर्शनवशादेव न संशय इति विभाव्य लक्षणान्तरमाह विरुद्धान्येति विशिष्टसाध्यहेतुसामानाधिकरण्यग्रहाविरोध्यर्थकमर्थतो विरोधिविशेषणं तेन साध्यसाधनयोरप्रसिद्धेरवृत्तित्वस्य परस्परासामानाधिकरण्यादीनाञ्च निरासः पक्षपदञ्च धर्म्मिमात्रपरं तथाच यद्यद्धर्म्मिवृत्तित्वं हेतोर्ज्ञायते तत तत्रैवानुमितिविरोधि यद्रूपं तद्वत्त्वमित्यर्थः साध्यव्यापकीभूताभावप्रतियोगित्वन्तु तथा बाधप्रतिरोधौ तु धर्म्मिविशेषितत्वात् न तादृशौ सर्वं साध्याभाववत् तद्व्याप्यवत्त्वेत्यादिकञ्च साध्यवत्त्वग्रहविरोधित्वेन सामानाधिकरण्यग्रहविरोधिसाध्यानुमितिसामान्याविरोधित्वं वा विशेषणं तेनैवेति तेनानुमितिविरोधिना विपक्षवृत्तित्वादिना एवकारेणानुगमक रूपं व्यवच्छेद्य तस्य हेत्वाभासतावच्छेदकत्वं निरस्यति हेत्वाभासस्य लक्षणानुरोधेनेति तेनानुमितिविरोधित्वघटितलक्षणकरणेन असाधारणस्य सत्प्रतिपक्षोत्थापकतया दूषणत्वपक्षे नाव्याप्तिरितरथा पुनरव्याप्तिरेव साध्याभावज्ञापकत्वेन साक्षात्साध्यवत्तानुमितिविरोधित्वेन। सर्वं नित्यमित्यादि सम्प्रदायमनुरुध्योक्तम् अतएव तावतोऽन्तर्भावयिष्यति नापीति निश्चितसाध्यवति साध्यवद्भिन्ने च वर्त्तमानत्वमित्यर्थः। अनुपसंहार्य्ये इति साध्यवदन्यवृत्तित्वांशस्य तत्रापि सत्त्वादिति

भाव नापीति इह सपक्षच न निश्चयगर्भमतो नाभेद' घट इत्यादि इत्यस्य विरुद्धस्य अनुपसंहार्य्यस्य प्रसिद्धस्य च विरुद्धान्तरस्य व्यवच्छेद्यत्वादित्यर्थं 'अन्वयतो व्यतिरेकातय सद्व्वारायद्दद्व्यायामौद्दत्य हित्वमनुपसंहारीति मतेनेदमि त्यपि कश्चित् । विपचेति अत्र विपक्षत्व साध्याभाववत्तम् अनुपदमेव वस्तुगत्या साध्याभाववद्वृत्तित्वेन साधारण इति मूलएव स्फुटतरमभिधानात् न तु निश्चयगर्भं तज्ज्ञानस्या प्रतिबन्धकत्वात् न च वस्तुतो यत्र तन्निश्चयस्तद्वृत्तित्वज्ञान प्रतिबन्धक रूपान्तरेण साध्याभाववत्तया निश्चिते रूपान्त रेण हेतुज्ञानेऽप्यप्रतिबन्धात् अपेक्षेन रूपेण तत्तया गौरवात् हेतुसाध्याभावयो' सामानाधिकरण्यास्फुरणेनाविरोधात् साध्याभाववद्वृत्तिर्हेतुरित्यादि ग्राम्द्ज्ञानानामप्रतिबन्धापा ताच यत्तु साध्याभावांशे निश्चयरूप मेपांशे संशय साधारणं साध्याभाववद्वृत्तित्वज्ञान प्रतिबन्धकमन्यथा पक्षएव साध्यसन्दे हेन सन्दिग्धानैकान्तिकत्वापत्तेरिति यदाह नहि पक्षे पक्षस मेवा व्यभिचार इति तन्न व्याप्तिनिश्चये हेतौ व्यभिचारसंशया योगात् तदनिश्चयदशायाम् अनुकूलतर्कास्फूर्त्तौ सन्दिग्धानैका न्तिकत्वस्येष्टत्वात् हेतुसाध्याभावसामानाधिकरण्यावगाहित्व एव ज्ञानस्य व्याप्तिग्रहप्रतिबन्धकत्वात् अतएव पक्ष साध्याति रिक्तपक्षधर्मातिरिक्तधर्मवान् मेयत्वादित्यादयोऽनुकूलतर्कवि रहिणोबाधप्रतिरोधयोरनवतारेऽपि पक्ष एव सन्दिग्धानैका न्तिकतया अमयोजका गीयन्ते एव वह्निर्द्धूमानुकूलेत्यादय

शक्तिसाधका अपि अन्यथा पक्षातिरिक्ते सर्वत्र साध्यवत्ता-निर्णयाद्व्याप्तिग्रहस्य दुर्वारत्वात् पक्षविपक्षान्यतरत्वादिना सर्वत्र सत्प्रतिपक्षप्रसङ्गाच्च अथ साध्यतद्वदत्यन्तान्योऽन्या-भावगर्भव्यभिचारयोरेकोपादानेऽन्यतराव्याप्तिः साध्यवत्ता-ज्ञानप्रतिबन्धकज्ञानविषयत्वेनाभावद्वयानुगमेऽपि हेतुमति तादृशाभाववत्त्वस्य तादृशाभाववति हेतुमत्त्वस्य तादृशा-भावे हेतुसामानाधिकरण्यस्य साध्यतद्वदादौ हेतुसमा-नाधिकरणतादृशाभावप्रतियोगित्वादेश्चासंग्रह इति चेत् अत्र वदन्ति प्रकृतसाध्यसाधनसामानाधिकरण्यग्रहाविरो-धिनो ज्ञानस्य विषयतया अन्वयव्याप्तिग्रहविरोधितावच्छेदक-त्वेन विभजनान्नासंग्रहः अविरोधिन इत्यन्तेन साध्याप्रसि-द्ध्यादीनां निरासः यदि पुनरत्यन्तान्योऽन्याभावयोरेकतर-गर्भव्यभिचारज्ञानस्य नान्यतरगर्भव्याप्तिग्रहविरोधित्वम् इत्यादिकं विभाव्यते तदा साध्यसामानाधिकरण्यघटितत्वे-नान्वयव्याप्त्योऽनुगमनीयाः प्रातिस्विकरूपेणोपादाय वा तावद्व्याप्त्यवगाहित्वं ग्रहस्य वक्तव्यं साध्याव्यभिचरितसामा-नाधिकरण्यस्य व्याप्ये प्रसिद्धस्य हेतौ विरहोऽप्येतद्विशेष एव विशिष्टसाध्यसाधनवत्त्वग्रहाविरोधिनो ज्ञानस्य विषयतया व्यापकत्वग्रहविरोधितावच्छेदकरूपत्वं वा विभाजकं शेषं पूर्ववत् । साध्य तद्वतोरत्यन्तान्योऽन्याभावौ साध्याभावव्या-प्यादिव्यावृत्तेन साध्यवत्ताज्ञानविरोधित्वेनानुगमस्य तत्र हेतुसामानाधिकरण्याभावग्रहविरोधित्वं साध्यवत्ताज्ञान-

विरोधिनि तादृशाभावप्रविरोधिहेत्वाभासतायच्छेदकत्व यत्त्व या तथा वक्तव्य साध्याभावव्याप्यादौ तु हेतुसामा नाधिकरण्यादिकमविरोधिसाम्राभास विरोधित्व पूर्वोक्त दिशावसेयम् उपदर्शितविशिष्टव्याप्तिविरहो व्याप्यत्वासिद्धि-रेवेति व्याप्तिग्रहकारणसहचारग्रह सहकार्यभावप्रतियो गिग्रहविषयत्वेनानुगम इत्यपि कश्चित्। मार्ग मतेनोत्तर-यति न सर्वेत्यादि। सर्वेति विपक्षेऽप्यस्येति तेन साध्या भावन्नृत्तत्वेत्युदास' विपक्षत्वस्य निश्चयगर्भत्वात् भूत नित्या गन्धवत्त्वात् नित्य शब्द' शब्दत्वादित्यादौ नाव्याप्ति पृथिवी रूपवती रसादित्यादौ अन्नादेर्नीरसत्वभ्रमे पुन रसाधारणभ्रम एवेति मन्तव्यम्। तथापीति पक्षत्व स न्दिग्धसाध्यकत्व सत दूषयति अयेत्यादि। व्याप्तीति तथाच सतो दूषणाधमताभावत्वम् उपाधिवदिति भाव' एक धर्मिण्यासत्त्वच न सामानाधिकरण्यग्रहविरोधिधर्म्यन्तरे तत्सम्भवात् अन्यथा सतोरपि साध्यसाधनयोर्व्यतिरेकित्व दोषाय स्यात् अयाय शङ्कितुरभिप्राय पक्षे साध्याभावस्य संशयो निश्चयश्चानुमितिविरोधी विरोधिविषयकत्वात् सत् सामग्री च विरोधिसामग्रीत्वेन तथादिमस्य सामग्रीपक्षे सव्यभिचारस्य हेतोर्यह' द्वितीयस्य तु प्रतिहेतो' परामर्श अतस्तयोराभासत्वम् अतएव सव्यभिचारलक्षणे पक्षवृत्तित्व विशेषण साध्याभाववद्वृत्तित्वमात्र पुनरसिद्धिरेवेति विरो-धान्यस्य परामर्शविरोधिनो रूपस्य तत्त्वादिति नैव बाध

संशयस्य प्रतिबन्धकत्वानङ्गीकारात् साधारणधर्म्मवत्ताज्ञानस्य संशयसामग्रीत्वाभावात् सामग्रीत्वेन प्रतिबन्धकत्वे हेत्वाभासत्वायोगाच्च अन्यथा पक्षस्य साध्यतदभाववद्वृत्ति प्रमेयत्वादिमत्त्वं सर्वत्र हेतावाभासीभवेत् तथा कामिनीजिज्ञासाप्रयोजकं तज्ज्ञानेष्टसाधनत्वादिकमपि। एवं विशिष्टस्यानुद्भाव्यत्वं व्युत्पाद्य केवलस्यापि सपक्षव्यावृत्तत्वस्य तथात्वं व्युत्पादयति किञ्चेति वाद्युपदर्शितदृष्टान्तस्य साधनवैकल्यन्तु नासाधारण्यं सपक्षान्तरवृत्तित्वेऽपि तत्सम्भवात् तद्भावनन्तु तस्य निग्रहस्थानत्वात् तद्विभाजकसूत्रस्यानुक्तसमुच्चायकचकारेण तस्य समुच्चितत्वात् तदाहरणस्याभासताप्रदर्शनायैव वा आवश्यकश्च प्राचां दृष्टान्तप्रयोग इति भावः। माभूत् परार्थानुमानेऽसाधारण्यं दोषः स्वार्थे तु स्यादत आह स्वार्थेति। स्वमते सिद्धान्तमुपक्रमते उच्यत इति। अर्थादिति व्यतिरेकिमुद्रया अर्थादुभयं साधयेत् अर्थवशसम्पन्नमेवोभयसाधकत्वम् उभयसिद्ध्यनुकूलव्याप्त्यादिग्रहादित्यर्थः व्यतिरेकितया वेति पाठे अर्थात् अर्थापत्तिविधयेति परमतेन एवञ्च पक्षधर्म्मतया ज्ञायमानो हेतुः साध्याभावव्यापकीभूताभावप्रतियोगित्वज्ञानात् साध्यस्य साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानाच्च साध्याभावस्य साधनायोन्मुखौ मिथो विरोधेन नैकमपि साधयति। न च शब्दे नित्यत्वानित्यत्वसन्देहे तदुभयव्यापकत्वं शब्दत्वाभावस्य ग्रहीतुमशक्यं व्यापकत्वाभिमतशब्दत्वाभावाभाववच्छब्दवृत्ति-

तत्र नित्यत्वानित्यत्वयोः सन्दिह्यमानत्वादिति पाठः तथात्वेऽपि तादृशसपक्षाभावदशायां तथात्वनिश्चये सद् भयव्यापकीभूताभावप्रतियोगित्वस्य सत्त्वस्य शब्दे प्रतिस न्धातुं शक्यत्वात् व्याश्रयमपरतोत्येव गतौ तस्य सौरभादे भावस्य पार्थिवपाषाणादौ पृथिवीत्वतदभावसहचारेण सद् भयव्यापकतापन्ने तादृशाभावप्रतियोगिसौरभस्य गन्धमादा परामर्शे पृथिवीत्यादौ साध्ये तदसाधारण्यव्याप्तिसम्भ वाच्च । नन्वयं सत्प्रतिपक्ष एव व्याप्तेरन्वयनिरूपणत्वव्याप्या पकत्वेनाप्रयोजकत्वादित्यत आह सत्प्रतिपक्ष इति । नचैव विधभेदेन पृथगभिधानेऽति प्रसङ्ग स्वतन्त्रेच्छाया इत्यादि धर्म्यन्यतरस्यैवाभिधानात् तदभावसाधके तत्साधकत्वभ्रमरूपा गतिविशेषसूचनार्थत्वाच्च सत्प्रतिपक्षस्य व्यभिचारोभयमध्य पातात्तथा उभयान्तर्भावस्याविरुद्धत्वादित्यपि कश्चित् । सर्वसपक्षेति सपक्षः साध्यवान् पक्षवृत्तित्वे सति साध्याव्या पकीभूताभावप्रतियोगित्वमित्यर्थः इदञ्च साक्षादनुमिति विरोधि विरोधश्च साध्यसामानाधिकरण्यादिरूपोऽन्वय व्याप्तिग्रहविरोधीति न सार्वत्र्यगडापि साध्यसमानाधि करणत्वं नासाधारणं दूषयति शेषे तद्भ्रमस्तु पुरुषदोषो व्याप्य इव साधारण्यभ्रमः । नवीनास्तु पुनरेवं वर्णयन्ति सामग्रीद्वयविरोधेन हेत्वभावस्य साध्यतदभावव्यापक ताग्रहविरोधोऽसाधारणस्य दूषकताबीजं तथाहि हस्ति मत्ताहेतुना क्वचिदपि धर्मितय तत्र यावत्य साध्य

तदभावयोरन्यतरेण भवितव्यं न च तत्र हेत्वभावः सम्भवति अतोऽवश्यमन्यतराव्यापकत्वं तस्य एवंविधविरोधध्रौव्ये साध्येन तदभावेन च हेत्वभावस्य सहचारज्ञानं नैकतरनिरूपितामपि व्यापकतां ग्राहयति मिथो विरोधात् विरोधिपरामर्शद्वयमिव साध्यतदभावौ एवञ्च वृत्तिमत्त्वविशेषितं हेतोर्यावद्विपक्षसपक्षव्यावृत्तत्वं वृत्तिमत्प्रतियोगित्वविशेषितं वा हेत्वभावस्य यावत्सपक्षविपक्षवृत्तित्वमसाधारण्यमिति योजयन्ति च ग्रन्थमित्थं शब्दत्व यदि साध्यतदभाववद्व्यावृत्तत्वेन तदुभयव्यापकीभूताभावप्रतियोगित्वेन ज्ञात ज्ञानयोग्यं स्यात् तद्वत् स्यादिति यावत् तदा व्यतिरेकितया तादृशव्यतिरेकप्रतियोगित्वेनार्थात् पक्षे तदुभयं साधयेत् तदुभयसहचरितं भवेत् व्यापकाभाववति व्याप्याभावस्यावश्यम्भवात् अतथाभावे पक्षधर्मताया व्याप्तेर्व्वानुपपत्तिर्न च तथाभावः सम्भवति न वा पक्षवृत्तित्वं वाधितम् अतः साध्यतदभावौ व्यापकतया तदुभयसिद्ध्यनुकूलविरोधिव्याप्तिद्वयग्राहकव्यतिरेकसहचारद्वयग्रहविषयतया असाधारणो दोषो व्याप्तिद्वयग्रहप्रतिबन्धकः । ननु यदि विरोधिव्याप्तिद्वयं न गृह्यते तदा सत्प्रतिपक्षोच्छेदः गृहीतविरोधिव्याप्तिद्वयहेतुसमुत्थत्वात् तस्येत्यत आह सत्प्रतिपक्ष इति । तत्र हेत्वोर्भिन्नतयाधिकरणभेदेन तथा ग्रहः सम्भवति अत्र पुनरेकस्मिन् हेतौ तदुभयग्रहो विरुद्ध इत्यर्थः । अत्र चेदं चिन्त्यम् । एवं सति सपक्षादेर्यावत्त्वविशेषणं व्यर्थं

रूपकतायामनुपयोगात् व्यभिचारावच्छेदकतावच्छेदकगुरुत्वात् प्रमितिमत्त्वादिविशेषितस्यापि यासाधारण्यस्य ज्ञाने न व्याप्तिज्ञानविरोधि विरोधिविषयकताभावात् उपदर्शितविरोधस्य तच्छरीरेऽनन्तर्भावाच व्यापकतयोरपि च न स्मृतौ विरोध उपदर्शितरीत्या तदवधारणे चावश्यं व्यभिचारज्ञानमेव प्रतिबन्धकमत एव सत्यपि यासाधारण्यज्ञाने एतद्यानुकूल तर्कावतारे भवति व्याप्तिधीरिति एतेन तादृशसहचारज्ञानं तुल्यबलविरोधिव्याप्तिग्रहसामग्रीत्वेन प्रतिबन्धकं तर्कावतारे पुनस्तुल्यबलत्वमेव नास्तीति परास्तं तस्य व्यभिचारज्ञाननिवर्त्तकत्वेनैवोपयोगित्वात् सामग्रीत्वेन प्रतिबन्धकत्वे हेत्वाभासत्वायोगाच सत्प्रतिपक्षे च विरोधिव्याप्यवत्तानिर्णयत्वेन प्रतिबन्धकत्वं नतु विरोधिसामग्रीत्वेन बाधावतारे त्वापाततः सत्प्रतिपक्षितत्वेऽपि बाधेन प्रतिहेतोरव्याप्यत्वादिज्ञान एव साध्यानुमितिरुदयादिति कृतं पल्लवितेन ।

केवलान्वयीत्यादि सद्धेतुत्व साधारणत्वस्य केवलान्वयिन साधनस्य व्यतिरेकिणस्तु भागासिद्धस्य साधारणत्व विरुद्धत्वञ्च यथासम्भवं बोध्यम् । नाप्नोति केवलान्वयिसाध्यकवारणाय सत्यन्तं व्यतिरेकिसाध्यकसद्धेतुवारणाय केवलान्वयीत्यादि पदम् साधकबाधकमानशून्यत्वं केवलान्वयिसाध्यकेऽपि बाधकमानप्रसिद्धिरस्त्येवेति न सत्यन्तवैयर्थ्यं निश्चितसाध्याभाववत्त्वमात्रवृत्तित्वे त्वसाधारण्य विरुद्ध इति साधारणव्यवच्छेदशायामसाङ्कर्य्यमिति वा हृदयम् । अथवा

पक्षत्वादिति सद्धेतुत्वञ्च व्याप्तिनिश्चयदशायामेवेति भावः। अथेत्यादि पक्षातिरिक्तेन प्रतीतौ निश्चितौ व्याप्तिग्रहानुकूलोऽन्वयेन व्यतिरेकेण वा सहचारो यस्य स तथा सद्धेतुरेवेति तथाच लक्षणे पक्षातिरिक्तपदं सहचारग्रहस्थलमात्रोपदर्शकं न तु विशेषकमिति विशेषकत्वाभिप्रायेण दूषणद्वयमाह तत्रैवेत्यादि असाधारणे सपक्षव्यावृत्ते पक्षतादशायां शब्दोऽभिधेयः शब्दत्वादित्यादौ जलं निःस्नेहं शीतस्पर्शवत्त्वादित्यादौ च रूपं जलं वा द्रव्यभिन्नं गुणवत्त्वात् गुणकर्म्मावृत्तिजातिमत्त्वादित्यादौ विरुद्धे चातिव्याप्तिरित्यर्थः। दूषकतायामिति सहचाराभावस्यैव ज्ञानं विरोधि न तु तत्प्रत्ययांशस्यापीति अर्थगत्येति अनैकान्तिकशब्दार्थविवेचनेन प्रातिस्विकरूपेणैवप्रतिबन्धकत्वव्यवस्थितेरित्यर्थः। केचित्तु दूषकतायामसाधकतायाम्। अर्थेति अनैकान्तिकशब्दार्थे उभयकोट्युपस्थापकत्वादौ साध्योपस्थापकत्वाद्यंशस्य व्यर्थत्वादित्यर्थ इत्याहुः। विप्रतिपत्तिः पक्षसाध्याभावप्रीतितिः साध्ये पक्षनिष्ठाभावप्रतियोगित्वप्रतिपत्तिर्व्वा आद्ये केवलान्वयीति साध्याभावाप्रसिद्ध्या अव्याप्तिरित्यर्थः। उभयत्र सर्वस्येति अतिव्याप्तेरिति पाठे तन्मात्रवृत्तित्वं तत्रव्याप्यवृत्तिकत्वं तदितरावृत्तित्वं वा आद्ये केवलेति इदञ्च यथाकथञ्चिद्व्याप्तिग्रहदशायां द्वितीये सर्वस्येति व्याप्तीत्यादि यत्र यस्येत्यर्थः तथाच हेत्वभिमतशब्दोपसन्धानात् तद्धेतुकप्रकृतसाध्यसिद्ध्यौपयिकव्याप्तिग्रहानुकूलोपसं-

द्वाराभावस्तस्यानुपसंहारित्वमित्यर्थमाभादातिरेकिणि ना तिव्याप्ति । ननूपसंहार सहचार सम्निधर्यो वा साध्ये तादृशस्याभावो निखिलप्रसिद्धानुपसंहारणव्यापक इति व्यापकत्व रूप द्रव्यभिन्न गुणवत्त्वाद्गुणकर्मान्यत्वजातिमत्त्वा दित्यादे द्वितीये पुनरज्ञानरूपासिद्धिपर्य्यवसायी कारणा भावतया स्वरूपमसत्त्वेव दोषो न हेत्वाभास इत्यत आह केवलान्वयीति यत्र साध्यनिश्चयविरोधिन साध्यवान्न वेत्यादि सन्देहस्य विषयोऽवच्छेदकत्वस्य स्यान्मतदृत्तितत्त्वं तत्र स्वरूपमतोऽप्यविरुद्ध तेन प्रातिस्विकद्रव्यत्वादिरूपेण सर्वत्र साध्यसन्देहदशायां नाव्याप्ति एवञ्च सर्वत्रैव हेत्वा दिमति साध्यतदभावसन्देहाव्याप्यपक्षेणाभासत्वम । परार्थं व्यस्ते वहिर्भाव मुत्पादयति एवमित्यादिना असिद्धिरनिश्चय नामे ज्ञापने स्वार्थस्यमेऽन्तर्भावम् एतेनेत्यादिनागङ्गा निरस्यति उपजीव्यत्वादिति यत्रेद विमत हेतुमति साध्याभाव सन्देहो नाभास सत्त्वयैव विरोधित्वात् तद्विषयस्तु हेतो साध्याभावसामानाधिकरण्य साध्यस्य वा हेतुमद्विहाभाव प्रतियोगित्व नास्त्येव केवलान्वयिसाध्यके व्यतिरेकिसाध्यके तु साधारण्य रूपतया सन्दिग्धानैकान्तिकत्व पर्य्यवसितं विमत विषयकसाध्यतदभावसन्देहे च कारणीभूतान्वयव्यतिरेक सहचारग्रहविरहात् सगयसामग्र्या साध्यतदभावव्यतिनि श्चयप्रतिबन्धाद्वा व्याप्यपक्षेऽज्ञानरूपासिद्धिरेव उपजीव्योऽपि च साध्याभावसन्देहादिर्नाभास सत्त्वयैव विरोधादिति

यत्तु व्याप्तीति व्याप्तिग्रहानुकूलसहचारनिश्चयत्वावच्छिन्न-विरोधिरूपत्वमर्थः विरोधस्तु संशयसाधारणमन्वयमात्रसह-चारग्रहं विरुणद्धि असाधारणे व्यतिरेकिणि च न व्यति-रेकसहचारग्रहविरोधः तादृशरूपमन्तरेण लक्षणस्यासम्भ-वितया तदेव रूपं लक्षणमाह केवलेति तादृशावच्छिन्नः पक्षः सन्दिग्धसाध्यकोयस्याश्रयः स तथा तथाच केवलान्वयि-धर्म्मावच्छिन्नसाध्यसन्देहविषयवृत्तित्वमनुपसंहारित्वं व्यति-रेक्यादौ केवलान्वयी न साध्यसन्देहविषयतावच्छेदकः साध्यवत्तानिश्चयसामान्यविरोधिसंशयविषयवृत्तित्वं वा तत्त्वं धर्म्मिविशेषनियन्त्रितस्तु सन्देहो नान्यधर्म्मिकनिश्चयविरोधी साध्यसन्देहविषयताव्याप्य साध्यसिद्ध्यनुकूलव्याप्तिग्रहौप-यिकसत्ताकत्वं वा तादृशी च सत्ता अन्वये हेतोर्व्यतिरेके च तदभावस्येति न कश्चिद्विशेषः स्वरूपसत्तादृशसंशयविषये च हेतुमत्ताज्ञानं हेतौ साध्यसामानाधिकरण्यं संशयसामग्री-त्वेन तन्निश्चयप्रतिबन्धकं सर्व्वत्र संशयसामग्र्या निश्चयप्रति-बन्धकत्वकल्पनात् हेतुमति सर्व्वत्रसाध्याभावसन्देहे हेतौ साध्यसामानाधिकरण्याभावसंशयस्यौचित्यावर्जितत्वात् सा-ध्याभावेन साध्यसामानाधिकरण्याभावोपस्थापनादिति तन्न सर्व्वत्र साध्यसन्देहदशायां क्वचिदपि साध्यसामाना-धिकरण्यस्यागृहीतत्वेन तदभावस्य गृहीतुमशक्यत्वात् प्रति योगितावच्छेदकविशिष्टप्रतियोगिनिश्चयस्याभावधी हेतु-ताया असकृदावेदितत्वात् अस्तु वा स यथाकथञ्चित् साध्ये

हेतुसामानाधिकरण्याभावमात्रहेतुत्वेन वा तदापि न
तथापि सामर्थ्येन प्रतिबन्धकतया हेत्वाभासत्वम् अन्यथा
व्यभिचारिता व्यभिचरितसमानासमानाधिकरण्याव्याप्या-
व्यपक्षधर्मापक्षधर्मादिसाधनत्वेऽपि साधनादिसाधारण्यासा-
दिमत्त्वं हेतौ अथास्य आभासान्तरं स्यात् तदप्रसिद्धमेव
तस्यापि ज्ञानस्येतरसापेक्षेण तत्तद्विषयविरोधिविषयतया-
प्रयोगात् एवमसिद्धादिनिश्चायकसत्प्रतिपक्षसामग्र्यपि अपि च
हेतौ साध्याभावसन्देहविषयसाध्यवत्त्वस्य दूषणमिति मतं
तच व्यतिरेकिणि हेतौ नियतविषयेणापि सन्देहेन सम्भ-
वति दूषकताबीजसत्त्वे असाधारण्यादिसाधारण्यस्य न
दोषाय न वा यथैव निर्भरं कर्त्तणां हेत्वाभासत्वानुपपत्ते-
रुक्तत्वादित्यन्यत्र प्रपञ्चितम् ।

व्याप्तिपक्षप्रतिसन्धानघटकप्रयोजनकत्वेन साधारणादौ
नानैकं हेत्वाभासत्वं साधारण्येन व्यापकत्वस्याव्यभिचारि
त्वस्य वा असाधारण्येन सामानाधिकरण्यस्यानुपसंहारिणा
च व्यतिरेकव्याप्तेर्ग्रहस्य प्रतिरोधात् तथापि तु विशिष्टसाध्य
साधनपक्षाविरोधिनो ज्ञानस्य विषयतया व्याप्तिग्रहविरो-
धितावच्छेदकं रूपं व्याप्तित्वान्वयतो व्यतिरेकतश्च नानारूपा
प्रातिस्विककरूपेण उपादाय तावद्यथार्थो यत्नो वाच्य साध्य
साधनयोरप्रसिद्धेरसिद्धिभेदस्य वारणायाविरोधिन इत्यस्य
साध्यसाधनभेदेन व्यभिचारभेदापत्तेः विशिष्टं साध्यं साधन
वाप्रसिद्धं तत्र तद्ग्रहविरोधित्वं नोपादेयम् एवमन्यत्रापि

शेषं हेत्वाभासलक्षणोक्तदिशावसेयम् । व्यर्थविशेषणत्वन्तु न व्याप्तिग्रहविरोधीति वक्ष्यते साध्याव्यभिचरितसामानाधिकरण्यविरहस्य वह्निर्भावनीयत्वे पुनरन्वयव्याप्तौ व्यापकत्वमव्यभिचरितत्वं वा सामानाधिकरण्यञ्च विशकलितं युगपदुपादेयं तत्र साधारणत्वं वर्णितम् असाधारणत्वन्तु सपक्षव्यावृत्तत्वं सपक्षश्च साध्यवान् तद्व्यावृत्तत्वन्तद्वृत्तित्वग्रहविरोधित्वं प्रकृतसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयसामानाधिकरण्यग्रहविरोधितावच्छेदकमिति तु निष्कर्षः। संगृह्यते चेत्थं साध्यादेः साधनवदवृत्तित्वादिकम् । चाक्षुषस्पर्शवान् स्पार्शनशब्दवत्त्वादित्यादौ विशेष्ययोरसामानाधिकरण्यञ्च बाधासिद्धिभेदस्य च साध्यसाधनयोरवृत्तित्वस्यैव तत्साङ्कर्य्येऽपि न क्षतिः इदमेव च मणिकृता विरुद्धत्वम् इत्यञ्च तदीयमसाधारणत्वमेवविरुद्धत्वमिति। यत्र च धर्मिणि योधर्मो यादृशो हेत्वाभासः तद्व्याप्यमपि तद्विशेषोऽन्तरेण प्रकरणसमन्तद्व्याप्यञ्च पृथगुपदेशादविरोधाच्च अनुपसंहारित्वञ्च विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्यतिरेकव्याप्तिग्रहविरोधितावच्छेदकरूपवत्त्वं तादृशञ्च साध्यादेरत्यन्ताभावाप्रतियोगित्वादिकं वह्न्यभावाभावत्वेन वह्नेर्धूमाभाववदवृत्तित्वज्ञानं वह्न्यभावस्य धूमाभावव्यापकताज्ञानं कदाचिद्विरुन्ध्यादपि नतु वह्नित्वेनेति नातिप्रसङ्गः केवलान्वयिनि तत्सम्भवेऽपि अन्वयव्याप्त्युपादानेनानुमितिप्रतिरोध इति दिक् ।

साध्यविरोधित्वं साध्यप्रतियोगिकत्वम् एकदेशिमतेनाह अभावेत्यादि न च भावस्य स्वाभावविरहात्मकत्वं प्रतियोगित्वादिधर्मिग्राहकमानबाधः प्रतियोगित्वस्य सम्बन्धान्तरत्वात् स्वस्वाभावस्यैव षष्ठ्यर्थस्य तस्यावश्याभ्युपेयत्वात् विरहत्वञ्च नाभावत्वं बाधात् नापि तद्‌ग्रहप्रतिबन्धकग्रहविषयत्वम् अविरोधात् प्रत्यक्षेण दुर्ग्रहत्वाच्च न चानवस्था अभावस्य स्वाभावाभावत्वे बाधकाभावात् । भावस्य तथात्वे बाधकमाह बाधक इत्यादि अभावप्रतीते अभावत्वविशिष्टप्रतीते अभावत्वञ्च न भावभिन्नत्वं प्रथमं दुर्ग्रहत्वात् किन्त्वयमभावो न भाव इति प्रतीतिसाक्षिकं पदार्थान्तरतथानुपस्थितं निर्विकल्पकोपस्थितं वा प्रकारः अभावत्वञ्च समवेतत्वाच्च जातिः । अन्यथेति अतिप्रसक्तैरधिकरणैस्तदुल्लेख्यां अभावव्यवहारोपपत्तेरिति भावः लाघवादभाविताभावत्वैर्विशिष्टप्रत्ययवत्त्वातिरिक्तैकाभावसिद्धिमुक्त्वैव एते नाभावस्य सप्रतियोगिकत्वं तथाननुगततावच्छेदकानां प्रतियोगिनां कल्पने प्रत्यपास्तं संयोगादिसाधारण्याच्च । गमकत्वभ्रमेति व्यभिचारिण्यव्यभिचारभ्रमे विरुद्धे च सामानाधिकरण्यांशेऽपि भ्रम इति । अभक्तो विशेष इति दूषकतायामविशेषेऽपि नियतस्थानत्वेन विशेषाद्देशोपन्यासः अतएवानैकान्तिकसामान्यलक्षणे साधारणलक्षणे च विरोधवारकं विशेषणं छलजात्योर्निग्रहस्थानविशेषनिरनुयोज्यानुयोगविशेषत्ववदेतस्या नैकान्तिकविशेषसाधारणविशेषत्वे

व्याप्यत्वोपसंग्रह एवमुत्तरत्रापि । साधाव्यापकेति अत्र व्याप्यपदं स्वरूपपरम् । साधेत्यादि साध्यव्यापकसामा नाधिकरण्यग्रहविरोधिरूपवत्त्वादित्यर्थः तेन साध्यव्यापक वद्वृत्तित्वाद्युपसंग्रह सर्वत्र चोपलम्भपदं स्वरूपसिद्धिमात्र फलकम् । साध्याभावेति व्याप्यपदव्यत्यासेन साध्याभाव व्याप्यत्वेन साध्यव्यापकाभावत्वेन चेत्यर्थः । स्वसमानेति तथाच साध्याभावसाध्यव्यापकाभावयोर्भिन्नत्वसाध्यव्यापका भावत्वेनानुगमानाधिकरणमित्यर्थः प्रतियोग्युपलम्भात् स्वरूपत साध्यवत्त्वग्रहविरोधित्वात् तेन निर्वह्निकाम्यत्वादिसंग्रह । साध्यव्यापकेति अत्र व्यापकत्व भेदाभेदसाधारण तेन साध्याभावव्याप्यत्वसंग्रह । धूमवत्त्वादिति धूमाभावस्य वह्न्यभावव्यापकत्वग्रहदशायामस्य अधर्मेऽन्तर्भावो वह्न्यभाव- व्यापकवह्निसामग्र्यभावाभावव्याप्यत्वग्रहे च चरमे । इद पुनरिहावधेयम् । कथितरूपाणि किं स्वरूपतो ज्ञातान्येव सामानाधिकरण्यग्रहविरोधीनि असामानाधिकरण्यव्याप्य त्वेन वा नाद्यो व्यापकाभावव्याप्यत्वादेस्तदसम्भवात् न द्वितीय साध्याभावत्वसाध्याभावव्याप्यत्वयोः स्वरूपेणैव ज्ञातयोस्तथात्वात् तथात्वेऽपि तत्त्वमविरुद्धत्वमिति चेत् तर्हि यमसामानाधिकरण्यस्य समानाधिकरणाघटितत्तद्धर्मागाञ्च तथात्वादाधिक्य न च एतानि धर्मिविभाजकान्येव सर्वेषा मेव साध्याभावव्याप्यत्वे नैकविधत्वादिति विरोधोन्नायकप्रका रत्रैविध्येन धर्मिणोऽपि त्रैविध्याभिधानमितिवदन्ति ।

अयञ्चेत्यादि बाधस्वरूपासिद्ध्यन्यतरसङ्करस्तु आवश्यकोऽन्य-सङ्करस्तु काचित्कोऽज्ञानासङ्कराच्च पार्थक्यम् ।

एकत्र तदुभय इति व्याप्ये पक्षधर्म्मतायाः पक्षधर्मे च व्याप्यत्वस्यारोपः प्रत्येकमव्यापकोऽतो विशिष्टस्यारोपो वाच्यः स चैकधर्म्मिणि विरोधिव्याप्यद्वयविरहाद्विशिष्टस्याप्रसिद्ध्या न सम्भवतीत्यर्थः। विरुद्धादौ साधने स्वव्यापकसामानाधिकरण्यरूपव्याप्तेरप्रसिद्धेरित्यपि द्रष्टव्यम्। एकत्र भङ्गेति तथाचान्यतरत्वेन तदवधारणमस्तीति भावः सत्प्रतिपक्षितव्यवहारो हि सत्यमति वा साधने नापरामृश्यमाने नाप्यविद्यमानविरोधिपरामर्शे अतएव सन् प्रतिपक्षो विरोधिव्याप्त्यादिमत्तया परामृश्यमानो हेतुः विरोधिपरामर्शो वा यस्य परामृश्यमानस्य हेतोरसौ सत्प्रतिपक्ष इति विग्रहमपि वर्णयन्ति अतस्तदनुसारेणैव व्यवहारौपयिकं लक्षणमाह साध्येति बाधाश्रयासिद्धिनिर्णयवारणाय समर्थान्तं न चासौ न व्याप्तिपक्षधर्म्मतात्मकबलोपस्थितिरिति वाच्यं व्याप्तिपक्षधर्म्मताविरहस्य साध्यत्वे पक्षतावच्छेदकत्वे वा तत्सम्भवात् पक्षः साध्याभावव्याप्यवान् साध्यं पक्षवृत्तित्वाभावव्याप्यवदिति पक्षस्य व्यापकभेदेन च अन्वयव्यतिरेकभेदेन च व्याप्तेश्च भिन्नत्वादेकोपादानेऽन्यसंग्रहेण बलस्याविवक्षितत्वाच्च साध्यधीविरोध्यनुमितिजनकज्ञानविषयत्वेन तदुपादाय तदुपस्थित्यभिधानञ्च शिरोवेष्टनेन नासिकास्पर्शमनुधावति [illegible] साध्यसिद्धेर्विरोधित्वा[illegible] [illegible] न साध्य-

यानित्याद्युपस्थिते साधकविरोधी साधकसामान्यमतिमन्धक ज्ञानविषयो बाध साधकाभावादिमत्पक्षादिस्तदुपस्थितेर्या जननयोग्यता समानया अनोपस्थिता तथाविधव्याप्यादिगुता प्रतिबद्ध कार्य्यं यस्य तादृशलिङ्गत्वमित्यर्थ विरोधिव्याप्यादि- विषयत्वसच्चणयोग्यताशालिन्या अनुपस्थितेरप्रामाण्यगृह्ये स प्रतिपक्षत्वादप्यादकत्वात् कार्य्यप्रतिरोधानुदयम समान त्वञ्चागृहीताप्रामाण्यकसाध्यमि दोपयिकपरामर्ग-कालीनत्वम् असति गृहीताप्रामाण्यके वा परामर्गे सत्प्रतिपक्षितस्याव्यय चारविरहात् । यत्तु मानाख्यगिर्णयेमाधिकायत्सतथा बाधकस्य विरोधिपरामर्गस्य वारणाय समानेति तदसद्व्यभिचारेण प्रामाण्यगृहस्यावश्यत्वात् अन्यथाप्रामाण्यगृहानुकूलत्वेनैव क्वचित्तदुपयोगात् वक्षपदोपमन्दानाशोक्तदपत्नाभाव तदीयथ्य लिङ्गपदोपादानाश्च स्वीयलिङ्गतोपयिकपरामर्गलाभादात्मा दैव्युदास विरोधिपरामर्गप्रति तदकार्य्यकविशिष्टपरामर्गवि षयत्वन्तु फलितार्थः । अगृहीताप्रामाण्यकत्वसत्यलिततयोग्यतो पादाने तु बाधोपस्थितिसमर्थपरामर्गकालीनसाध्यसिद्धि- समर्थपरामर्गविषयत्व पाप्य तत्त्व यदि चार्य वह्निव्याप्यवान् वह्न्यभावव्याप्यव्याप्यवांश्चेति परामर्गादयं वह्निमान् वह्न्यभाव व्याप्यवांश्चेत्यनुमिति' प्रामाणिकी न तु सत्प्रतिपक्षस्तदा कार्य्यप्रतिरोधोऽवश्यमुपादेयोऽभिमतविरोधिबोधकालेन च विरोधिपरामर्गविशेषणीय अतएवाग्रिमलचणे विरोधिबोध कालेति फलतो प्रामविशेषणं एकत्राप्रामाण्यगृहेणापरेणात्

मितिजननात् तद्वारणाय वा तत्प्रतिरुद्धकार्य्यत्वञ्च प्रतिरुद्ध-कार्य्यपरामर्शविषयत्वम्। एकदेत्यादि । न च द्वितीयस्य परा-मर्शस्योत्पादनसमये पूर्व्वेणानुमितिजननात् कथं नैरन्तर्य्य-मिति वाच्यं साधकमानादिवशेन क्षणमनुमित्यनुत्पादसम्भ-वात् । स्वपरेति अयं भावः न खलु सम्भवन्तः सर्व एव हेत्वा-भासाः समुद्भाव्याः आधिक्यप्रसङ्गात् परन्तु यथाकालमेकः तथाच प्रतिपक्षोद्भावनेऽपि नाप्रतिषेधमात्रेण व्याख्याद्यभ्यु-पगम इति । प्रतिरुद्धत्वेति प्रतिरोधप्रयोजकविरोधिव्याप्य-स्याद्धेत्यर्थः । उभयोरिति परस्पराभावव्याप्यत्वं हि हेत्वो-र्विरोधः तन्न हे च तयोरेकत्र निर्णयो न विरुध्यते इति भावः। दूषकतेति विरोधिपरामर्शसत्त्वे नियमेन परामर्शा-न्तरादनुमित्यनुत्पादः तस्यानुमितिविरोधित्वं कल्पयति नतु तेन ज्ञाप्यमानस्य व्याप्त्यादिविरहस्य सद्भूतावपि तस्या-नुमितिविरोधित्वादित्यर्थः । व्याप्त्यादिविरहज्ञानद्वारा अस्य दूषकत्वमाह एकत्रेति वाकारोऽनास्थायां प्राथमिकावश्यका-नुमितिप्रतिरोधेनैव तथात्वात् परमुखनिरीक्षकत्वेन तद्विषय-स्याशमत्वायोगाच्चेति । ननु विरोधि परामर्शो यदि विप-रीतनिर्णयविरोधी कथं तर्हि सति विशेषदर्शने नयना-दिनन्मा पीतत्वादिभ्रम इत्यत आह चक्षुरादेश्चेति चस्त्वर्थः । अथ व्याप्तिपक्षधर्म्मते यदि बलं कथं तर्हि प्रत्यक्षादेः प्रति-रोधकतया कथायामुपन्यास इत्यत आह प्रत्यक्षादेरिति । अत्र हेतुमाह कथायामिति प्रत्यक्षस्य स्वरूपसत्तयैव विरो-

धकत्वात् विरोधिव्याप्यमात्रस्यानुमितिविरोधित्वात् योग्या
भावव्याप्यवत्तानिर्णयेनैव ग्राह्याभावप्रतिरोधाच्चेति ।
एतत्कोपक्षतामयमभिप्राय एकधर्मिकाविरुद्धानेकप्रकारक
नानाधर्मिकविरुद्धाविरुद्धनानाप्रकारकज्ञानस्यादिवदेकधर्मि-
कविरुद्धानेकप्रकारकज्ञानत्वमेव संशयत्वं न जन्यतावच्छे-
दकं तत्तद्धर्मिकतत्तत्प्रकारकज्ञानत्वप्रयोजकसामग्रीप्रयोज्य
त्वात् सामग्र्याश्च कचिद्विरोधसामग्र्यापि तत्प्रयोजकाधीनत्वात्
नोऽन्तरपटत्वपटत्वाप्रकारकज्ञानस्यैकधर्मिकाविरुद्धानेकप्रका
रकान्यज्ञानत्वादिवत् संशयान्यज्ञानत्वादिरपि निरवद्यमपि
न जन्यतावच्छेदकं तत्प्रयोजकविरहादेव तत्त्वविरहादुप
पत्तेः एवञ्च तुल्यबलाभ्यां विरुद्धोभयसामग्रीभ्यां जायमान
ज्ञानमर्थात् संशय एव भवति अत एवाहत्यैव विप्रतिपत्तिजन्यमान
संशयमामनन्ति कम्बलकण्ठीयाः न्यूनाधिकसमबलभाव
सत्यामपि पीतत्वशुक्लत्वस्मृतौ सविधवर्त्तिनि शङ्खे सति
दोषविशेषे पीतत्वस्यैवासति च शुक्लत्वस्यैव दूरस्थे च धर्मिणि
असति विशेषदर्शने स्मृतयोरेव कोट्योः सति च एकस्या एव
नयनेन ग्रहात् अयथार्थसदृशाभ्यां विरोधिसंस्काराभ्यां स्मरण
मपि संशयात्मकं स्यात् किं न स्याद्यदि च नानुभवबाध
येन गुरुणापि विषयत्वेन संस्कारजनकत्वमुपेयते भवता
अथ विरोधिनो निर्णयोऽनुमितिप्रतिबन्धको विरोधित्वञ्च
समानविषयस्थायित्वं साध्याभावस्येव तद्व्याप्यस्यापीति चेत् यदि
वस्तुतो विरोधिनो निर्णयस्तथा कथं तर्हि पक्षतावच्छेदका-

देस्तादृशस्य निश्चये भ्रमानुमितिः अथ विरोधित्वेन तदा तदग्रहे नेह साध्यमित्यादिनिर्णयेऽप्यनुमितिप्रसङ्गः अथ विशेषदर्शनं विरोधिबुद्धिप्रतिबन्धकं कथमन्यथा तदनन्तरं न भ्रमसंशयाविति चेन्न सत्यपि शुक्लत्वादिव्याप्यदर्शने शङ्खादौ दुष्टेन नयनेन पीतत्वादेरदुष्टेन च पीतत्वादिव्याप्यवत्तानिश्चये सत्यपि शुक्लत्वादेर्ग्रहात् सति च विशेषदर्शने क्वचिदुपनीतभानानुदयात् एतः प्रमितस्य स्थाणुत्वादेः शाखादौ करादिभ्रमेणाग्रहात् तत्तत्स्थलविशेष एव तस्य प्रतिबन्धकत्वमिति । अत्राहुः अनुगतकार्य्यकारणभावानुरोधात् दोषविशेषाद्यजन्ये ज्ञाने कदाचिदनुभवे वा विशेषदर्शन विरोधि कल्प्यते न च प्रत्यक्ष एव तथा सामान्ये बाधकाभावात् बोध्याभावव्याप्यवत्तानिश्चयेन शाब्दादिधीप्रतिबन्धाच्च अथ विशेषान्तरदर्शनविरहविशिष्टमेव तत्तथा अन्यथा कोटिद्वयविशेषदर्शने संशयो न स्यादिति चेन्न भवत्येव तावद्यावदप्रामाण्यं न गृह्यते अगृहीताप्रामाण्यस्यैव विशेषदर्शनस्य विरोधित्वादिति । विरुद्धस्येति साध्याभावव्याप्यस्येत्यर्थः । बाध इति हेतौ प्रकृतेऽन्यत्र वा अपक्षधर्मे च पक्षधर्मताबाध इति शेषो वा तथाच हेतौ व्याप्तिपक्षधर्मतान्यतरभङ्ग इत्यर्थः । प्रकृतेति प्रकृतसाध्ययोर्यौ हेतू तयोरित्यर्थः । संशयादिति जन्यदुःखोत्सारणरूपेष्टसाधनताज्ञानात् अन्यत्र चेष्टान्तरसाधनताज्ञानाज्ज्ञानेच्छेति भेदेन विकल्पोपन्यासः । असतीत्यादि हेतुसमीचीनत्वासमीचीनत्वसंशयजन्य-

दुःखाभावकपेटसाधनताज्ञानदर्शनेन निश्चायमोपयोगित्वादि त्यर्थः उत्पत्तिकाले उत्पत्तिपूर्वकाले व्याप्तिपक्षधर्मताज्ञान योरुत्पादक्रमानियमादुभयोर्नायकत्वमुक्तम् उत्पत्ताविव चा तयोरन्वयः यत्र च व्याप्तिपक्षधर्मतयोः समूहालम्बनं तत्र द्वितीयपरामर्शोत्पत्तिकाले एव प्रथमपरामर्शनाश इत्यस्य निरुक्तसत्प्रतिपक्षितत्वस्य । जात्यन्येति सत्ता कम्बुग्रीवा दिमत्त्वादावेकैकस्य व्यभिचाराद्विशिष्टोपादानम् । घटमि ष्ठेति घटनिष्ठात्यन्ताभावत्वेन सामान्यतः पक्षत्वाच्च बाधा- श्रयासिद्धी। समवायस्य समवेतत्वादौ द्वितीयस्य घटाभावादौ व्यभिचार इत्यत आह विशेषादर्शनेति वस्तुतो घटो नाभि धेय कम्बुग्रीवादिमत्त्वादित्यादि व्यतिरेकिणा सत्प्रतिपक्ष सम्भवत्येव व्यापकाभावेनाप्रसिद्धस्यापि व्याप्याभावस्य नि रूपाभ्युपगमात् प्रत्येकपदार्थप्रसिद्धौ तादृशप्रतिपाद्युपपत्ते र्विशिष्टस्य वाक्यार्थत्वात् सत्प्रतिपक्षस्तु साध्याभावव्याप्यवान् साध्यवदन्यत्वव्याप्यवांश्च पक्षः पक्षनिष्ठौ साध्याभावसाधव द्व्याप्यौ इत्येवमादि प्रत्येकमेव विभाजकन्तु प्रकृतपक्षसा ध्यवैशिष्ट्यग्रहविरोधित्वे सति प्रकृतपक्षसाध्यग्रहाविरोधिप्रकृ तपक्षसाध्यवैशिष्ट्यग्रहविरोधिग्रहयोग्यसाधकत्वं तद्ग्राहकत्वञ्च यादृशविशिष्टविषयत्वेन परामर्शस्यानुमितिजनकत्वं तत्त्व तत्र साध्याभावव्याप्यवत्पक्षादिकम् असाधारणविरोधयो रन्यतरस्य प्रतिपक्षविधया दोषत्वपक्षे प्रकृतसाधने प्रकृत साध्यव्यापकाभावप्रतियोगित्वाद्यवगाही परामर्शो बाध्य

अत्र सत्यन्तेन सत्प्रतिपक्षोन्नायकस्य अविरोध्यन्तेनाश्रया-सिद्ध्याद्युन्नायकस्य विरोध्यन्तेन वह्निव्याप्याभावे साध्ये वह्निव्याप्यवत्पक्षात्मकस्य बाधस्य व्युदासः सङ्गच्छते चानेन काञ्चनमयवह्निमानित्यादौ वह्न्याद्यभावव्याप्यह्रदत्वादिमान् पक्ष इति। सत्प्रतिपक्षे च यथासिद्धान्तं पञ्चावयवादि-प्रयोगमिच्छन्ति अयं हेतुः साध्यव्यभिचारवानित्यादिवदयं पक्षः साध्याभावव्याप्यवानित्यादिकमुद्भावनं पुनरुचितं प्रतिभाति। वस्तुत इत्याद्यभ्युच्चयमात्रं विशिष्टपरा-मर्शविरोधित्वेन विशिष्टाभावस्य दोषताया दुर्वारत्वात् प्रत्येकाभावमज्ञात्वापि शब्दादिना शक्यग्रहत्वात् व्यर्थविशे-षणत्वस्य चासाधकतासाधन एव सम्भाव्यत्वात् न वा तदपि तादृशाभावनिष्ठव्याप्तेर्द्धर्मान्तरेणावच्छेत्तुमशक्यत्वात् विशे-ष्यादिप्रतियोगिकत्वमात्रस्य व्यभिचारिसाधारणत्वादिति। व्यभिचारादेरिति सद्धेतौ सद्धेतुत्वेन ज्ञायमाने तदानीं सि-द्धेरप्रतिबन्धेऽपि कालान्तरगृहीतेन व्यभिचारादिना तदानी-न्तनाभासत्वं सुग्रहमिति तु ध्येयम्। तेन रूपेण तत्साधारण रूपेण। वह्न्यभावेनेति वह्न्यभावस्तु न प्रतिबन्धकः कारणीभूतो योऽभावस्तत्प्रतियोगिनएव तथात्वात् यदभावत्वेन कारणत्वं तदेव तथेत्यपि कश्चित्। परामर्शेत्यादि। ननु परामर्श-विषयाभावत्वमनाभासे आभासत्वविशेषितमपि बाधविशेषे परामर्शविरोधित्वविशेषितञ्च हेतोः साध्यासामानाधिक रण्येति प्रसक्तम् अप्रसक्तञ्च साधनाद्यभाववत्पक्षादौ पक्षादेः

साधनवदन्यत्वादौ साधनादेः पक्षादिवृत्त्यन्यत्वघटितत्वाभाव प्रतियोगित्वादौ अतएव यस्य यत्सत्त्वे परामर्शविषयत्वाच्च तदभाववत्त्वं तदिति शब्दमात्रानुगतं प्रयुक्तं परामर्शविरोधित्वमात्रञ्च सव्यभिचारेऽतिप्रसक्तं न च तदन्यत्वेन विशेषणीय मित्यौ घटो द्रव्यं प्रमेयो वा जन्यत्वादित्यादौ तदप्रामसिद्धेः । अथ पक्षतावच्छेदकरूपेण पक्षे हेतुतावच्छेदकरूपेण हेतोर्यद्विशिष्टज्ञानं साध्यतावच्छेदकविशिष्टसाध्यावगाहितद्विरोधित्वं तदिति चेन्न पक्षवृत्तित्वविशिष्टसाध्यव्यभिचरितसामानाधिकरण्याद्यभावाव्याप्तेः । न च विशिष्टपक्षविशिष्टसाधनवैशिष्ट्यविशिष्टसाध्यपक्षाविरोधिव्याप्तिपक्षधर्मताविरोधि तदन्यत्वे सति परामर्शविरोधित्वं तत् विशिष्टपक्षवैशिष्ट्योपादानाद्वह्निमान् वह्निमान् जलहृदत्वादित्यादौ व्याप्तिपक्षविरोधिन्या अपि स्वरूपासिद्धेर्नासंग्रह इति वाच्यं जलहृदो वह्निमान् काञ्चनमयवह्निमान् वा धूमात् काञ्चनमयधूमादित्यादौ व्याप्तिग्रहविरोधिनस्तादृशपक्षाविरोधिनो रूपद्वयासिद्धेः । उच्यते (१) साधारण्य

---

(१) जागदीशसम्प्रदायिकः पाठः ।

भवानन्दादिसम्मतन्तु ।

साधारण्यासाधारण्यभिन्नं तज्ज्ञानस्य विषयतापरामर्शविरोधितावच्छेदकरूपमसिद्धिः । अत्राव्यभिचारिमेयत्ववान् वह्निसमानाधिकरणशब्दत्ववान् वा पर्वतो वह्निमान् मेयत्वात् शब्दाद्वेत्यादौ

कथितासाधारण्यानुपसंहारित्वभिन्नं ज्ञानस्य विषयतया परामर्शविरोधितावच्छेदकं रूपमसिद्धिः यत्र साधारण्यादिकमप्रसिद्धं यत्र च वह्न्यव्यभिचारिमेयत्ववान् वह्निसमानाधिकरणह्रदत्ववान् वह्न्यभावव्यापकीभूताभावप्रतियोगिह्रदत्ववान् वा पर्वतो वह्निमान् मेयत्वात् ह्रदत्वादित्यादौ साधारण्यादिकमप्रसिद्धं तत्र तदन्यत्वं नोपादेयं शब्दानुगमस्याकिञ्चित्करत्वात् परामर्शे च व्याप्तिव्यतिरिक्तोऽप्युपा-

---

आश्रयासिद्धिविरहेऽपि न क्षतिः असिद्धित्रयस्यासार्वत्रिकत्वात् आश्रयासिद्धिलक्षणस्य चासिद्धिघटितत्वान्नातिप्रसङ्गः। प्रकृतपक्षाप्रविष्टाभावकसाधारण्यादिभिन्नं वा वक्तव्यम्। परामर्शे चान्वयव्याप्तिरुपादेया तेनानुपसंहारित्वव्युदासः साध्यसाधनभेदेनासिद्धिभेदात् यत्र साधारण्यादिकमप्रसिद्धं तत्र तदन्यत्वं नोपादेयं यथा काञ्चनमयः पर्वतो ह्रदो वा वह्निमान् मेयो वा धूमात् मेयत्वादित्यादौ पर्वतान्यः पर्वतो दहनान्यदहनवान् धूमान्यधूमादित्याद्यसिद्धिसम्पादनाय हेत्वाभासलक्षणोक्तरीतिरनुसरणीया। तत्र विशिष्टपक्षग्रहस्य विरोधिन्यसिद्धिर्विरोधिरूपं वाश्रयासिद्धिः प्रकृतपक्षप्रकृतहेतुग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयविशिष्टग्रहविरोधितावच्छेदकं स्वरूपासिद्धिः संगृह्यते चानेनानित्यं गगनं रूपवत् चाक्षुषस्पर्शाश्रयत्वादित्यादौ निस्पर्शादिकम् एवं शब्दो द्रव्यं गुणान्यत्वे सति सत्त्वात् गुणान्यत्वविशिष्टसत्त्वं द्रव्यत्वव्यभिचारिगुणवृत्तित्वादित्यादावपि नाव्याप्तिः तदुभयभिन्नासिद्धिर्व्याप्यत्वासिद्धिः पक्षादिभेदेनासिद्धिभेदात् यत्राश्रयासिद्ध्यादिकमप्रसिद्धं तत्र तदन्यत्वं न वाच्यमिति।

देया नातो व्यतिरेकव्याप्तिविशिष्टपक्षधर्म्मत्वाभावादावव्याप्ति साधारण्यादयनिरूपितया ज्ञानस्य विषयितया परामर्शविरोधितावच्छेदकरूप वा असिद्धि अतएव द्रव्यत्वाव्यभिचारिगुणद्रव्योभयसमवेतवान् द्रव्यत्वसमानाधिकरणगुणसमवेत कर्म्मासमवेतवान् वा घटो द्रव्य मत्वात् द्रव्यकर्म्मासमवेतसमवेतादेत्यादौ गुणद्रव्योभयसमवेतादिनिष्ठस्य द्रव्यत्वव्यभिचारित्वादे सत्तादिनिष्ठद्रव्यत्वव्यभिचारित्वाद्यात्मकसाधारण्यादितोऽनतिरिक्तत्वेऽपि न क्षति पर्वतान्य पर्वतो दहना न्यदहनवान् धूमान्यधूमादित्यादावप्तिविप्रम्मादमाय ऽत्वा भासोक्ता नैतिरनुसन्त्व्या तच ज्ञानस्य विषयतया विशिष्ट पक्षपक्षविरोधितावच्छेदक रूपमाश्रयासिद्धि । विशिष्टपक्ष विशिष्टसाधनपक्षाविरोधिनो ज्ञानस्य विषयतया तदुभय वैशिष्ट्यपक्षविरोधितावच्छेदक स्वरूपासिद्धि । संग्रासे चेत्यमनित्यगमनं रूपवत् चाक्षुषस्पर्शवत्त्वादित्यादौ गगनादे निस्पर्शत्वादिकम् । तदुभयभिन्नासिद्धिर्व्याप्यत्वासिद्धि । पक्षा द्विभेदेनासिद्धेर्भेदायत्वाश्रयासिद्ध्यादिकमप्रसिद्ध तच तद न्यत्व न वक्तव्यमिति । सविषयकत्वेनिमक्तसाध्यसाधनपक्ष विरोधितामवच्छेदकप्रक्षतपक्षमक्षतसाधनवैशिष्ट्यपक्षविरोधितावच्छेदकरूपय शून्यज्ञानस्य विषयीऽसिद्धिर्व्याप्यत्वासिद्धि साध्यपदोपादानात् पर्वत पर्वतवृत्तिह्रदत्वयान् ह्रदत्वादित्यादौ साध्याप्रसिद्धेर्भासयक्ष तस्या स्वरूपासिद्धौ निवेशादनुपादेयमेव वा साध्यमित्यपि कश्चित् । साध्यत्वे

त्वप्रसिद्धिव्याप्तिविशिष्टपक्षधर्म्मतादि विरहादयश्चैतद्भेदाः । यत्तु हेतुतावच्छेदकस्य व्याप्यतानवच्छेदकत्वम् अपि व्याप्यत्वासिद्धिः नीलधूमत्वादेश्च तथात्वं समानाधिकरणं सम्भवदवच्छेदकान्तरमपेक्ष्य गुरुत्वादिति अतावच्छेदकत्वं यद्यनतिरिक्तवृत्तित्वं तदा तस्याप्यस्ति। अथ तादृशेन समानाधिकरणेन तादृशेन वा धर्म्मान्तरेणाघटितत्वे सति तच्च तन्न सत्यन्तस्य गौरवेणानुपादेयत्वात् नापि अन्यूनानतिरिक्तवृत्तित्वम् आलोकाद्यवृत्तेर्धूमत्वादेरप्यतथात्वापातात् । अथ स्वरूपसम्बन्धविशेषः तर्हि द्रव्यं रूपादित्यादौ रूपत्वादेरपि तथात्वं न स्यात् रूपादिषु चतुर्विंशतौ सम्भवदवच्छेदकमेकं गुणत्वमपेक्ष्य रूपत्वादीनां चतुर्विंशतेः षड्विंशतेर्वा गुरुत्वात् एवं पशुमान् सास्नादिमत इत्यादौ सास्नादिमत्त्वादेरपि गोत्वादिकां जातिमपेक्ष्य उपाधेर्गुरुत्वात् हेतुतावच्छेदकविशिष्ट हेतुव्यापक साध्यसमानाधिकरणतादृशहेतोः साध्याव्यभिचरितसम्बन्धितादृशहेतोर्वा ज्ञानस्यानुमितिकारणस्याविरोधिनो निरुक्तानवच्छेदकत्वस्य दोषत्वायोगाच्च । परार्थस्थले तु दृष्टान्तस्य साध्यादिवैकल्यवत् हेतोर्व्यर्थविशेषणत्वमपि निग्रहस्थानविभाजकसूत्रस्यानुक्तसमुच्चयपरेण चकारेण समुच्चितं पृथगेव निग्रहस्थानम् ।

अतिरिक्तविषयतावादिमतेनाह पक्षेति पक्षः साध्याभाववानिति ज्ञाने पक्षनिष्ठविशेष्यत्वस्य प्रकारः साध्याभाव इति लक्षणसमन्वयः । विवक्षितेति हेत्वादिविषयत्वेनाप्रतिबन्धक-

त्वादिति भाव । साध्याभावप्रमात्वघटे पक्षे साध्याभाव त्ववपक्षस्यावश्यकत्वाभिप्रायेण साध्याभावस्य बाधत्वघादि मतेन वा प्रकृते अथेति पक्ष इति व्यासौ निश्चितायां पक्ष तत्समयो साध्याभावसंशयो न दोषायेत्यर्थः । अनुमित्यु त्पादेनेति फलतोऽपि विरोधित्वप्रदर्शनाय अतएव न्याय स्वरूपतो विरोधित्व द्रढ़यति अन्ययेति । हेत्वाभासाधीन मिति न च हेत्वाभासस्यानुमित्याभासत्वप्रयोजकत्वे साध्य वति पक्षे लिङ्गाभास जन्याया अनुमितेराभासत्वापत्ति' र्लिङ्गोपधाने तथात्वस्येष्टत्वात् पक्षासिद्धिरित्यस्य बाधक मानविरहेणेत्यादि' लिङ्गस्येत्याद्यभ्युपयमात्र वह्नेरपक्ष त्वात् कार्यत्वमयत्वस्यासाध्यत्वात न च साध्याभाव इति अनुमित पूर्वं विशिष्टस्याप्रसिद्ध्या तदभावस्याज्ञानादिति भवतैवोक्तत्वादिति भाव । तथापेत्यादि अधिकरणत्वेनाधि करणरूपत्वेनापेक्षणीयोव्यभिचारनिश्चय । साध्याभावनि श्चयेति साध्याभावो निर्णीयते येन प्रमाणनिर्णयेन तद धीनेत्यर्थः । अपेदं तत्त्वम् । साध्याभाववान् साध्यवदन्यो वा पक्ष पक्षावृत्तिसाध्यं पक्षे साध्याभाव' पक्षनिष्ठसाध्या भावपत्त्वादिकं साध्यादे पक्षावृत्तित्वादिकं साध्यवत् सामा न्यादे' पक्षान्यत्वादिकं विशिष्टसाध्ये पक्षादेर्विशेष्याभाव वत्त्वादिकं यथामत पक्षे साध्यवत्ताप्रामण्य बाधाद्विरोधि प्रत्येकमेव बाध' तन्निश्चयस्य विरोधिनिश्चयत्वेन दोषविशेषा धजन्यप्रमामात्र एव विरोधी अतएवागमनयनिश्चयविरक्तो

योग्यतेत्याचार्य्याः । विभाजकन्तु प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्यनुन्नायकत्वे प्रकृतपक्षप्रकृतसाध्यग्रहाविरोधित्वे च सति प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोधित्वं पक्षादेः साध्यासमानाधिकरणधर्म्मवत्त्वादिकमपि बाध एव साध्याभाववत्पक्षादिज्ञानप्रमात्वन्तु न बाधः तज्ज्ञानस्य पक्षादौ साध्याभावादेरनवगाहित्वे विरोधिविषयत्वाभावात् अवगाहित्वे तु तद्विषयत्वेनैव प्रतिबन्धकत्वात् प्रमात्वनिश्चयस्यान्यत्र प्रतिबन्धकत्वाकल्पनाच्च सर्व्वत्र निश्चयस्य हेतुत्वे प्रतिबन्धकत्वे च भ्रमत्वाग्रहः संशयसाधारणज्ञानमात्रस्य तथात्वे तु भ्रमत्वानिश्चयः प्रयोजकोऽन्यथाकाङ्क्षाकृतिसाध्यत्वादिनिश्चयहेतुप्रतिहेतुपरामर्शादीनां प्रमात्वनिश्चयो योग्यता व्यभिचारज्ञानादीनाञ्च प्रमात्वज्ञानं प्रयोजकौ भवेत् शङ्खादौ शुक्लत्वाभावभ्रमे च शुक्लत्वाद्यनुमितिर्न विना तदप्रामाण्यग्रहं नहि स्वरूपसत्यपि बाधनिश्चये शाब्दमानसादिज्ञानमुत्पद्यते । अथ लाघवेन संशयसाधारणं संसृष्टत्वज्ञानमेव शाब्दानुमित्योः कारणम् आस्ताञ्च तस्यैव विरोधितया प्रकरणसमोबाधश्च हेत्वाभासोऽसिद्धिरिव परामर्शस्य विलोपताच्चाप्रसिद्धसाध्यकमनुमानमिति चेन्न संशयासत्त्वसमये परामर्शोत्पादे सिद्धिसिषाधयिषे विना अनुमित्यनुत्पादप्रसङ्गात् सति विशेषदर्शने संशयायोगादिति एतेन लाघवात् प्रमात्वेन निर्णीयमानं बाधज्ञानं विरोधीति परास्तम् ।

विपरीतमेव साधयं स्फुटतरञ्च तद्भावसाध्य तत्र हि
गोत्वाद्यप्रकारक गोत्वाभावादिप्रकारक ज्ञान बाधनिश्चय
तथाच गोत्वादिमद्विशेष्यकगोत्वाद्यभावप्रकारकत्वज्ञाना
भावोऽभ्रमत्वग्रहविरह बाधग्रहस्य पक्षे गोत्वाद्यप्रकारक
ज्ञान तस्य च गोत्वादिमद्विशेष्यकगोत्वाद्यभावप्रकारकत्वा
द्यप्रकारकं गोत्वाद्यभाववद्विशेष्यकगोत्वाद्यभावप्रकारकत्वप्र
कारकज्ञानं प्रमात्वनिश्चय इत्युक्तप्रायञ्च तत्तत्कार्य्यं प्रति
प्रतिबन्धकानां कारणानाञ्च प्रमात्वेन निर्णीयमानतया
तथात्वापत्तिरिति। न च सति विशेषदर्शने विपरीतनिश्च
योऽकिञ्चित्कर तत्सत्त्वेऽपि विशेषदर्शनेन प्रत्यक्षोत्पादादिति
वाच्य विशेषदर्शनेन तज्ज्ञानानन्तरमेव प्रत्यक्षोदयात् परैरपि
क्वचित् प्रत्यक्षविशेष एव विपरीतनिश्चयविशेषस्यैव तथात्वो
पगमाच्च। नहि शाब्दादिबोधेऽपि विशेषादर्शनविशिष्टत्वेन
स विरोधी गौरवात् मानाभावाच्च। न वा चाक्षुषादिप्र
त्यक्षे मानसादिविपरीतनिश्चयो विरोधी उपयुज्यते च क्वचि
द्विशेषदर्शनमप्रामाण्यग्राहकत्वेन बाधग्रहे। नन्वेवं बाधा
वतारदशायां पक्षे हेतोरपक्षेऽभावलक्षणासिद्धि यदि च
व्यभिचारधीरेवेति वाच्य बाधपक्षपरामर्शयोर्भेदात् अभे
देऽपि पक्ष' साध्यव्याप्यहेतुमान् साध्याभाववांश्च इति ग्रहस्य
परस्परोपरागानवगाहिनोऽव्यभिचाराविषयत्वात् एकत्र व्य
भिचाराव्यभिचारयोरेकनिश्चयागोचरत्वात् पूर्वं च कश्चि
साक्षादनुमित्यविरोधिनो व्यभिचारज्ञानादेरकिञ्चित्करत्वात्

योग्यतेत्याचार्य्याः। विभाजकन्तु प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्यनुन्नायकत्वे प्रकृतपक्षप्रकृतसाध्यग्रहाविरोधित्वे च सति प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोधित्वं पक्षादेः साध्यासमानाधिकरणधर्म्मवत्त्वादिकमपि बाध एव साध्याभाववत्पक्षादिज्ञानप्रमात्वन्तु न बाधः तज्ज्ञानस्य पक्षादौ साध्याभावादेरनवगाहित्वे विरोधिविषयत्वाभावात् अवगाहित्वे तु तद्विषयत्वेनैव प्रतिबन्धकत्वात् प्रमात्वनिश्चयस्यान्यत्र प्रतिबन्धकत्वाकल्पनाच्च सर्वत्र निश्चयस्य हेतुत्वे प्रतिबन्धकत्वे च भ्रमत्वाग्रहः संशयसाधारणज्ञानमात्रस्य तथात्वे तु भ्रमत्वानिश्चयः प्रयोजकोऽन्यथाकाङ्क्षाकृतिसाध्यत्वादिनिश्चयहेतुप्रतिहेतुपरामर्शादीनां प्रमात्वनिश्चयो योग्यता व्यभिचारज्ञानादीनाञ्च प्रमात्वज्ञानं प्रयोजकी भवेत् शङ्खादौ शुक्लत्वाभावभ्रमे च शुक्लत्वाद्यनुमितिर्न विना तदप्रामाण्यग्रहं नहि स्वरूपसत्यपि बाधनिश्चये शाब्दमानसादिज्ञानमुत्पद्यते। अथ लाघवेन संशयसाधारणं संसृष्टत्वज्ञानमेव शाब्दानुमित्योः कारणम् आस्ताञ्च तस्यैव विरोधितया प्रकरणसमोबाधश्च हेत्वाभासोऽसिद्धिरिव परामर्शस्य विलीयताञ्चाप्रसिद्धसाध्यकमनुमानमिति चेन्न संशयासत्त्वसमये परामर्शोत्पादे सिद्धिसिषाधयिषे विना अनुमित्यनुत्पादप्रसङ्गात् सति विशेषदर्शने संशयायोगादिति एतेन लाघवात् प्रमात्वेन निर्णीयमानं बाधज्ञानं विरोधीति परास्तम्।

विपरीतमेव साध्यं स्फुटतरञ्च तद्व्याप्यमाह तथा हि गोत्वाद्यप्रकारक गोत्वाभावादिप्रकारक ज्ञानं बाधनिश्चय तयोश्च गोत्वादिमद्विशेष्यकगोत्वाद्यभावप्रकारकत्वज्ञाना भावोऽभ्रमत्वग्रहविरह बाधपदस्य पक्षे गोत्वाद्यप्रकारक ज्ञानं तस्य च गोत्वादिमद्विशेष्यकगोत्वाद्यभावप्रकारकत्वा द्यप्रकारक गोत्वाद्यभाववद्विशेष्यकगोत्वाद्यभावप्रकारकत्वप्र कारकज्ञानं प्रमात्वनिश्चय इत्युभयोरपि तत्तत्कार्यं प्रति प्रतिबन्धकतायां कारणाभाव प्रमाणेन निर्णीयमानतया तथात्वापत्तिरिति । न च सति विशेषदर्शने विपरीतनिश्च योऽकिञ्चित्कर तदन्येऽपि विशेषदर्शनेन प्रत्यक्षोत्पादादिति वाच्य विशेषदर्शनेन तज्ज्ञानमात्रस्य प्रत्यक्षोदयात् परैरपि कचित् प्रत्यक्षविशेष एव विपरीतनिश्चयविशेषस्यैव तथात्वो पगमाच । नहि शाब्दादिबोधेऽपि विशेषादर्शनविशिष्टत्वेन स विरोधी गौरवात् मानाभावाच । न वा चाक्षुषादिप्र त्यक्षे मानसादिविपरीतनिश्चयो विरोधी उपगम्यते च क्वचि द्विशेषदर्शनमप्रामाण्यग्राहकत्वेन बाधबुद्धे । अथैव बाधा वतारदशायां पक्षे हेतोरपक्षेऽज्ञानमलक्षणासिद्धि पक्षे च व्यभिचारधीरेवेति वाच्य बाधधीपरामर्शयोर्भेदात् अभे देऽपि पक्षे साध्यव्याप्यहेतुमान् साध्याभाववांश्च इति धर्मस्य परस्परोपरागानवगाहिनोऽव्यभिचाराविषयत्वात् एकत्र व्य भिचाराव्यभिचारयोरेकनिश्चयागोचरत्वात् पूर्वं च कस्मि साधादनुमितिविरोधिनो व्यभिचारज्ञानादेरकिञ्चित्करत्वात्

उक्तश्च साध्यादेः पक्षाद्यवृत्तित्वादिकमपि बाधः न च तद्ग्र-
हेऽपि व्यभिचारबुद्धिरावश्यकी । यत्त्वनिश्चितप्रामाण्यस्य ज्ञा-
नस्यार्थनिश्चयरूपत्वे प्रामाण्यनिश्चयवैयर्थ्यमतिप्रसङ्गश्च तथाच
पक्षे साध्याभावज्ञानस्य निश्चयत्वसम्पत्तयेऽपेक्षणीयस्तत्प्र-
मात्वनिश्चय एव प्रतिबन्धकः प्राथमिकत्वादुपजीव्यत्वाच्च
न तु चरमभावि तदधीनं व्यभिचारज्ञानमिति तत्तुच्छं
तस्य प्रतिबन्धकत्वेनाक्लृप्तत्वाद्गृहीताप्रामाण्यकत्वेनैव निश्च-
यस्य स्वकार्य्यकारित्वात् अन्यथानवस्थानात् अप्रामाण्यशङ्का-
निवर्त्तकत्वेन च क्वचित् प्रामाण्यग्रहोपयोगात् संशयसाधा-
रणस्य व्यभिचारज्ञानस्य विरोधित्वाच्चेति यत्तूपनीतकाञ्चन-
मयत्वविशिष्टवह्न्यनुमितिविरोधी व्यधिकरणकाञ्चनमयत्वाव-
च्छिन्नप्रतियोगिताकोवह्न्यभावो बाधः । न च विशिष्टसाध्या-
प्रसिद्धा कथं तद्विशिष्टानुमितिर्विशिष्ये विशेषणमित्यादि-
न्यायेन तत्सम्भवात् शुद्धसाध्यव्याप्तिग्रहादेव चोपनयसहका-
रेणाप्रसिद्धविशिष्टानुमितिसम्भवात् तदभावो बाधोऽस्तु तेन
रूपेण व्याप्तेरनुपादानाच्च तथाव्यभिचारो न दोषाय
उपनीतमकत्वभाने चाप्रामाण्यं प्रत्यक्षेऽपि तुल्यं अनुद्देश्यांशे
चानुमितेरप्रामाण्यं न वादिविजयप्रयोजकमिति तन्न प्रत्यक्षे
हि विना सन्निकर्षमभानादुपनीतभानस्य प्रत्यभिज्ञादावानु-
भविकत्वादुपनयोऽपि सन्निकर्षः कल्प्यते अनुमितौ च
फलासिद्धा न सामग्र्यन्तरकल्पना । न खलु वह्निव्याप्य-
धूमपरामर्शादुपनीतरामभानुमितिरानुभविकी कस्यापि

अन्यथा पर्वते पाकमन्देहवतो निश्चितवह्निव्यभिचारकेण अभिधेयत्वादिना पर्वतादौ प्रमेयत्वादिकमनुमितोऽपि वह्न्यर्थिनो वह्निमत्वनिश्चयाभिलाषम्प्रवृत्त्यापत्तेरिति ।

पक्षधर्मताबलेनेत्यादि ननु विशेषतो व्याप्त्यग्रहात् तथासिद्धि सम्भावना सामान्यतः सिद्धौ न विशेषतो बाधो विरोधि भिन्नप्रकारकत्वात् न च समानविषयत्वमेव विरोधित्वे तन्त्रं पृथिव्यादिरूपबाधग्रहेऽपि वायुरूपवानवेति मनसात् रूपवानित्यनुमितेश्च न चाहरूपमेव रूपत्वेन यद्दित्तमारोपितं वा तद्विषय साहजगदाविरहेऽपि तयोरानुभविकत्वात् दोषवशाद्वेद श्वेत द्रव्यमिति भ्रमेऽपि दृगः पीत मस्य इति प्रत्ययाद्घटपटौ न स्तः इत्यत्र चैत्रो नाप्नोति यत्रेऽपि घटोऽस्ति चैत्रोऽस्तीत्यवगमात् सविकल्पपरामर्शादाधिसविशेषभासमसङ्ग च विशेषबाधावतारानवतारयोः समान समानसमाधानत्व ।

अत्र वदन्ति व्यापकतानवच्छेदकमपि रूपं लाघवज्ञानादि सहकारिवशादनुमितौ प्रकारोभवति यथा जीवनमरणा न्यतरप्रतियोगी प्राणित्वादित्यत्र जीवनप्रतियोगित्वम् अन्यथा जीविते सति रूढामत्वस्य शैसोरसिद्ध्या यदि सत्तानुमाना योगात् एव क्षित्यादिकानेकत्वमपि अन्यथा एकोऽनेको वा क्षित्यादिकर्त्तेति सन्देहप्रसङ्गादनुमितेश्च तादृप्येण सम्वर्याविषयकत्वे तथाविधानुव्यवसायविरहात् सति बाध प्रतिसन्धाने सम्वर्थपरिच्छेदकत्वमनुमानस्येतापि न सिध्येत् इत्यत्र विशेषतो जायमानानुमिति विरुणद्धि बाध प्रमितिः

बाधः पृथक् सल्लिङ्गपरामर्शात् कथं भ्रान्तानुमितिर्जायतां न जायेत वा कथं यथार्थेति चेत् बाधानवतारे बाधितार्थे-लाघवज्ञानाद्दोषादेव तथा सामान्यतो दृष्टात्तदितरप्रसिद्धा-शेषविशेषबाधसहकृतात् ध्रियमाणप्रसिद्धकारिकानुमिति-र्जायते यथा भोजनसाध्यकपीनत्वाद्दिवासन्ध्याभोजनबाधे रात्रिभोजनप्रकारिका एवं द्रव्यवृत्तित्वसाध्यिका गुणत्वादि-च्छायां दिगन्तद्रव्यवृत्तित्वबाधे प्रसिद्धमनोवृत्तित्वानुमिति र्जायमाना मनो वृत्तित्वाभावप्रमया बाध्यत इति विशेषबाधो दोषः किन्तु साध्येत्यादिकमापातत. वस्तुतस्तु प्रतियोग्य-समानाधिकरणसम्बन्धविशेषावच्छिन्नप्रतियोगिताकसाध्या-भाववद्भासित्व व्यभिचारः स्वप्रागभावेनेत्यादिकं स्पष्टत्वेनोक्तं तत्र तदानीं तदत्यन्ताभावस्यापि व्युत्पादितत्वात् अतएवो-त्पत्तिकालावच्छिन्ने घटे पृथिवीत्वादिना रूपादिसाधने बाधो निराबाधं पदमादधाति एवं साध्यवत्तानवच्छेदक-देशावच्छिन्नस्य पक्षत्वेऽपि बाधो बोध्यः।

अथ पक्षतावच्छेदकावच्छेदेन साध्यसिद्धौ तदवच्छेदेन हेतुमत्ताज्ञानं प्रयोजकमन्यथा गृहीतभागासिद्धेर्घटत्वादे-रपि पृथिवीत्वाद्यवच्छेदेन रूपादिसिद्धिप्रसङ्गात् न च शिख-राद्यवच्छेदेन धूमादिमत्त्वमिति चेन्न अवच्छेदकत्वयोर्वस्तुनो-र्भेदात् शाब्दसामान्यस्याकिञ्चित्करत्वात् अवच्छिन्नावृत्ते-रपि च हेतोस्तत्त्वेन गृहीताज्जायमानामनुमितिं विरुणद्धि बाधप्रमा सङ्करेऽपि वस्तुनोर्ज्ञानासङ्करात् सुखाद्यनवच्छेद-

शङ्कापि वह्न्याद्यनुमितौ वह्न्यादिव्यभिचारधीविरोधिधीविषय-धर्म्मप्रकारकपक्षधर्म्मताज्ञानत्वेन हेतुतामते तु नितरां तथैव लक्षणे निवेशात् अतएव व्याप्यवत्पक्षाद्यभावग्रहं प्रति व्याप्यवत्प-क्षादिज्ञानत्वेन हेतुत्वेऽपि न क्षतिः व्याप्तिविषयकत्वेन वा जन्यं ज्ञा-नं विशेषणीयम् । एतेन स्मृतिं प्रति संस्कारद्वारा,अनुभवं प्रति च साक्षाद्विशेषणधियोहेतुत्वस्य निर्व्विकल्पकात्मकस्य वा स्मरण-स्यानुभवं प्रत्येव वा तस्याहेतुत्वस्य नियमतः कृतिसाक्षात्कार-पूर्व्वं विषयस्मृतेश्च कल्पनात् व्याप्यवत्पक्षवत्त्वादिज्ञानेऽतिव्याप्ति-रित्यपि परास्तम् । साध्यादेरननुगमात् एकोपादाने अन्या-नुमितौ दैवाज्ज्ञाप्तिविर्षयिण्याञ्च तस्यामव्याप्तिः परमवशिष्यते सापि तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वविवक्षया निरसनी-या एतल्लाभायैव चानुभवार्थकं चरमज्ञानपदम् एवञ्चान्वय व्य-तिरेकव्याप्त्यो. पृथक्प्रयोजकत्वेऽपि न क्षतिः पर्व्वतवह्निव्याप्यवै-शिष्ट्यावगाहिनिश्चयत्वावच्छिन्न कारणताप्रतियोगिककार्य्यताया वह्नि व्याप्यवत्पर्व्वतनिश्चयत्वावच्छिन्नकारणताप्रतियोगिक व्या-प्तिविषयकवृत्तिकार्य्यताया वा अवच्छेदिका ज्ञानवृत्तिः सा-मानाधिकरण्येनावच्छेदिका वा या जातिस्तद्वत्त्वं वा बोध्यं व्याप्ति-भानेऽवश्यं भासमानो यस्तादृशानुमित्यविषयस्तदविषयत्वमात्रं वा ग्राह्यं यां काञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिसमवेतानुभव-त्वान्यानुभवान्यासमवेतधर्म्मसमवायित्वमिति वा वक्तव्यम् अनुभवा

स्वात्मनङ्गीकारे तु तद्भिन्नसमवेतस्मरणासमवेतधर्मसमवायित्वं वक्तव्यम्। व्याप्ति ज्ञानत्वावच्छिन्नकारणता प्रतियोगिककार्य्यतावच्छेदकावच्छिन्ना या विशिष्टपरामर्शत्वावच्छिन्नकारणता प्रतियोगिककार्य्यता तत्समानाधिकरणानुभवत्वव्याप्यजातिमत्त्व तत्त्वमित्यपि कश्चित्।

परे तु पक्षधर्मतेत्यत्र पक्षता विशेषणं तथाच पक्षतासह कृततादृशपरामर्शजन्यत्वमर्थः यथोक्ताया सिद्ध्याद्यभावरूपाया वा पक्षतायाः प्रत्यक्ष वारणाय परामर्शस्योपादानं तस्येव जनकत्वमेकावच्छेदेन तदुभयजन्यत्वञ्च विवक्षितं तेन साध्यादि कालीनेन दैवात् प्रतियोगिविषयकेण परामर्शेन जन्ये पक्षतायाः प्रत्यक्षे तदुभयसमूहालम्बने वा नातिप्रसङ्गः तदुभयानुभवत्वव्याप्यजातिमत्त्वविवक्षया च नाव्याप्तिरित्याहुः तच्चिन्त्यम्। तत्करणमिति। नच व्याप्त्यादिज्ञानजन्यज्ञानकरणत्वेनेतरभेदसाधने व्याप्तिज्ञानस्य तादात्म्यसम्बन्धेन व्याप्तिज्ञानमेव सा गमकं व्याप्तेरननुगमेऽपि अधिकस्य भागासिद्धिवारणमात्र प्रयोजनत्वादिति वाच्यम् फलोपहितस्य साध्यतया व्याप्तिज्ञानत्वादेरतिप्रसक्तत्वात् करणत्वनिष्ठव्याप्तिग्राहकज्ञानत्वाद्यनवच्छेदकत्वाद्व्यतिरेकव्याप्तिगर्भकतया वैयर्थ्यस्यानवकाशाच्चेति । लिङ्गस्यानित्यत्वेऽप्यनुमितिकरणस्य स्वरूपतः प्रत्यक्षोपजीवकत्वं व्यवस्थापयन्नाह तथेति अनुमितेर्ज्ञानाकरणकज्ञानत्वेन प्रत्यक्ष

शङ्कापि वह्न्याद्यनुमितौ वह्न्यादिव्यभिचारधीविरोधिधीविषय-
धर्म्मप्रकारकपक्षधर्म्मताज्ञानत्वेन हेतुतामते तु नितरां तथैव
लक्षणे निवेशात् अतएव व्याप्यवत्पक्षाद्यभावग्रहं प्रति व्याप्यवत्प-
क्षादिज्ञानत्वेन हेतुत्वेऽपि न क्षतिः व्याप्तिविषयकत्वेन वा जन्यं ज्ञा-
नं विशेषणीयम् । एतेन स्मृतिं प्रति संस्कारद्वारा,अनुभवं प्रति च
साक्षाद्विशेषणधियोहेतुत्वस्य निर्व्विकल्पकात्मकस्य वा स्मरण-
स्यानुभवं प्रत्येव वा तस्याहेतुत्वस्य नियमतः कृतिसाक्षात्कार-
पूर्व्वं विषयस्मृतेश्च कल्पनात् व्याप्यवत्पक्षवत्त्वादिज्ञानेऽतिव्याप्ति-
रित्यपि परास्तम् । साध्यादेरननुगमात् एकोपादाने अन्या-
नुमितौ दैवाद्व्याप्तिर्विषयिण्याश्च तस्यामव्याप्तिः परमवशिष्यते
सापि तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वविवक्षया निरसनी-
या एतल्लाभायैव चानुभवार्थकं चरमज्ञानपदम् एवञ्चान्वय व्य-
तिरेकव्याप्तौ. पृथक्प्रयोजकत्वेऽपि न क्षतिः पर्व्वतवह्निव्याप्यवै-
शिष्ट्यावगाहिनिश्चयत्वावच्छिन्न कारणताप्रतियोगिककार्य्यताया
वह्नि व्याप्यवत्पर्व्वतनिश्चयत्वावच्छिन्नकारणताप्रतियोगिक व्या-
प्तिविषयकवृत्तिकार्य्यताया वा अवच्छेदिका ज्ञानवृत्तिः सा-
मानाधिकरण्येनावच्छेदिका वा या जातिस्तद्वत्त्वं वा बोध्यं व्याप्ति-
भानेऽवश्यं भासमानो यस्तादृशानुमित्यविषयस्तदविषयत्वमात्रं
वा ग्राह्यं यां काञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिसमवेतानुभव-
त्वान्यानुभवान्यासमवेतधर्म्मसमवायित्वमिति वा वक्तव्यम् अनुभङ्गात्

सजात्यमङ्गीकारे तु तद्व्यक्तिसमवेतकारणासमवेतधर्मसमवायित्व
वक्तव्यम्। व्याप्तिज्ञानत्वावच्छिन्नकारणता प्रतियोगिककार्य्य
तावच्छेदकावच्छिन्ना या विशिष्टपरामर्शत्वावच्छिन्नकारणता
प्रतियोगिककार्य्यता तत्समानाधिकरणानुभवत्वव्याप्यजातिमत्त्व
मत्त्वमित्यपि कश्चित्।

परे तु पक्षधर्मतेत्यत्र पक्षता विशेषणं तथाच पक्षतासह
कृतव्याप्तिपरामर्शजन्यत्वमर्थं यथोक्ताया सिषाधयिषाविरहरूपाया
वा पक्षताया प्रत्यक्षसाधारणाय परामर्शस्योपादाने तत्त्वेन जन
कत्वमेकावच्छेदेन तदुभयजन्यत्वञ्च विवक्षितं तेन बाधादि
कालीनेन दैवात् प्रतियोगिविषयकेण परामर्शेन जन्ये पक्ष
ताया प्रत्यक्षे तदुभयसमूहालम्बने वा नातिप्रसङ्गः तदु-
त्वनुभवत्वव्याप्यजातिमत्त्वविवक्षया च नाव्याप्तिरित्याहुः त-
च्चिन्त्यम्। तत्करणमिति। न च व्याप्त्यादिज्ञानजन्यज्ञानं करण
त्वेनेतरभेदसाधने व्याप्तिज्ञानत्वं तादात्म्यसम्बन्धेन व्याप्तिज्ञान
मेव वा गमकं व्याप्तेरननुगमेऽपि अधिकस्य भागासिद्धिवारण
मात्र प्रयोजनत्वादिति वाच्यम् फलोपधायकस्य सहकृततया व्याप्ति
ज्ञानत्वादेरतिप्रसक्तत्वात् करणत्वनिष्ठव्याप्तेस्तादृशज्ञानत्वाद्य
नवच्छेद्यत्वात्तदतिरिक्तव्याप्तेर्गमकतया वैयर्थ्यस्यानवकाशाच्चेति।
लिङ्गस्यानित्यत्वेऽप्यनुमितिकरणस्य स्वरूपतः प्रत्यक्षोपजीवकत्वं
व्यवस्थापयन्नाह तच्चेति अनुमितेर्ज्ञानाकरणकज्ञानत्वेन प्रत्यक्ष

इदमिदानीमितिप्रतीतिनियामकविशेषणताविशेषेण हेतुतायां सद्धेतावव्याप्तिः तेन सम्बन्धेनाधिकरणे काले तेन सम्बन्धेन साध्यवद्वृत्तित्वस्य विरहिणोऽप्रसिद्धेः॥

समवायितयेति वाच्यत्व न यथा समवायितया वच्यते घटादिसमवायितयेत्यर्थ इत्यप्याहुः प्रमेयसाध्यके च भावत्वेनाभावानाम् अभावत्वेन भावानां, वह्नित्वेन निर्व्वह्नौ, अवृत्तिमात्रवृत्तिगगनत्वादिना विरुद्धघटत्वपटत्वाभ्याञ्च सर्व्वत्र प्रमेयमात्रस्याभावः सुलभः। ननु पारिभाषिकमेवाव्यभिचरितत्वं तथाहि यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकायावन्तोऽभावाः प्रतियोगिसमानाधिकरणास्तत्त्व सर्व्वत्र वाच्यत्वाद्यभावस्य तथात्वादयात्त्वोपादानम् अतएव भूतत्वमूर्त्तत्वोभयवान्मूर्त्तत्वादित्यादौ द्वित्वावच्छिन्नाभावस्य प्रतियोगिसामानाधिकरण्येऽपि भूतत्वसनोन्यत्वाद्यभावस्य तथात्वान्नातिप्रसङ्गः। साधनसमानाधिकरणस्य गोत्वाद्यभावस्य तत्तत्साध्यव्यक्त्यभावस्य चातथात्वात् साध्यतावच्छेदकेत्यादि। येन सम्बन्धेन हेतुः तेनैव तदधिकरणं बोध्य तेनात्मत्वे साध्ये समवायेन हेतोर्ज्ञानस्य विषयतयाऽधिकरणे घटादौ वर्त्तमानस्य साध्याभावस्यातथात्वेऽपि न क्षतिः। एव दलान्तरेऽपि सम्बन्धभेदनिबन्धनो दोषः सम्बन्धैक्यविवक्षया निरसनीयः रूपादिसामान्याभावे साध्ये

पृथिवीत्वादिकं सद्धेतुरेव प्रलये परमाण्वनुत्पत्तिकाले चाव-
यविनि सत्त्वात् । न च प्रतियोगिवत्तद्ध्वंसप्रागभावयोरप्य-
त्यन्ताभावविरोधित्वं, मानाभावात् । अतएव अन्तराग्रामे वृक्ष-
रूपं नास्तीति प्रत्ययः । न चैवं वृक्षध्वंसाद्यवगाहो पूर्वापरवृ-
क्षध्वंसप्रागभाववति वृक्षेऽपि तथाप्रत्ययप्रसङ्गात् । साध्यसामाना-
धिकरण्यञ्च स्वविशिष्टहेत्वधिकरणावच्छेदेन बोध्यं तेन गोत्व,
मन्यद्वत्— प्रलयावृत्तित्वादिना गवादेरभावस्य गवाद्यनधि
करणधर्म्यवच्छेदेन सदृति काले महाकाले वा वृत्तावपि
यदा गोत्वं तदा गौर्यथ कालत्वं तत्र तन्नाव्याप्यत्वम् प्रलयावृत्ति
त्वादौ नातिप्रसङ्गः हेतुमति प्रलये तत्सामानाधिकरण्याभा
वात् । स्वविशिष्टेति विशेषणात् कपिसंयोगाभाववान् मेयत्वादि
त्यादौ संयोगाद्यात्मकस्य साध्याभावस्य सकलहेत्वधिकरणा
वृत्तित्वेऽपि नाव्याप्तिः । जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्या
भावस्तु जलत्वाद्यभावो, न तु धूमाद्यभावो जलादावपि तद-
भावप्रत्ययप्रसङ्गात् । यत्समानाधिकरणानां साध्यतावच्छेदका-
वच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां याव
दभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं,
तत्त्वं वा तत्, ज्ञेयत्वत्वादिना वाच्यत्वादौ नाभावः सुलभएव
मेयं दर्शितदिशावसेयम् अत आह प्रतियोग्यवृत्तिश्चेति ।
केचित्तु व्याप्यवृत्तेर्हेतुसमानाधिकरणसाध्याभावस्य प्रति

योगितायाः अनवच्छेदक हेतुसमानाधिकरणस्य व्याप्यवृत्तेः प्रतियोगिव्यधिकरणस्य वा अभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः एवञ्च व्याप्तेरव्यभिचारिसम्बन्धरूपत्वापि सङ्गच्छते हेतौ साध्यतावच्छेदकावच्छिन्नसाध्याभाववदवृत्तित्वस्यैव साध्यतावच्छेदके हेतुमन्निष्ठसाध्याभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारत्वात् अवच्छेदकत्वञ्चेह तत्पर्य्याप्त्यधिकरणत्वं, तेन विशिष्टवह्न्यभावस्य ह्रदत्ववह्नित्वोभयावच्छिन्नाभावस्य च प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः। सत्ववति गुणादौ संयोगाद्यभावोऽपि व्याप्यवृत्तिर्वक्ष्यमाणं वा प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमेव तदवच्छेदकत्वमिहापि बोध्यम्। भवति च गुणत्वगुणावृत्तित्वद्रव्यमात्रसमवेतत्वाद्यवच्छिन्नप्रतियोगिताकव्याप्यवृत्त्यभावप्रतियोगितावच्छेदक गुणत्वाद्यनतिरिक्तवृत्त्येव संयोगत्वमित्याहुः। साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यावच्छेदकस्वसमानाधिकरणसाध्याभावत्वकत्वं यत्समानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्व नास्ति तत्त्व वा व्याप्तिरिति तु न युक्तं सर्व्वत्र साध्याभावपदवैयर्थ्यात्। यत्तु साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति तत्त्वं व्याप्तिरिति तन्न अनुमित्यविरोधित्वज्ञानस्यानुमितिजनकत्वे साध्याभाववद्वृ-

त्तित्वज्ञानस्यानुमितिविरोधितया व्यभिचारिण्यतिप्रसङ्गात् । केचित्तु यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीया ये तत्त दधिकरणवृत्तित्वाभावास्तद्वत्त्वं तत्र तु सामान्यस्य समा नाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेण, साध्या भावस्य पूर्वोक्तद्वितीयरीत्या प्रत्येकं तयो व्याप्यवृत्तित्व, प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यधिकरणे वा तेन तत्तत्साध्यव्यक्तेरव्याप्यवृत्तित्वेपि साध्याभाववति वृत्तावपि हेतो नाव्याप्तिः । तद्वृत्तित्वाभावश्च तत्तत्साध्याभाववद्वृत्ति त्वव्यापकव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताको बोध्य स्तेन साध्याभाववद्भिन्नविशेषवृत्तित्वस्य पार्थिवत्वादिविशिष्टेपि तस्य द्वित्वावच्छिन्नस्य वा साध्याभाववद्वृत्तित्वस्याभावता दाय नातिप्रसङ्गः । अथ च हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वं बोध्यं, तेन वह्न्यभाववति स्वावयवे धूमे वृत्तावपि न दोषः । इत्यस्य साध्याभावोऽपि हेतुता वच्छेदकसम्बन्धेन कस्मिंश्चिदधिकरणे वर्त्तमानो ग्राह्य स्तेन जातिमान् सत्त्वादित्यादौ हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्याप्रसिद्धावपि न क्षतिः । यद्वा यावन्त स्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकी भूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्व

सत्त्वादतिव्याप्तेः, द्रव्यत्वत्वाद्यवच्छिन्नप्रतियोगिताया: पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्तत्वात्। किञ्च रूपाभावसाध्यके सद्धेतौ साध्याभावसमुदायनिविष्टसकलरूपस्याप्यधिकरणाप्रसिद्धेः। यावतामभावानामैकाधिकरण्यं तावतां समुदाये विवक्षितेऽपि इदं पृथिवीवृत्तिगुणशून्यं सत्तान्यपृथिवीसमवेतशून्यं वा, वायुत्वात् रूपवदन्यत्वादित्यादावतिव्याप्तिः तत्र तादृशसाध्याभावस्तोमस्य नियमतो रूपादिघटितत्वेन तद्वति तद्धेतोरवृत्तेः। वस्तुतो निखिलानामेव रूपाणां तादृशाभावसदृशसमानाधिकरणत्वात्समानाधिकरणयावदभावाधिकरणाप्रसिद्धिर्दुर्वारैव। किञ्च हेतुतावच्छेदकसम्बन्धेन या साध्याभाववति वृत्तिस्तदभावो वक्तव्यः अन्यथा धूमादावव्याप्तिः साध्यतावच्छेदकसम्बन्धेन साध्याभाववति कालादौ वृत्तिमत्त्वात्तस्यैव वृत्तेर्व्यभिचारित्वप्रसङ्गो वा, तथा च सत्तादिसाध्यके संयोगेन समवायेन वा हेतावव्याप्तिः। साध्याभाववति तेन सम्बन्धेन वृत्तेरप्रसिद्धेः, साधनसमानाधिकरणत्वेन साध्याभावा विशेषणीया इति चेद्विशेष्यन्तां तथापि भूतत्वमूर्त्तत्वयोरन्यतरत्वेनाभावे साध्ये स्पर्शवदन्यत्वादावतिव्याप्तिः, तादृशसाध्याभावसमुदायवति पृथिव्यादौ तस्यावृत्तेः। किञ्च महाकालान्यत्वादिसाध्यके व्यभिचारिणि कालिकविशेषणताविशेषेण हेतावतिव्याप्तिः तादृशसाध्याभावसमुदायवति महा-

क ले तेन सम्बन्धेन वृत्तिमत्त्वाभावस्यैव वृत्ते । एतेन साध्यताव-
च्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताक-
व्याप्यवृत्तिस्वसमानाधिकरणयावदभावाधिकरणवृत्तित्वाभावा
यावन्तो वृत्तिमद्वृत्तयस्तदन्यत्व व्याप्ति केवलान्वयिन संयोगाद्य-
भावस्याभावा संयोगादयो न व्याप्यवृत्तय एव साध्यस्य
गुणसामान्यस्याभवो द्रव्यत्वाधिकरणे उत्पत्तिकालावच्छेदेन
वर्त्तमानोऽपि सव्याप्यवृत्ति उक्तरूपावच्छिन्नप्रतियोगिताका
क्वचिदप्रसिद्ध्यादिसम्पादका पुनरभावा न हेतुसमानाधि-
करणा उक्तसमुदायाधिकरणवृत्तित्वतदभाववृत्तिमत्त्वानि पू
र्व्वोक्तरीत्या प्रत्येतव्यानीत्यादिकमपास्तम् । तद्विशिष्टेति ।
विशेषणतावच्छेदकविशिष्टज्ञानस्य विशिष्टवैशिष्ट्यप्रत्यय
हेतुत्वात्, अभावप्रत्ययो हि घटत्वादिविशिष्टस्य घटादे
प्रतियोगित्वमवगाहमानो विशेषणस्यापि घटत्वादेस्तदवच्छे
दकत्वमवगाहते न त्वातन्त्र्येण घटो नास्तीत्येव प्रतोते
तद्विशाभावप्रत्ययो यदि व्यधिकरणधर्मेण विशिष्टं प्रतियो
गिन नावगाहते नावगाहतएव तदा तस्यापि प्रतियोगि
तावच्छेदकत्वम् अथावगाहते तर्हि भ्रमएव नच ततो-
ऽर्थसिद्धिरिति भाव । यदि पुनरानुभविको लोकानां स्वर
सवाही घटत्वेन पटो नास्तीत्यादिप्रत्ययो न तदा तादृशाभाव
निवारणं गीर्वाणगुरूणामपि शक्यमिति मन्तव्यम् ।

साध्येति साध्यस्यासामानाधिकरण्यं येषु तेषामनधिकरणत्वं तदभाववत्त्वमिति यावत् तस्मिन् सति साधिकरणत्वं तदवच्छिन्नाधिकरणताकत्वम् सति सप्तम्यावच्छेदकत्वलाभात् तच्चेहान्यूनवृत्तित्वम् एवञ्च साध्यवदवृत्तिसकलपदार्थाभाववत्त्वं यदधिकरणताया अन्यूनवृत्ति तत्त्वमिति तु फलितार्थः। यथा सन्निवेशे अधिकरणत्वस्य न वैयर्थ्यम् हेतुतावच्छेदकसम्बन्धलाभाय वा तत्। येन येन सम्बन्धेन यो यः साध्यवदवृत्तिस्तेन तेन सम्बन्धेन तत्तदभावो बोध्यः एतेन साध्यवदवृत्तित्वं यदि साध्यतावच्छेदकसम्बन्धेन विवक्षितं तदा समवायेन साध्यतायां साध्यवदसमवेतस्य सार्व्वत्रिकत्वात्सकलतच्छून्याप्रसिद्धिः। अथ तदभावोपि तेनैव सम्बन्धेन वाच्यस्तदा जातिमान् प्रमेयत्वादित्यादावतिव्याप्तिः जातिमदसमवेतानां समवायेनाभावस्य केवलान्वयित्वात् अतएव न संयोगेन, समवायेन वा, इदं न जातिमज्जातित्वादित्यादौ साध्यवत्समवेताद्यप्रसिद्धेश्च नापि साधनतावच्छेदकसम्बन्धेन इदम् एतद्रूपभिन्नं गुणत्वादित्यादावतिव्याप्तेः। नापि विषयतया, घटभिन्न मेयत्वादित्यत्राप्यतिव्याप्तेः सविषयमात्रस्यैव घटभिन्नविषयत्वात्। घटनिर्विकल्पकेऽपि घटत्वादिभानात्। नापि सम्बन्धमात्रेण, द्रव्यं सत्त्वादित्यादावतिव्याप्तेः वृत्तिमन्मात्रस्यैव स्वरूपसम्बन्धेन महाकाले वृत्तेरवृत्तेरभावस्य च केवलान्वयित्वादिति प्रत्युक्तम्। विशेषणताविशेषेण

वा साध्यवद्वृत्तित्वं वक्तव्यम् अन्यथैव तत्तद्व्यक्तित्वे तत्तद्-न्यायत्वे तत्प्रकारकप्रमाविषयत्वे वा तस्सुलभम् तेनैव सम्बन्धेन तदवच्छिन्नसामान्याभावो वाच्य इति। केचित्तु नञ्द्वयस्यासे-नासाध्यानि साध्यविरोधीनि साध्यासमानाधिकरणानीति यावत् तानि सामानाधिकरण्यानधिकरणानि यस्य तत्त्वम् साध्यसामानाधिकरण्याभावव्यापकाभावप्रतियोगिसामानाधि करण्यसामान्यकत्वमितिफलितार्थः। अत्र च साध्यसामाना-धिकरण्य साध्यतावच्छेदकसम्बन्धेन साध्यवति हेतुतावच्छेदक सम्बन्धेन वृत्ति। परन्तु सामानाधिकरण्य हेतुतावच्छेदक सम्बन्धेन हेतुमति तेनैव वृत्ति तेन समवायेन पृथिवीत्वादेः साध्यतायां व्यभिचारिणि कालिकसम्बन्धेन हेतौ द्रव्यत्वादेः सम वायेन साध्यतायां समवायेन हेतौ सत्त्वगुणत्वादौ नातिप्रसङ्गः। न वा संयोगेन वह्न्यादौ साध्ये समवायेन तद्व्याप्यस्य रूपविशे-षादेः कालिकसम्बन्धेनाधिकरणे काले स्पन्दे च कालपरिमाण स्पन्दत्वादेः समवायेन तदधिकरणे घटादौ संयोगेन वृत्तावपि चातिप्रसङ्गः, सम्बन्धविशेषेण व्याप्यत्वाभाव साधिकरणत्वमित्या द्युक्तमित्यर्थम्। यथाश्रुत यथासम्भवं विकल्प्य दूषयति नेत्यादि नञ्प्रतियोगिपदेन प्रतियोगितावच्छेदकावच्छिन्नं वक्तव्यमत आह द्रव्यत्वादेरिति प्रतियोगिविरोधित्व प्रतियोगितदधि-करणावृत्तित्वं व्याप्यवृत्तित्वं स्वसमानाधिकरणात्यन्ताभा

वाप्रतियोगित्वम् । अधिकरणेति तथा सत्यभावएव न सिध्येदिति भाव.। संयोगाद्यत्यन्ताभावस्य द्रव्ये प्रतियोगिसामानाधिकरण्यम् अव्याप्यवृत्तित्वञ्च प्रतियोग्यधिकरणीभूतद्रव्यवृत्तित्वं स्वाधिकरणीभूतद्रव्यनिष्ठात्यन्ताभावप्रतियोगित्वं गुणे च प्रतियोग्यसामानाधिकरण्यं, व्याप्यवृत्तित्वञ्च प्रतियोग्यनधिकरणीभूतगुणवृत्तित्वं स्वाधिकरणीभूतगुणनिष्ठात्यन्ताभावाप्रतियोगित्वम् एतानि च न भेदकान्यविरोधात् सामान्यतस्वाव्याप्यवृत्तौ प्रतियोगिसमानाधिकरणे च न तथात्वव्यतिरेक इति भावः। ननु साध्यवान् यस्येति साध्यवति सम्बन्धोऽन्वेष्टव्य. स चाधिकरणत्व साध्यसाधनयोरपि सामानाधिकरण्यमेवेत्यतो दूषणान्तरमाह साध्येति। साध्यत्वसाधनत्वे व्याप्तिप्रतियोगित्वानुयोगित्वे यत्तद्भ्यामेव व्याप्तिर्निर्वक्तव्येत्यत आह वह्निमदिति। ननु यत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदक यद्रूपावच्छिन्न न भवति तद्रूपावच्छिन्नेन समं तस्य सामानाधिकरण्यं व्याप्तिरित्यर्थः। नच धूमसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदको वह्नित्वावच्छिन्नो वह्नि: धूमवान् वह्निमान्नेत्यप्रतीतेरत आह विशेषेति। यएव प्रत्येकं वह्निमद्भेदाः धूमसमानाधिकरणास्तएव चैकाधिकरणवृत्तित्वावच्छिन्ना वह्निमत्सामान्यभेदबुद्धिं जनयन्ति तत्प्रतियोगितावच्छेदको वह्नित्वावच्छिन्नो वह्निरिति भवत्यव्याप्तिः। साध-

नेमि येयधिकरण तदनधिकरणवृत्तित्व तच केवलान्वयिन साधनव्याप्तमिद्धम् अतिप्रसङ्गकत्व पृथिवी द्रव्यत्वादित्यादौ अत' समानाधिकरणोपादान धूमादेरपि न वह्न्यादिसमाना धिकरणद्रव्यत्वाद्यनधिकरणवृत्तित्वमतोऽयार्यादिति । यद्यपि पृथिवीत्वादिसमानाधिकरणपटत्वपटत्वाद्यनधिकरणवृत्तित्व द्रव्यत्वादेस्तदनधिकरणमात्रवृत्तित्वञ्च निखिलघटपटादि- रूपाणां तथापि तादृशधर्मानधिकरणमात्रवृत्तित्वानवच्छे दकसाध्यतावच्छेदकत्वं योध्य गदि पृथिवीत्वसमानाधि करणमादृश कश्चिदेको धर्मो यदनधिकरणमात्रवृत्तितावच्छेदक रूपत्वादि धूमत्वादिकन्तु वह्न्यादिसमानाधिकरणा योगोलकत्वाद्यनधिकरणमात्रवृत्तितावच्छेदक तदवच्छेदक त्वञ्च तदनतिरिक्तवृत्तित्व मग तच्छून्यधर्मावृत्तित्वं तेन मेय त्वसमानाधिकरणगुणत्वाद्यनधिकरणमात्रवृत्तितानधिकरण गगनादिवृत्तित्वेऽपि द्रव्यत्वस्य द्रव्यसाध्यकमेयत्वेनातिप्रसङ्ग यस्तुतस्तु तादृशधर्मानधिकरणमात्रवृत्तित्वावच्छिन्नाधिक रणताकत्व तदवच्छेदकत्व वाच्य तेन सत्ताद्रव्यत्वोभय वान् गुणान्यत्वविशिष्टसत्तावान् वा जातिमत्त्वादित्यादौ नातिप्रसङ्ग सत्ताया गुणत्वाभाववन्मात्रवृत्तित्वविरहेऽपि उभयत्वाद्यवच्छिन्नाधिकरणताया गुणत्वाभाववन्मात्रवृत्ति- त्वात् प्रमेयत्वादेरिति । ननु व्यतिरेकित्वेन धर्मोविशेषणीय'

वस्तुतस्तु यावत्पदं तादृशस्य कस्यापि न वैयधिकरण्याव-च्छेदकमेतावन्मात्रस्फोरणाय तथा च साधनसमानाधिकरणधर्म्म निरूपितवैयधिकरण्यावच्छेदकं यद्यत्तद्भिन्न-धर्म्मवता यावत्तादृशावच्छेदकत्वशून्यधर्म्मवता वा समं सामानाधिकरण्यमिति पर्य्यवसितं अतोदोषान्तरमाह महा-नसादाविति तथा च तदनधिकरणत्वं तदभावाधिकरणत्वं तद्भिन्नत्वं वा द्वयमपि दुष्टमित्यर्थः एतेन तदधिकरणा-वृत्तित्वमत्र वैयधिकरण्यमिति निरस्तं समवायितया महा-नसवृत्तित्वं वह्नौ नास्तीति प्रतीतेर्वह्न्यादेरपि तादृशवैयधि-करण्याधिकरणत्वात्सम्बन्धविशेषेण वैयधिकरण्यविवक्षायान्तु नोक्तदोष इति ध्येयम् । उपाधिपदस्य साध्यसमव्याप्तवचन-तया आत्माश्रयप्रसङ्गादाह साध्यव्यापकेति । व्यापकत्वं व्याप्तिनिरूपकत्वमात्माश्रयादिग्रस्तमत आह तद्वन्निष्ठेति । यत्रोपाधिरव्याप्यवृत्तिर्नानाव्यक्तिको वा तत्रापि व्याप्यवृत्ति-रखण्डस्तान्ततस्तद्भिन्नत्वप्रकारक प्रमाविषयत्वाभावादिरे-वास्ति यदि च तस्यापि विशेषणान्तरविशिष्टस्य दित्वाद्यव-च्छिन्नस्य वा तत्राभावसम्भवस्तदा साध्यसमानाधिकरणात्य-न्ताभावप्रतियोगितानवच्छेदकीभूतसाधनसमानाधिकरणा-त्यन्ताभावप्रतियोगितावच्छेदकधर्म्मवत्त्वं दलद्वयार्थो बोध्यः। अनवस्थान्निरसितुमाह प्रतियोगित्वमिति । सहेति । एक-

देशकालावच्छेदेनेति पूरणीयं तेन नाव्याप्य वृत्तेरभावस्य प्रागभावादेस्र प्रतियोगितायामव्याप्ति । अन्योन्येति अथ समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकाभाववति मध्य नसादौ संयोगादिना वह्न्यादेर्वृत्तेर्येन सम्बन्धेनाभाव' तद्वति तेनावृत्तिर्वक्तव्या इत्यत्र तेन सम्बन्धेनासम्बद्धत्वोक्तौ नायं दोष' अन्योन्याभावस्य तादात्म्यसम्बन्धावच्छिन्नप्रति योगिताकतया तद्वति तेन सम्बन्धेन प्रतियोगिनोऽसम्बद्ध-त्वात् परन्तु समवायेन सत्ताया अभावस्य प्रतियोगिता यामव्याप्ति' तद्वति समवायेन वृत्तेरप्रसिद्धे' तादृशसम्ब-न्धाधिकरणावृत्तित्वाभिधाने च व्यधिकरणसम्बन्धावच्छि न्नाभावप्रतियोगितायामव्याप्ति सिद्धान्तलक्षणवक्ष्यमाण रीत्या च लक्षण' प्रसिद्धा तत्परिहारोऽपीति ध्येयम् । अभावविरहात्मत्वमिति न चान्योन्याभावप्रतियोगितत्त्वाव-च्छेदकयोरप्रसक्त्यतिप्रसक्ती प्रकृतोपयोगिप्रतियोगितामा त्रस्य लक्ष्यत्वे तु लक्षणेऽत्यन्ताभावपदवैयर्थ्यं सर्वत्र नित्यस्य नित्यसाधारणरूपावच्छिन्नस्य वा उपाधिता सम्भवात् इत रथा तु भेदप्रतियोगितावारणाय संसर्गाभावपरतया तस्य सार्थकत्वादिति वाच्यम् विरहपदस्य तत्प्रामप्रतिबन्धकज्ञा नविषयार्थकत्वात् प्रतिभाति हि तादात्म्येन प्रतियोगिज्ञान मन्योन्याभावबुद्धि प्रतिबन्धकत्वचावैककालावच्छेदेन एक

तावर्त्तमानत्वम् अभावपदस्य स्वाभावपरत्वात् वस्तुतस्त्वे-कसम्बन्धावच्छिन्नायास्तत्समानाधिकरणाभावप्रतियोगिताया अनवच्छेदकमपि भवत्येव सम्बन्धान्तरावच्छिन्नायाः तस्या अवच्छेदकम् अतो यत्सम्बन्धावच्छिन्नायाः साध्यसमानाधि-करणाभावप्रतियोगिताया अनवच्छेदकं तत्सम्बन्धाव-च्छिन्नाया एव साधनसमानाधिकरणाभावप्रतियोगिताया अवच्छेदकं तद्वाच्यम् तथा च संसर्गाभावत्वमनुपादेयमेव वाशब्दोऽतास्वरससूचनाय स च व्यधिकरणसम्बन्धेन सर्वस्य प्रतियोगिनस्तादृशभ्रमे मानाभावात् स्वाभावसम्बन्धित्वस्य स्वाभावज्ञानविषयत्वस्य वा लघोः सर्वत्र सम्भवित्वात् स्वाभा-वेत्यादौ षष्ठ्यर्थप्रतियोगितायाः प्रवेशात् तत्र स्वरूपसम्ब-न्धस्य शरणीकरणीयतया तस्यैवावश्यकत्वेन तथात्वौचित्याच्च अभावत्वप्रतिबन्धकत्वयोः प्रतियोगिताघटितत्वात् तथाविध-व्यवहारगोचरस्यापि विना प्रतियोगितां निर्वक्तुमशक्यत्वाच्च । यत्साध्यस्य यत्समानाधिकरणसाध्यस्य । तथाहीत्यादि यत्स-मानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं यावत् साध्य-समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकम् साध्य-समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं यावत् यत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं तत्त्व-मित्यर्थे तु नोक्तदोष इति ध्येयम् । प्रतियोगितयोरेकस-

सम्बन्धावच्छिन्नत्वं विशेषणताविशेषावच्छिन्नत्वं वा वाच्यम् तेन प्रतियोगितावच्छेदकसम्बन्धेन यत्किञ्चित्सम्बन्धावच्छिन्न साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वेऽपि पक्षसम्बन्धावच्छिन्नसाध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकस्य सम्बन्धान्तरावच्छिन्न साधनसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि च न क्षति । व्यभिचारिणि तु यत्राधिकरणे व्यभिचारो विशेषणताविशेषावच्छिन्नतन्निष्ठाभावप्रतियोगितावच्छेदक साध्यत्व प्रकारक प्रमाविषयत्वत्वम् विशेषणताविशेषावच्छिन्नसा- ध्यसमानाधिकरणाभावप्रतियोगितानवच्छेदकमिति नातिप्रसङ्ग । वस्तुतो हेतुसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यावद्धर्मावच्छिन्नसमानाधिकरणान्योन्याभाव प्रतियोगितावच्छेदक तद्धर्मावच्छिन्नसामानाधिकरण्यम् साध्यसमानाधिकरणान्योन्याभाव प्रतियोगितानवच्छेदकम् यावत्तत्समानाधि करणान्योन्याभाव प्रतियोगितानवच्छेदकं तत्त्व वा व्याप्तिरिति ध्येयम् । साध्यमिति यावतां तेषामित्यर्थः । दूषितं केवलान्वयिन्यव्याप्त्या सा च यथोक्तलक्षणेऽपि गौरवं परमतिरिच्यत इति फक्किकार्थः साधनस्य साध्यसाध्याश्रयस्य साध्यसमानाधिकरणस्य साधनाश्रयस्य साधनसमानाधिकरणस्य वा आद्ये कृतत्वसाधनसामानाधिकरण्यं

साध्ये कृत्स्नेषु साधनेषु साध्यसामानाधिकरण्यं वार्थः प्रथमा एकेति नानेति च व्याप्तिश्चाहेतुवृत्तित्वम् पृथिवी पृथिवीत्व-व्यापकजातेरित्यादावतिव्याप्तिश्च अतएव नेतरः। अर्थाभि-धानपूर्वकं द्वितीयं निरस्यति अतएवेति अतएव एकव्यक्ति-साध्यकाव्याप्तेरेव विषमव्याप्तेः समव्याप्तेऽपि च मस्थापरि-माणादावेकत्र साधने सकलसाध्यसम्बन्धस्याभावात् भावाच्च शब्दवान् द्रव्यत्वादित्यादौ। तृतीये साध्याश्रययावद्वृत्तित्वं चतुर्थे साध्यसमानाधिकरणयावत्सामानाधिकरण्यमर्थः तत्र च यथासम्भवमेकमात्रवृत्तिसाध्यके वह्न्यादौ साध्ये धूमादाव-व्याप्तिरतिव्याप्तिश्च सत्त्वादौ। अर्थपरिष्कारपूर्वकं पञ्चम निरस्यति न चेति। एकमात्रवृत्तिसाधने चाव्याप्तिश्च तथैव षष्ठं निरस्यति नापीति तादृशानां सर्वेषां महानसत्वादीनां प्रत्येकनिरूपितान्यपि सामानाधिकरण्यानि न कुत्रापि वह्नौ। अथ यद्धर्मावच्छिन्नसामानाधिकरण्यत्वेन साधन-सामानाधिकरण्यव्यापकत्वं तद्धर्मावलीढसामानाधिकरण्यं विवक्षितमिति चेत् इतोऽपि लघुतया साधनव्यापकताव-च्छेदकरूपावच्छिन्नसामानाधिकरण्यमेव व्याप्तिरिति सिद्धा-न्तयिष्यते। अविनेति। साध्यं विना साध्याभाववति यो भावोवृत्तिस्तद्विरहः साध्यं विना अभावः साध्याभावव्यापकी-भूताभावप्रतियोगित्वमिति वा। अथेति सम्बन्धः सामा-

णाधिकरण्य व्यभिचारिसम्बन्धस्य केनचित्किञ्चिदवच्छि-
न्नेन धूमादेरपि द्रव्यत्वादिना अव्याप्यव्यापकत्वात् । तद्दोषा
दिति न च व्यभिचारावच्छेदकत्वज्ञानस्य तद्दोषत्वन्तदा व्यभिचार
तद्व्यतिरेकयोः अनुपस्थितावपि समानाधिकरण्यधर्मवत्ता
ज्ञानमात्रादनुमित्यनुत्पादस्य सर्वानुभवसिद्धत्वात् हेत्वन्तरे
तर्क्वे व च रूपान्तरेण व्यभिचारग्रहे हेतुतावच्छेदकावच्छेदेनान
नुमित्युत्पादाच्च विपक्षे च सामानाधिकरण्यज्ञानस्यैव हेतु
तायां व्यभिचारज्ञानाभावकारणत्वमपेक्ष्य कारणीभूतसामा
नाधिकरण्यज्ञाने भासमानव्यभिचारस्य विषयतयावच्छेद
कत्वमुचितम् न च व्यभिचारनिश्चयेऽनुमित्यनुत्पादाद्व्यभि
चारनिश्चयत्वेन कारणत्वौ गौरवम् व्यभिचारज्ञानस्य हि
भ्रमत्वनिश्चयदशायामेवाविरोधितया भ्रमत्वज्ञानियोग्यमा
नस्य विरोधित्व वाच्यम् अव्यभिचारनिश्चयस्य च भ्रमत्वग्र-
हादायामप्यनुमित्यजनकतया भ्रमत्वेनाप्रामाण्यस्यैव हेतुत्व
मिति तवैव गौरवात् नाप्यविध्यव्यभिचारज्ञानाभावानां
निश्चयपर्यवसित्वेन कृतानामपि हेतुत्वमपेक्ष्य अव्यभाव्यव्य
विधाव्यभिचारज्ञानस्यैव हेतुत्वं युक्तमित्यत्राह । सामाना
धिकरण्यविशिष्टपक्षधर्मत्व तु पक्षे साध्यवत्त्वं विना दुर्घट
मिति केवलान्वयित्यस्यापि सामानाधिकरण्यमात्रग्रहादनु
मित्यनुत्पत्तेस्तद्वोऽपि वाच्य तथ इत्तिमदत्यन्ताभावा

प्रतियोगित्वादिकमन्योन्याभावप्रतियोगितानवच्छेदकत्वं वा तथा च सर्वसाधारण्याय लाघवात्साधनवतस्तद्वृत्तित्वस्य वा वृत्तेरन्योन्याभावस्य वा विशेषणत्वमुचितमिति सिद्धान्तरहस्यं शेषं केवलान्वयिखण्डने वक्ष्यामः ।

प्रतियोग्यसमानाधिकरणेति प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्म्मस्तद्धर्म्मावच्छिन्नेन येन केनापि सम सामानाधिकरण्यं तद्रूपविशिष्टस्य तद्धर्म्मावच्छिन्नयावन्निरूपिता व्याप्तिरित्यर्थः दण्डादौ साध्ये परम्परासम्बन्धं दण्डत्वादिकमेव साध्यतावच्छेदकमतो नाव्याप्तिः इत्थञ्च इदं द्रव्यं गुणकर्म्मान्यत्वे सति सत्वादित्यादौ सत्त्वाद्यधिकरणगुणादि निष्ठात्यन्ताभावप्रतियोगित्वेऽपि द्रव्यत्वादेः नाव्याप्तिः साधनस्य विशिष्टसत्त्वादेर्गुणादावृत्तेः सामानाधिकरण्यव्यक्तीनां भेदेऽपि निरूपकतावच्छेदकस्याधिकरणतावच्छेदकस्य चैक्याद्व्याप्तेरैक्यं वस्तुतस्तु धूमत्वादिविशिष्टव्यापकवह्निसामानाधिकरण्यस्य रासभादि साधारणत्वाद्धूमत्वादिमति तादृशसामानाधिकरण्यं तद्वति धूमत्वादिकं वा व्याप्तिः आद्या भिन्ना द्वितीया त्वभिन्नैवेति ध्येयम् । अयं कपिसंयोगि एतद्वृत्तत्वादित्यादिसंग्रहायासमानाधिकरणान्तम् । यत्तु इदं संयोगि द्रव्यत्वादित्यता-

व्याप्तिवारणाय तत् संयोगस्य शाखाद्यवच्छेदेनवृत्तेर्वृक्षत्वा
वच्छेदेन तत्सामान्याभाववत्त्वाविरोधात् तत्र चातीन्द्रियस्य
संयोगस्य सत्त्वात्परिम   प्रतियोग्युपलम्भे दोषाद्वा वृक्षेण
संयोग इत्यादि साध्यमिति तत्र द्रव्ये संयोगसामान्याभावे
मानाभावात् न च यो यदीययावद्विशेषाभाववान् स तत्सा
मान्याभाववानिति व्याप्तेर्यावत्संयोगाभावा एव मानं यत्तद
र्थयोरननुगमात् एकावच्छेदेन यावद्विशेषाभाववत्त्वस्योपा
धित्वाच्च एतेन अथ संयोगसामान्याभाववान् संयोगयावद्वि
शेषाभाववत्त्वादिति निरस्तं व्यर्थविशेषणत्वादप्रयोजकत्वान्निर्गु
णत्वादेरुपाधित्वाच्च । न च प्रतियोग्यनवच्छेदकतयैव वृक्षत्वा
देरभावावच्छेदकत्वं गुणाद्यनवच्छेदकप्रमेयत्वादेस्तदभावा
वच्छेदकत्वप्रसङ्गात् यथा च घटपूर्ववर्त्तित्वस्य प्रतिदण्ड
वह्निसामानाधिकरण्यस्य वा प्रतिधूम भिन्नत्वेऽपि दण्डत्व
धूमत्व वा तत्सामान्यस्यावच्छेदकं तथैव संयोगसामान्य
स्यावच्छेदकता द्रव्यत्वादिकमित्यस्यापि सुवचत्वादिति सम्प्र
दायविदः । नन्वेतावता स्वनिरूपकावच्छेदेन घटादौ गुणस्य
सत्त्वावच्छेदेन गगनादौ संयोगस्य सामान्याभावो वर्त्तते
तथा धूमवत्यपि विरहो दहनस्य इह पर्वते नितम्बे
हुताशनो न शिखरे इति प्रतीतेः संयोगेन द्रव्यस्याव्याप्य
वृत्तित्वात् वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतोऽव्याप्यवृत्तित्वस्या

त्यन्तमसम्भावितत्वाच्च एवं प्रतियोगिमतोरपि कालदेशयोर्दे-
शकालभेदावच्छेदेन तदभावः तथा च तत्तत्साध्यकाव्याप्तिवा-
रणाय तत् नोपादेयञ्च सर्वथैव व्याप्यवृत्तिसाध्यके साध्यसा-
धनभेदेन व्याप्तिभेदादिति वदन्ति । प्रतियोग्यसामानाधि-
करण्यञ्च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यं
तेन अयं गुणकर्म्मान्यत्वविशिष्टसत्तावान् जातेः भूतत्वमूर्त्त-
त्वोभयवान् मूर्त्तत्वादित्यादौ नातिव्याप्तिः । न चोभयत्वमेक
विशिष्टापरत्वं विशिष्टञ्च केवलादन्यदिति तदभावो मनसि
सहजत एव प्रतियोगिव्यधिकरण इति वाच्यम् उभयत्वं
हि न विशिष्टत्वादनतिरिक्तं न वा तदवच्छिन्नाभावस्तदव-
च्छिन्नाभावात् वैशिष्ट्यविरहेऽपि घटत्वपटत्वयोरुभयत्वस्योभ-
यत्वेन तदभावस्य च प्रत्यक्षसिद्धत्वात् न च तत्र व्याप्तिरेवो-
भयत्वाधिकरणस्य मूर्त्तत्वस्य मनसि सत्त्वादिति वाच्यं
तथात्वेप्युभयत्वेन रूपेण तत्रासत्त्वात् नात्रोभयमिति
प्रतीतेर्दुर्वारत्वात् । अत्यन्तपदञ्चात्यन्ताभावत्वनिरूपक-
प्रतियोग्यसामानाधिकरण्यस्य अत्यन्ताभावत्वनिरूपकप्रति-
योगितायाश्च लाभाय अन्यथा सर्वस्यैवाभावस्य स्वसमाना-
धिकरणाभावान्तरभिन्नत्वात्तद्भेदस्य स्वस्वरूपानतिरिक्ततया
प्रतियोग्यसामानाधिकरण्यस्यैव दुर्लभत्वापत्तेः सर्वेषामेवा-
भावानां हेतुसमानाधिकरणात्यन्ताभावत्वनिरूपकप्रतियो-

स्वसमानाधिकरणाभावान्तरात्मकस्य अभेदस्य प्रतियोगि
त्वाद्भावसाध्यकाव्याप्तेश्चेति सम्प्रदायविदः । अथ यदा
गोत्वं तदा गौरित्यत्रातिव्याप्तिः प्रलयस्य गोध्वंसवत्त्वेन
गवात्यन्ताभावानधिकरणत्वात् संसर्गाभावसामान्ये तावदपि
यदा अस्ति तदा द्व्यणुकं यदा अदृष्टं तदा जन्यं ज्ञानं
दुःखं वा यदा तत्त्वादृष्टं तदा तदीयं ज्ञानमित्यादावति
व्याप्तिः द्व्यणुकत्वादेर्द्व्यणुकादिजन्यखण्डप्रलयादिनिष्ठध्वंस
प्रागभाव प्रतियोगितानवच्छेदकत्वात् न हि तयोः सामा-
न्याभावत्वयादृशतोऽपि एकविशेषप्रागभावविशेषान्तरध्वंस
सत्त्वेऽपि समये सामान्यावच्छिन्नध्वंसप्रागभावयोः सम्भव इति
विशेषप्रतियोगिमत इव ध्वंसादिमतोऽपि कालस्यात्यन्ता
भाववत्त्वेऽविरोधात् अन्यथा अत्यन्ताभावस्य कालमात्रावृत्ति
त्वप्रसङ्गात् । इयांस्तु विशेषो यदेकस्य देशभेदावच्छिन्नं
तयात्यन्तापरस्य तु स्वरूपावच्छिन्नमिति देशे कालस्येव
कालेऽपि देशस्यावच्छेदकत्वात् तच्छून्ये च काले तदभावस्य
प्रतियोगिव्यधिकरणत्वात् । न च संसर्गाभावविशेषोऽत्यन्ता
भावः संसर्गाभावत्वञ्च संसर्गारोपजन्यप्रतीतिविषयाभावत्वरूपं
जन्यताघटकनियमघटितमिति वाच्यम् तद्वदन्या वृत्तित्वरूप
नियमस्य तत्र घटकत्वात् एवं नियमान्तरस्यात्र प्रवेशेऽपि
न क्षतिरित्याहुः । वक्ष्यते च नियमाघटितमेव संसर्गा

भावादिलक्षणम् अनुपदमेव च विवेचयिष्यते संसर्गाभावत्वप्रवेशे प्रयोजनविरहोऽव्याप्तिश्च। अथ ज्ञानवान् द्रव्यत्वात् विशेषगुणवान् मनोऽन्यद्रव्यत्वात् जातिमान् भावत्वादित्यादौ समवायेन ज्ञानादेः साध्यतायामतिव्याप्तिः साध्यशून्यानामपि हेतुमतां विषयत्वविशेषणत्वे कार्यसमवायौ साध्यवत्त्वादिति चेन्नैवम् प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिनो यदधिकरणं सम्बन्धि वा तद्वृत्तित्वाभावस्यौक्तत्वात् भवति चैवमन्योन्याभावोऽपि प्रतियोग्यसमानाधिकरणः तद्विशिष्टस्य च हेत्वधिकरणवृत्तित्वं वाच्यं तेन नाव्याप्यवृत्तिसाध्यकासंग्रहः तद्वृत्तिभिन्नत्वन्तु नार्थः अव्याप्यवृत्तिसाध्यकाव्यभिचारित्वातिप्रसङ्गात्। अत्र सामानाधिकरण्यवतो न तदभाववत्त्वं प्रतीतेरन्यथैवोपपादितत्वादित्यस्वरसात् प्रतियोगिवैयधिकरण्येत्यादिविशेषणं वक्ष्यति तच्च हेत्वधिकरणे बोध्यं प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावेति पुनरभावान्तार्थनिष्कर्षः। ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्तत्सामान्यस्य प्रतियोगितावच्छेदकयत्किञ्चिदवच्छिन्नस्य वा अनधिकरणमुक्तम् आद्ये अव्याप्यवृत्तिसाध्यकाव्याप्तिः एकप्रतियोग्यधिकरणस्यापि तद्व्यक्त्यन्तरानधिकरणत्वात् द्वितीये संयोगसामान्याभाववान् द्रव्यत्वाभाववान् वा सत्त्वादित्यादावतिव्याप्तिः साध्याभाववतो द्रव्यस्य तत्प्रतियो-

संयोगविशेषाभाववत्त्वात् नित्यत्वादिविशिष्टद्रव्यत्वाभावा
धिकरणप्रतियोगिनोऽधिकरणत्वाच्च व्याप्याभावाभावात्मकस्य वि-
शिष्टस्यापि द्रव्यत्वस्य द्रव्यत्वानतिरेकात् तृतीये कपिसंयो
गाभाववान् गुणत्वादित्यादावव्याप्तिः साध्याभावानां कपि
संयोगानां गुणानामधिकरणस्याप्यनन्तप्रतियोगितावच्छे-
दकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वात् एवम् यादृ
शप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः तद
वच्छेदकत्वस्याकृतत्वात्। अत्र च साध्यसामानाधिकरण्ये
ऽनिर्वाच्य सम्बन्धः प्रविष्टस्तेन सम्बन्धेन यो हेतुमान् तत्र
वर्त्तमानत्वमभावस्य साध्यस्य च यादृश सम्बन्धः प्रविष्टस्तत्
सम्बन्धावच्छिन्नायाश्च प्रतियोगिताया अनवच्छेदकत्वं बोध्य
न धूमसमवायिनिष्ठाभावस्य संयोगावच्छिन्नप्रतियोगिताया
धूमसंयोगिनिष्ठाभावस्य च समवायावच्छिन्नप्रतियोगिताया
अवच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः। यद्वा साध्यताव
च्छेदकसम्बन्धेन प्रतियोगिसम्बन्धित्व हेतुमतो वाच्यम्
तथा च सम्बन्धभेदेन प्रतियोगिता न विशेषणीया एवं स्थिते
सामानाधिकरण्यादौ सम्बन्धित्व निवेशनीय नत्वधिकर
णत्व तथा च धर्मिणोऽपि व्याप्यत्व व्यापकत्वञ्च निर्वहति
तथा हि तादात्म्येन सम्बन्धेन धूमवति सम्बन्धिनि महानसे
वर्त्तमानो योऽन्योन्याभावस्तस्य तादात्म्यसम्बन्धावच्छिन्ना

या प्रतियोगिता तदनवच्छेदकवह्निमत्त्वावच्छिन्नस्य वह्नि-मतस्तादात्म्येन सम्बन्धिनि महानसे धूमवतस्तादात्म्येन सम्बन्धित्वम् एवं धर्म्मिणोधर्म्मव्याप्यत्वव्यापकत्वे बोध्ये अत-एव जलादीनां पृथिवीत्वाभावव्याप्यत्वं तत्र तत्रोक्तं सङ्ग-च्छते। यथाच यादृशेन सम्बन्धेन हेतोर्व्याप्यता गृहीता तादृशेन सम्बन्धेन तस्य पक्षविशिष्टत्वज्ञाने यादृशेन सम्ब-न्धेन च साध्यस्य व्यापकत्वमवगतं तादृशेनैव साध्यपक्षयो-र्विशिष्टानुमितिः तेन न धूमावयवे संयोगेन न वा समवायेन पर्वते वह्निधीः तथैवावगतव्यापकताघटकसम्बन्धेन व्यापक-स्याभावग्रहे गृहीतव्याप्यताघटकसम्बन्धेन व्याप्यस्याभावः सिध्यतीति कथमन्यथा समवायेन वह्निविरहिणि महानसे संयोगेन संयोगेन वा वह्निविरहिणि स्वावयवे धूमः समवायेन न निवर्त्तते निवर्त्तते च संयोगेन वह्निविरहिणि स्वावयवे संयोगेनेति नियम उपपद्यते तथा च तादात्म्यसम्बन्धेन जला-दीनां व्याप्यत्वग्रहाद्व्यापकनिवृत्त्या तादात्म्येनैव तेपामभाव' सिध्यति स एव चान्योन्याभावः। इत्थमेव च तादात्म्याद्-वृत्तिधर्मिंणयोर्व्याप्तिनिश्चय इति सङ्गच्छते अतएव गोत्वत्वाद्य-ग्रहदशायां यत्र सास्नादिः सा गौरिति तादात्म्येन गोर्व्या-पकत्वग्रहे सास्नादिना तादात्म्येन गौः तादात्म्येन गोर्व्यति-रेकाच्च सास्नादिव्यतिरेकः सिध्यति एवञ्च संयोगेन गग

नादेरपि द्रव्यत्वव्याप्यस्य वृत्त्यनियामकसंयोगसाध्यकाभाव-
प्रतियोगितावच्छेदकसम्बन्धरूपत्वे साध्यतावच्छेदकसम्बन्धेन
प्रतियोग्यसम्बन्धित्वाभिधाने च पृथिवीत्वादिव्यापकत्वमपि
तद्भाववतोऽपि पृथिव्यादेः संयोगेन तत्सम्बन्धित्वात्
सिद्धिरपि स्यात् तथैव न तु वृत्तिनियामकसम्बन्धेन तेना-
सम्बन्धित्वादव्यापकत्वात्र व्यक्तीभविष्यति चैतदुपरिष्टात्।
नन्वष्टद्रव्यातिरिक्तद्रव्यात्मकत्वाभाववृत्तिधर्मस्य विशेषण
ताविशेषेणाव्याप्यवृत्ति किमपि व्यापकं न स्यात् स्वावच्छे
दकसम्बन्धेन प्रतियोगिनोऽसम्बन्धिनि काले वर्त्तमानस्या
भावस्य प्रतियोगितायां तत्सम्बन्धावच्छिन्नत्वस्य तेन सम्ब-
न्धेन यत्प्रतियोगिसम्बन्धितदन्यत्वस्य च कालेऽसम्भवात्।
न च तादृशसम्बन्धेन निरधिकरणीभूतयत्किञ्चिद्वृत्त्यवर्त्ति
प्रतियोगितावच्छेदक विशिष्टप्रतियोगिसामान्यकत्वमेव च
वाच्यं तथा चावृत्तिगगनाद्यभावदारिकैव तत्सिद्धिः सत्ताद्यधि
करणकर्म्मादौ समवायेन प्रागसामान्यस्य संयोगसामान्यस्य
चावृत्तेर्नातिप्रसङ्ग मूर्त्तत्वमूर्त्तत्वोभयस्य विशिष्टगुणकर्म्मा-
न्यत्व विशिष्टसत्तात्वविशिष्टसत्तादिकस्य च मनोगुणादिवृत्ति
संयोगसामान्यस्य च किञ्चिद्द्रव्यावृत्तीति वाच्य विशिष्टस्या
नतिरिक्तत्वात् समवायेन जातौ साध्यत्वे नियमादावतिव्याप्ति
र्जातिमन्निष्ठतादृशाभावप्रतियोगिताया जातित्वेनानवच्छे-

दात् जातिशून्ये च तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः संयो-
गादिसाध्यकगुणकर्म्मान्यत्वादौ चातिव्याप्तिः अद्रव्ये हेतु-
मति तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः द्रव्ये च संयोगादेरपि
वृत्तेः मैवम् साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रति-
योगिप्रतियोगिकत्वहेत्वधिकरणीभूत यत्किञ्चिद्यक्त्यनुयोगि-
कत्वसामान्योभयाभावस्य विवक्षितत्वात् । धूमसंयोगे
वह्न्यधिकरणायोगोलकानुयोगित्वस्य चैतान्यत्वविशिष्टैतद्दण्ड-
संयोगे एतद्दण्डाधिकरणचैत्रानुयोगिकत्वस्य गुणकर्म्मान्यत्व-
विशिष्टसत्तासमवाये च जात्यधिकरणगुणानुयोगिकत्वस्य
विरहान्नातिप्रसङ्गः स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु
निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभाव प्रतियोगितासा-
मान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्म्मावच्छिन्नत्वोभयाभावस्तेन
सम्बन्धेन तद्धर्म्मावच्छिन्नस्य व्यापकत्वं बोध्यम् । समवाय-
सम्बन्धेन मेयसामान्याभावस्य सामान्यादौ सत्त्वान्मेय-
त्वादेरप्यभावप्रतियोगितावच्छेदकत्वं सुलभम् अतएव सम-
वायस्यैकत्वेन द्रव्यत्वादिप्रतियोगिकत्वगुणाद्यनुयोगित्वोभय-
सत्त्वेऽपि द्रव्यं जातेरित्यादौ वह्निधूमोभयवान् वह्नेरित्यादौ
संयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेऽपि च नाति-
व्याप्तिरित्यपि वदन्ति । प्रतियोगित्वादिस्व स्वरूपसम्बन्ध-
विशेषो न सम्बन्धत्वेन निविष्टः सामानाधिकरण्येऽपि स-

स्वस्य संयोगत्वादिमेव निविशते इति तत्र नियमाघटितमपि सम्यगनुम्। अभाववृत्तेरिदमिह नास्तीदमिदं न भवतीति प्रतीतिनियामकोऽभावाभावसाधारण स्वरूपसम्बन्धविशेष एव तत्साभावसाध्यकव्यभिचारिण्यतिप्रसङ्ग तदपि वा गौणा र्थे प्रयोजनविरहात् विषयतासत्त्वादिवत् प्रतियोगित्वा- धिकरणत्वतत्सम्बन्धत्वादयोऽप्यतिरिक्ता एव पदार्था इत्येक देशिनः ।

नन्ववच्छेदकत्वमिह न स्वरूपसम्बन्धविशेष सम्भवति च साध्ये धर्मे गुरौ तदभावात् प्रमेयधूमवत्कम्बुग्रीवादिमत्त्वप्रा णवायुगुणत्वादेस्तथात्वेन तेन रूपेण साध्यतायां व्यभिचारि ण्यतिप्रसङ्गात् नाप्यतिरिक्तवृत्तित्वं प्रतियोगितायाः स्वरू पसम्बन्धात्मिकाया प्रतिष्ठितत्वभिन्नत्वेन धूमत्वादेरपि तद- तिरिक्तवृत्तित्वात्। न च तथाविधयत्किञ्चित्काभावप्रतियो गितासामान्यशून्यावृत्तित्वं तत् अतएवातिरिक्तसामान्याभा वस्याभावे धूमत्वादेरप्यनवच्छेदकतापातादुपे तथात्वमपि साधु सङ्गच्छते इति वाच्यं यत्र घटवृत्तिद्वित्वतार्णतायां इह नष्टवृत्तिद्वित्वाद्यवच्छिन्नप्रतियोगिताकाभावप्रतियोगितामति- रिक्तवृत्तियत्किञ्चिद्यादावतिप्रसङ्गात् एतेनान्यूनवृत्तित्वविशेषित- मपि परास्तम् अतएव नानाप्रतियोगिकवृत्तिकप्रतियोगिताङ्गी कारेऽपि न निस्तारः लघुरूपसमनियतगुरुरूपेण साध्यतायां

सद्धेतावव्याप्तिः तादृशतदवच्छिन्नत्वाप्रसिद्धेरिति चेन्न प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य विवक्षितत्वात् । स्वसमानवृत्तिकत्वावच्छेदक ग्राह्यं तच्च स्वपर्य्याप्त्यधिकरणपर्य्याप्तिवृत्तिकत्वं यावत्त्वादिकन्तु न तथा पर्य्याप्तिचायमेकोघट इमौ द्वाविति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेष एव क्षित्वादिकमपि न द्वित्वादिसमानवृत्तिकमिति द्वित्वादिना साध्यतायां नाव्याप्तिः घटकत्वावच्छेदकत्वं स्वरूपसम्बन्धविशेष एवञ्च यद्धर्म्मावच्छिन्नेत्यत्र यद्धर्म्मान्यूनवृत्तिधर्म्मावच्छिन्नेति वक्तव्य तेनोक्ता व्याप्तिनिरासः । वस्तुतस्तु तदवच्छिन्नप्रतियोगिताकाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वं स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतत्कत्वं वा तदनतिरिक्तवृत्तित्वं वक्तव्यम् अतएव सत्तावान् जातेरित्यादौ जातिमन्निष्ठाभावप्रतियोगितावच्छेदकगुणान्यत्वविशिष्टसत्तात्वतुल्यवृत्तिकत्वेऽपि सत्तात्वस्य न क्षतिः एवं स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं बोध्यं तादृशप्रतियोगिताश्च विशिष्योपादेयाः नातोगुरोरवच्छेदकत्वं विना दुर्वचत्वं प्रतियोगित्वं सम्बन्धित्वञ्च साध्यतावच्छेदकसम्बन्धेन बोध्यमतो न सम्बन्धभेदमादाय दोषः । कालिकविशेषणताविशेषेण च साध्यतायां तादृशप्रतियोगितावच्छेदकत्वमनित्यतत्तद्व्यक्तित्वे प्रसिद्धम् अभावस्य

प्रतियोगिव्यधिकरणो बोध्य । न च मीनमित्दगीयत्व प्रतियोगिवैयधिकरण्यमनुपादेयं संयोगत्वाद्यवच्छिन्नाभाववति संयोगत्वादिविशिष्टस्य द्रव्ये गुणादिनिष्ठाभावप्रतियोगितावच्छेदकद्रव्यत्वावच्छिन्नसमवेतत्वाद्यवच्छिन्नाभाववति-चाद्वत्तेर्व्याप्यसिद्धेर्व्याप्तेरनवकाशादिति वाच्य धूमवान् वह्नेरित्यादावतिव्याप्ते नञुपरितकाभावच्छेदेनापि सता नसादौ किञ्चित् संयोगेन वर्त्तते येन वह्निमत्संयोगित्वकनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकायोगेनाकाशवृत्तिद्रव्यत्वाद्यवच्छिन्नाभावप्रदर्शितस्य धूमत्वविशिष्टस्य सम्भाव्येत । प्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वस्य विशेषणताविशेषावच्छिन्नत्वस्य वा विवक्षणे पुनरनुपादेयमेव प्रतियोगिवैयधिकरण्यद्वयम् यत्राधिकरणे व्यभिचारस्तदन्यत्वस्वतदन्यत्वप्रकारकप्रमाविषयत्वस्यसाध्यवत्त्वप्रकारकप्रमाविषयत्वस्यादीनां साध्यतावच्छेदकविशिष्टसाध्यवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वाद्धेतुतावच्छेदकविशिष्टहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाच्चातिव्याप्तेरनवकाशात् तथा च विशेषणताविशेषावच्छिन्न यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं तत्सम्बन्धावच्छिन्नसाधनसमानाधिकरणात्यन्ताभावप्रतियोगिता सामान्ये नास्ति साधने तद्धर्मविशिष्टसामानाधिकरण्यं व्याप्तिरिति पर्य्यवसितोऽर्थं

यत्र सद्धेतुविशेषे साध्यतावच्छेदक न प्रतियोगितावच्छेदकं तत्रैवेयं रीतिरुपादेयेत्यपि वदन्ति । गौरवप्रतिसन्धान दशायामपि कम्बुग्रीवादिमान् नास्तीतिप्रतीतिबलात् गुरुरपि धर्म्मोऽवच्छेदकः प्रतियोगितायाः । नचास्यास्तत्प्रतियोगिकाभावमात्रमवलम्बनं तथाविधयत्किञ्चिद्‌घटसत्त्व एव तादृशप्रतीतेरनुदयात् अतएवैकघटवति भूतले कम्बुग्रीवादिमान् नास्तीतिशब्दो न प्रमाणं प्रमाणञ्च घटसामान्यशून्ये न चेदेवं लघुरूपसमनियतानां गुरूणामव्याप्यतापत्तिः गुणादिगुणकर्म्मान्यत्वविशिष्टसत्तादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वनिष्ठायाः प्रतियोगिताया लाघवेन द्रव्यादिनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वेनैवावच्छेदात् तत्तदवच्छेदकत्वे व्यक्तीनाञ्च प्रातिस्विकरूपेणाभावानां युगसहस्रेणापि ज्ञातुमशक्यत्वात् एवं द्रव्यत्वत्वादिविशिष्टद्रव्यत्वादेरव्याप्यत्वप्रसङ्गोऽप्यनुसन्धेयः उपदर्शितप्रकाराणामपि स्वत्वादिघटितत्वेन दुर्ज्ञेयत्वात् अतएव घ्राणग्राह्यगुणत्वादिना साध्यतायां द्रव्यत्वादेर्व्यभिचारित्वं साधुसङ्गच्छत इत्यपि केचिदिति कृतं पल्लवितेन ।

ननु यएव मिलिता वह्न्यभावा जलह्रदादौ वह्निर्नास्तीतिधियं जनयन्ति तएव प्रत्येकं धूमवति महानसादौ वर्त्तन्ते तत्र च तेषां स्वस्वावच्छेदकतत्तद्वह्नित्वावच्छिन्न-

वैयधिकरण्यनिरूपिकाया प्रतियोगिताया अवच्छेदकमेव वह्नित्वमतोऽव्याप्तिः तथैव वह्निमात्रावच्छिन्नस्य तद्वृत्तित्वात् तथात्वं तथा सति इन्द्रवृत्तिधूमाभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नस्य वह्निमद्योगीनकवृत्तित्वादति व्याप्तेः । अथानुगत एव तत्तदभावप्रतियोगितानां मावच्छेदकम् अनवच्छेदकमेव तत्ताभावप्रतियोगितायाः अभावान्तरे मानाभावात् । तथा च तद्रूपावच्छिन्नसाध्यके व्यभिचारिण्यतिव्याप्तिरत आह सामान्येति । संशयान्यथानुपपत्ति प्रमाणयति अन्यथेति । वायाविति । यद्यप्ययं संशयो न वायुविशेष्यकः तस्य विशेषणत्वेनोपस्थितत्वात् न वा रूपविशेष्यकः तथा सति रूपतदभावयोर्विरोधिनोः कोटितायां प्रकृतानुपयोगप्रसङ्गात् तथापि वायू रूपवान् तदभाववान् वेति रूपतदभावकोटिकसंशये तात्पर्य्यम् अन्यथा रूपवत्तदन्योन्याभावकोटिक इति नाभेद इति सम्प्रदायविदः । विरुद्धयोरेकधर्म्मिप्रकारावगाहिज्ञानमेव संशयो न तु तदुभयप्रकारतापि नियता तथा च रूपतदभावविशेष्यकोवायुविशेषणकोऽसाविति तु नव्याः । वायुवृत्तित्वतदभावकोटिको रूपधर्म्मिक एवायं संशय अधिकरणे तत्तदभावान्यतरनिश्चयस्यापि तदधिकरणवृत्तित्वसंशयविरोधित्वात् अन्यथा भूतले घटतदभावान्यतरनिर्णयेऽपि घटो

भूतलवृत्तिर्नवेति संशयप्रसङ्गादित्यपरे। अथैतावन्त्येव रूपाणीत्यनिर्णयात् यावद्रूपाभावानिर्णये संशयो न विरुध्यत इति चेन् यावद्रूपाभावानिर्णय इत्यस्य यावन्तो रूपाभावस्तेषां यावत्त्वेन रूपेण तेषां यावन्ति रूपाणि तावदभावानां यावद्रूपत्वेन तदभावानां वा अनिर्णय इत्यर्थः। न प्रथमतृतीयौ तथानिर्णीतत्वात् नेतरौ प्रतियोगितदभावयोर्यावत्त्वानुल्लेखेऽपि योग्यानुपलब्ध्या भूतले घटो नास्तीति निश्चयमात्रादेव घटतदभावसंशयोच्छेददर्शनेन तस्याकिञ्चित्करत्वात्। न चातिरिक्तसम्भावनाविरहसहकृत एवाभावनिश्चयस्तत्प्रतिबन्धकः सम्भावना च रूपं पार्थिवादित्रितयभिन्नं न वेत्याकारा निवर्त्तते चेयं रूपत्वावच्छेदेनैतत्त्रितयभिन्नत्वाभावनिश्चयादेवेति वाच्यम् गौरवात् विनापि अतिरिक्तसम्भावनां विशेषाभावनिश्चये सामान्यसंशयदर्शनाच्च। अथाभावस्य सामान्यावच्छिन्नप्रतियोगिताकत्वनिश्चय एव तादृशसंशयविरोधी अन्यथा तवाप्यतिप्रसङ्गात् स च न प्रकृते अभावस्य च यावद्विशेषाभावाधिकरणवृत्तित्वेन विशिष्टस्य तदवच्छेदेन वा सामान्यावच्छिन्नप्रतियोगिताकत्वं सम्भवति चेदं तादृशाभावप्रतियोगिताया अतिरिक्तत्वात् तेन नैकविशेषवतो विशेषान्तराभाववत्त्वेन सामान्याभाववत्त्वप्रसङ्गः। न च प्रतियोगितावच्छेदकभेद-

स्याभावभेदनियामकतया भेदसिद्धिः प्रतियोगिभेदस्य तच्चे एकघटप्रतियोगिकस्य प्रागभावादि चतुष्कस्याभेदप्रसङ्गात् अवच्छेदकन्तु भिद्यत एव तत्र कश्चित्तादात्म्यम् कश्चित् संसर्गः कश्चित्पूर्व्वापरकालीनतत्घटत्वादेः तथात्वादिति वाच्यं संसर्गं प्रतियोगिविशेषणसाधारण्येऽकस्यावच्छेदकस्य दुर्वचत्वात् पूर्व्वापरकालीनत्वादेर्ध्वंसादिप्रतियोगितावच्छेदकत्वे मानाभावाच्च। किञ्च अवच्छेदकभेदस्याभावभेदनियामकत्वम् न तज्ज्ञानजन्यत्वं अन्योन्याभावादिस्वरूपस्य तस्याजन्यत्वात् नापि तद्व्याप्यत्वमपि वैयधिकरण्यात् अतएव न तद्व्यापकत्वमपि अभेदेऽप्यविरोधाच न च तद्भिन्नधर्म्मावच्छिन्नप्रतियोगिता कत्व तदवच्छिन्नप्रतियोगिताकान्यत्वस्य व्याप्य मानाभावात् अतएव च समनियतसुखदुःखादितत्तत्स्वपरिमाणघ्यत्वादि नानाधर्म्मावच्छिन्नोऽप्यभिन्न एवाभावः भेदसिद्धिस्तु भाववदभावस्यापि विरुद्धधर्म्माध्यासादेव अतएव गगनादीनामतीनां समनियतानां वा धर्म्माधर्म्मिणः एवात्यन्ताभाव युगपदुत्पन्नविनष्टानां समानदेशानामसति बाधके एक एव ध्वंसः प्रागभावो वेति। व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकोऽपि चेदभावः प्रामाणिकस्तदा तत्तद्धर्म्मैव प्रतियोगिता सर्व्वैरेव व्यधिकरणैर्धर्म्मैः सर्व्वैव समाना समानाधिकरणैः सम्बन्धैरवच्छिद्यन्ताम् आकाशाभाव एव

वा तथास्त्वामिति मैवम् एवं हि तत्तद्देशकालाद्यवच्छिन्ना-नवच्छिन्नतत्तदधिकरणवृत्तित्वेन विशिष्टस्य तत्तदवच्छेदेन वा एकस्यैवाभावस्य घटपटगोत्वाश्वत्वादिप्रतियोगिताकत्व-सम्भवेन तत्तद्भेदोऽपि विलुप्येत। तत्तत्प्रतियोगिकत्वं तत्त-त्स्वभावो न च तत्राधिकरणवृत्तित्वस्यान्तर्भावोऽवच्छेदकत्व-ञ्चेति समानम्। अतएव सामान्यावच्छिन्नप्रतियोगिताकत्वं व्यासज्यवृत्तीत्यपि प्रयुक्तम् अव्यासज्यवृत्तेस्तत्स्वभावस्य तत्त्वानुपपत्तेरतिरिक्तकल्पने च किमपराद्धमतिरिक्ताभावेन। किञ्च व्यधिकरणयोर्घटपटयोर्द्वित्वप्रतीतिवद्व्यधिकरणानामपि विशेषाभावानां युगपदिन्द्रियसन्निकर्षे सामान्यावच्छिन्नप्र-तियोगिताकत्वप्रत्ययोऽपि स्यात् अपि च रूपान्तरेण सम्बन्ध-विधया वा व्यासज्यवृत्तिधर्म्मस्य ज्ञानेन यावदाश्रयसन्निकर्षा-पेक्षामानाभावात् एवञ्च एकाभावसन्निकर्षेऽपि सामान्यभाव-बुद्धिप्रसङ्गः यादृशे च तस्य ज्ञाने यावदाश्रयाणां सन्निकर्षो-ऽपेक्ष्यते तत्र तेषां तद्भेदस्य च ज्ञानमपि तदज्ञाने तद्भेद-ज्ञाने च तदग्रहात् आश्रयभेदभ्रमेण तद्भ्रमदर्शनाच्च न चात्र यावद्विशेषाभावानां प्रथमसुपस्थितिः सम्भवति तत्प्रति-योगिनां विशेषतोऽनुपस्थितेरिति दिक्। केचित्तु अनन्त-विशेषाभावानां सामान्यावच्छिन्नप्रतियोगिताकत्वस्य तद्व्या-सज्यवृत्तित्वस्य च कल्पनामपेक्ष्य लाघवात् सामान्यावच्छिन्न-

प्रतियोगिताकत्वेनैक एवाभावः कल्प्यते कल्पनीययोरस्त्वो भवत्र तुल्यत्वेऽपि एतदपेक्ष्य तस्य गुरुत्वात् विनिगमना भावेऽपि च सामान्याभावसिद्धिरप्रत्यूहैव धर्मकल्पनातो धर्मिकल्पनाया गुरुत्व कल्पनीयानेकत्वप्रयुक्तम् । न चाति रिक्ताभावस्य तत्र च सामान्यावच्छिन्नप्रतियोगिताकत्व स्यानन्तव्याप्याद्यधिकरणवृत्तित्वस्य च कल्पनामपेक्ष्य सामा नन्तव्याप्याद्यधिकरणवृत्तित्वानां यावद्विशेषाभावानामेव सा- मान्यावच्छिन्नप्रतियोगिताकत्वस्य तथाव्याप्यवृत्तित्वस्य च कल्पनैव लघीयसीति वाच्यम् एवं सत्यभावमात्रासिद्धि प्रसङ्गादित्याहुः ।

यद्वेत्यादि । अयाव नानाव्यक्तिरूपादिसाध्यकेऽव्यक्ति पृथिवीत्वादावव्याप्ति न च तत्र रूपवत्त्वादिकमेव साध्य तच्च परम्परासम्बन्धेन रूपत्वादिकमेव तेन च सम्बन्धेन न तदभावः पृथिव्यादाविति वाच्य रूपादेरसाध्यतापत्तेः द्रव्यान्यत्वादिविशिष्टसत्त्वाद्यभावस्य द्रव्यादिवृत्तित्वात् सत्त्वा दिसाध्यकद्रव्यत्वादावव्याप्तेश्च अन्यथा विशिष्टतया सत्त्वादे साध्यत्वे व्यभिचारिणि जातिमत्त्वादावतिप्रसङ्गात् । द्रव्यत्वा दवच्छेदे च विशिष्टाभावस्य विशेष्यप्रतियोगिकत्व द्रव्यत्वाद्यव च्छिन्नसाध्याभावस्य तत्र सत्त्वात् । यथाप्रतियोगित्व प्रतियोगित्वाभाव न च येन रूपेण तद्रूपावच्छिन्नव्याप्यत्व हेतौ भवति चाय रूपादौ रूपत्वादिना न पृथिव्यादिनिष्ठा

भावप्रतियोगित्वमिति प्रत्ययादिति चेन्न तादृशप्रतीत्यादिरूपत्वादौ प्रतियोगिताया अवच्छेदकत्वाभावो गम्यते न तु तदभावावच्छेदकत्वं सर्वत्रैव रूपे पृथिवीनिष्ठाभावप्रतियोगित्व न तु कुत्रापि रूपे तदभाव इत्यबाधितप्रत्ययात् अन्यथा यो यो धर्मो यस्य यस्य नावच्छेदकः तत्तदवच्छेदेन तत्तदभावोऽप्युक्तरीत्या सिध्येत्। प्रमेयधूमत्वेन न वह्निमन्निष्ठाभावप्रतियोगित्वमिति प्रत्ययात्तदवच्छेदेन तादृशप्रतियोगित्वाभावस्यापि सुवचत्वात्। अथ प्रमेयधूमत्वं न गौरवेण सामानाधिकरण्यप्रतियोगितावच्छेदकं विवक्षितञ्चात्र तथेति चेत् असमानाधिकरणधूमकव्यक्तिवृत्तितया वह्नित्वमपि न तदवच्छेदकं कम्बुग्रीवादिमत्त्वादिना च घटादेरसाध्यतापत्तिरिति बहुव्याकोपस्य। अतएव प्रमेयधूमत्वं गौरवेण प्रतियोगिताया इव तच्छून्यताया अपि नावच्छेदकमित्युक्तावपि न निस्तारः। अत्र वदन्ति अप्रतियोगित्वं प्रतियोगितानवच्छेदकधर्मवत्त्वं न चैवं पूर्वस्मादभेदः तत्र साध्यजातीयसमानाधिकरणसाधनजातीयत्वस्य अत्र च साध्यसाधनयोः सामानाधिकरण्यस्य व्याप्तित्वे तात्पर्यात् घटकयोस्तादृशप्रतियोगितावच्छेदकतत्त्वान्योऽन्याभावात्यन्ताभावयोर्भेदेन भेद इत्यपि कश्चित्।

अत्यन्ताभावगर्भवत्सामान्यविशेषभेदेनान्योऽन्याभावगर्भमपि व्याप्तिद्वयमाह यत्समानाधिकरणेत्यादिलक्षणद्वयेन

प्रथमे एकत्र साध्याधिकरणानन्त्याधिगमात् द्वितीयमसङ्गतम् च यद्यपि नानाव्यक्तिसाध्यकस्थले तत्तत्साध्यतत्तत्सम्बन्धा भाववत्त्वस्य च साधनसमानाधिकरणान्योन्याभावप्रतियोगिता-वच्छेदकताव्याप्तिः तथापि, यद्रूपावच्छिन्नस्य तादृशान्योन्याभावप्रतियोगितानवच्छेदक तद्रूपावच्छिन्न सामानाधिकरण्यमित्यत्र तात्पर्यम् यत्रादौ तत्संयोगादौ तद्घटादौ वा साध्ये सर्वत्र साक्षात्परम्परया वा अनुगमक वह्नित्वादिकमेव साध्यतावच्छेदकं तदवच्छिन्नवत्त्वस्य च न तादृशान्योन्याभावप्रतियोगितावच्छेदकत्वमिति यत् यद्रूपावच्छिन्नं यादृशरूपावच्छिन्नमनवच्छेदकमिति वा यथा यत्र यस्य शब्देनानुपादेयत्वात्। अन्येत्यादि। यत्र प्रकृतरीत्या सर्वत्र तादृशप्रतियोगितावच्छेदकत्वपर्यवसानानु-धावनस्यावश्यकत्वेनाकिञ्चित्करमेव तादृशाभावप्रतियोगित्व तथापि विशिष्टसामानाधिकरण्यरूपाया व्याप्तेर्व्यधिकरणस्य सम्भवित्वमात्रे तात्पर्यं व्याप्तिरेवेत्यस्य कास्मिन्नित्यादि अन्योन्याभावगर्भसत्त्वपक्षाव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्ति-निरस्यति न चेति। अभेदस्येति। तथा च मूले महीरुहो विहङ्गमसंयोगी नेति प्रतीतिरनुभूयमानविशिष्टभेदमेवावलम्ब्य अन्या अपि शिखी विनष्ट इति प्रतीतिवद्विशेषणाभावविषयता मात्र कल्प्यते बाधकाभावात् यत्र च विशिष्टभेदेन बाधक तत्र तथाप्रतीतिः बलात्तत्सिद्धिरप्यूह्येवेति नातिप्रसङ्गः ।

अत्र वदन्ति । अभेदस्य भेदाभावस्य ज्ञानं न बाधकं भेदवत्तत् प्रतियोगितावच्छेदकस्य संयोगात्मनस्तदभावस्याव्याप्यवृत्तित्वेन तदुपपत्तेः यथा हि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञाने तदत्यन्ताभावस्याग्रहादभावव्यवहाराच्च स एव तदभाव इति कल्प्यते तथाप्रतियोगितावच्छेदकधर्म्मग्रहे तद्वदन्योऽन्याभावस्याग्रहादभावव्यवहाराच्च स एव तस्याभाव इति निश्चीयते आधिक्येऽपि चाव्याप्यवृत्तित्वात् अतएव न मूलावच्छेदेन कपिसंयोगिभेदाभावज्ञानं तथा असम्भवादसिद्धेश्च नापि कपिसंयोगिभेदस्य वृक्षावृत्तित्वज्ञानमसिद्धेः तद्वृत्तित्वस्यैव ग्रहात् नापि कपिसंयोगिभिन्नभेदज्ञानं कपिसंयोगिभेदवत्तद्भेदस्याप्यव्याप्यवृत्तित्वेनाविरोधात् नापि मूलावच्छेदेन तज्ज्ञानमसिद्धेः तद्धर्म्मवद्भिन्नभेदस्य तद्धर्म्ममात्रपर्य्यवसिततया कपिसंयोगिभिन्नभेदात्मनः कपिसंयोगस्य मूलवृत्तित्वे विरोधाच्च न हि घटभिन्नभेदो घटत्वादतिरिच्यते आवश्यकक्लृप्तघटत्वेनैवोपपत्तौ अतिरिक्तकल्पनायां मानाभावात् अन्यथा सर्वत्वाभावस्याभावोऽतिरिक्त एव कल्प्येत अतएवात्यन्ताभावप्रतियोगिनोरन्योऽन्याभावप्रतियोगितावच्छेदकयोः सामान्यत एव क्लृप्तो विरोधः तत्र कपिसंयोगवत्यपि वृक्षे मूले न कपिसंयोग इति प्रतीतेरन्यथानुपपत्त्या तावदाद्ययोः स सङ्कोच्यतां न ह्येषा प्रतीतिः कपिसंयोगिभेदविषयत्वेनोप-

पादयितु मशक्या निगमत संयोगपदत्वेन प्रतियोगिनोऽनुप स्थितेः प्रतियोगिकोटौ तन्नुपैमाव मूने न कपिसंयोगोति प्रतीतेन्तु गिखो विनष्ट इति वद्भासमानविशेषणस्याभाव मात्रविषयत्वमोपपन्नत्वागान्तिमयोरपोति परास्तम्। अन्यो ऽन्याभावासरस्य प्रतियोगितावच्छेदकानासमानाधिकरण तया अन्यप्रतियोगितावच्छेदकासामानाधिकरण्यपर्यवगा यिनो विरोधस्य मात्यघटितत्वेन विशेष एव विश्रामात् अत्यन्ताभावप्रतियोगिनोरिवान्योऽन्याभावप्रतियोगितावच्छे- दकयोरबाधितसामानाधिकरण्यानुभवेन प्रतिविरुद्धतया तथाविधविरोधकल्पनाया अनवकाशाच। किञ्च गिखी विनष्ट इति प्रतीतेर्विशिष्टध्वंसोऽर्थः भिन्ना विशेष्ये तद्बाधा दाम्नां विशेषणध्वंसविषयता न संयोगोति प्रतीतेर्विशिष्ट- भेदस्यावगाह्यमानतया कथं विशेषणसंसर्गाभावविषयत्वमो पपत्तिः न खलु प्रत्यक्षेणापि बाधकैरिद रजतमिति प्रतीतेर वद्भत्वावमस्त्यव व्यवस्थापयितुं शक्यते न च विशेषणभेद एव तस्या विषयः अपेऽपि न कपिसंयोगीति प्रतीत्यापत्ते युज्यते अन्योऽन्याभावोऽव्याप्यवृत्तिः कथमन्यथा पक्षताद गायां घटादावर्थं न श्यामो दृष्टादिविभागसमये पैयादौ नायं तदवयवानित्यादयो व्यवहाराः न च तत्र विशेषण- संसर्गाभाव एव प्रतीयते अनुयोगिनि सप्तमीं विना तदनु पत्तेः न खलु भूतलं न घट इत्यादीनि वाक्यानि कदाचि

दपि घटसंसर्गाभावं बोधयन्ति तथात्वे वा घटो न घट इत्यादेरपि प्रसङ्गात् अपि च विशिष्टवाचकदण्ड्यादि-पदेभ्योधर्म्मुपसर्ज्जनतयोपस्थितस्य दण्डादेः कथं प्रति-योगित्वेनाभावेऽन्वयः इतरविशेषणत्वेनोपस्थितस्य निराका-ङ्क्षतयान्यत्र विशेषणत्वेनान्वयायोगात् न चात्र विशिष्टोप-स्थापकं पदं विशेषणमात्रपरं तथापि चैत्रो न दण्डी घटो न श्यामं रूपमित्यादावपि दण्डादिसंसर्गाभावप्रतीत्यापत्तेर्दु-र्व्वारत्वात् एतेन नञोऽभाववल्लाक्षणिकतया विनैव सप्तमी-मन्वयबोधसमर्थनं प्रत्युक्तम् एवञ्च चैत्रो न पचतीत्यादौ आख्यातात्कृत्या लक्षणयावोपस्थितस्य कर्त्तुरेव भेदोभासत इत्यस्तु वस्तुतो न पचति चैत्रो नेदं मैत्रस्येत्यादौ विभक्त्यर्थस्य कृतिसम्बन्धादेरभावान्वयबोधे नञा सप्तमी नापेक्ष्यते अपे-क्ष्यते च प्रातिपदिकार्थस्येति निपुणतरमुपपादयिष्यामः । नञो वैधर्म्म्यपरतया न श्याम इत्यादेः श्यामादिविधर्म्मीत्यर्थः वैधर्म्म्यञ्च रक्तत्वादिकमेव मदाङ्कराचार्य्या. श्यामाद्रक्तो विधर्म्मा न तु पृथगित्यपि वदन्ति।भि कृतं पल्लवितेन।

सम्बन्धत्वेनेति निरूपितत्वमेतत्। कस्येति इत्यस्या-ननुगताया अपि व्याप्तेर्ज्ञानं यथानुमिति हेतुस्तथा वक्ष्यते। एते अन्योऽन्याभावात्यन्ताभावगर्भे। तादृशेति। ननु किं द्वित्वादिकं प्रतियोगितावच्छेदकमेव न भवति किं वा भव-त्येव परन्तु कॢप्तानामेव स्वसमानाधिकरणतत्तद्धर्म्मावच्छिन्न-

प्रतियोगिताकानामभावानां भाषयादित्वनियमाय नाद्य, एकैकाभावप्रतीतिर्नो द्वौ न स्त इति प्रतीतेर्विभज्यत्वात् शब्दादिना द्वौ न स्त इति निश्चयेऽप्येकैकाभावमनुपाग विष यानुगम विना अनुगताकारप्रत्ययायोगात् । न चाभावस्य द्वित्वाधिकरणप्रतियोगिकत्वमात्र द्वित्वसमानाधिकरणध र्मावच्छिन्नप्रतियोगिताकत्वं वा द्वय नाम्नोति प्रतीतिर्विषय तादृशद्वित्वाधिकरणव्यक्तिविशेषविरहेऽपि तथाविधो भय गाल्लिनि तादृशौ द्वौ न स्त इत्यप्रत्ययात् द्वित्व सामानाधि करण्याभानेऽपि प्रतीतेरनुगताकारत्वाच्च अतएव न तादृश प्रतीतेर्घटत्वपटत्वाद्यन्यतरावच्छिन्नप्रतियोगिताकाभावविषय त्वम् अन्यतरत्वानुल्लेखेऽपि घटपटौ न स्त इत्यनुगतप्रत्ययाच्च न च परम्परासम्बन्धेन तादृशद्वित्वसामान्याभावएव द्वौ न स्त इति प्रतीतेर्विषय द्वित्वाधिकरणयोरेव प्रतियोगित्वोल्ले खात् द्वित्वादेर्घटादिवृत्तित्वानुपस्थितावपि अन्तत शब्दे नापि घटपटौ न स्त इत्यादिप्रत्ययाच्च अतएवैकैकविशिष्टा परामर्शोऽपि न तदालम्बन विरुद्धयोरपि जलत्वपृथिवी त्वयोर्द्वित्वेनाभावप्रत्यय इत्युक्तत्वाच्च । नाम्त्य तथात्वेऽपि साध्यतद्वतोर्व्याप्यगाभाव प्रतियोगित्वानपायात् अन्तरेणा भावान्तरमेकैकघटवति आयमानाया यत्किञ्चिद्घटद्वयवति चानुत्पद्यमानाया घटौ न स्त इति प्रतीतेरुपपादयितुमशक्य त्वादित्यत आह अभ्युपगमेवेति । उभयत्वमेव प्रतियोगि

मधर्मो व्याप्ति यन्वस्तु धूमस्य धूमवत धूमत्व धूमवत्त्व वह्नेम् वह्निमतस्वित्यादिप्रकारेण व्याख्येय अत चाव च्छेदकत्व न स्वरूपसम्बन्धविशेष विरुद्धदिक्कामावच्छिन्न वृत्तिकस्य न्यूनदेशकालवृत्तिकादेर्याधिकरणतया तदसम्भ यात्तुल्यवृत्तिकधर्मद्वयाधिकरणत्वयोर्मिथोऽवच्छेद्यावच्छेदक- भावस्य च नियन्तुमशक्यत्वात्प्राप्यन्यूनवृत्तित्वात न्यूनवृत्ति कधूमादेरव्याप्यतापत्ते किन्त्वनतिरिक्तवृत्तित्व स्वान्यून- वृत्तित्वमिति यावत् इत्ती न चैयन्नाव्यविन्यव्याप्ति यत्र च यदन्यूनवृत्ति साध्य तत्र स्वव्यापकसाध्यसम्बन्धित्वपर्यय वसानमपेक्ष्य गौरव परमवशिष्यते तत्र ग्रन्थकारएवाग्रे विवे- चयिष्यत इत्याहु ।

उपाधिनेति विशेषणसामान्येनोपाध्युपवेशेनेति वा यत् वह्न्याधार्द्रेन्धनप्रभववह्निना रासभार्द्रेन्धनादौ च तथा विधवह्निविशिष्टत्वेन धूमसम्बन्धेऽपच्छिद्यमाने तथाविध वह्नेरप्यनुप्रवेशात् रासभत्वादिकन्तु निमित्तं नवेत्यन्य- टेतत् । अत्र चेद स्प्रेहवत् नि स्प्रेह वा स्पर्शादित्यत्र सिना व्युपाधिशयेन शीतत्वेन शीतान्यत्वेन वा साध्यासमानाधि- करणतया साधनव्यापकतया वा स्वयमनुपाधिना केवलेन विशेषणीभूय वा शीतान्यएगत्वेन चोपाधिना सत एव स्पर्शे साधनस्वन्धोऽवच्छिद्यत इत्युपाधिनैवेति नियमे न तात्पर्य्य परन्तु यत्र साधनतावच्छेदकस्यावच्छेदकत्व

मात्रे यत एव सोपाधौ साधनतावच्छेदकातिरिक्तं नियत-मवच्छेदकम् अतएव तद्विशेषस्तत्रोपाधिरिति वदन्तीत्याह अतएवेत्यादि अत्रावच्छेदकत्वं सामानाधिकरण्येन तत्त्वञ्चान्यूनवृत्तित्वं व्यापकत्वमिति यावत् तच्चाधिकरणान्तर्भावेन तेन साध्यविशिष्टसाधनतावच्छेदकावच्छिन्नसाधनवत्त्वव्यापकाधिकरणताकत्वं पर्य्यवस्यति निरुक्तविशिष्टसाधनव्यापकत्वमिति तु निष्कर्षः। इत्थञ्च सत्ताद्येकव्यक्तिकहेतुनिष्ठद्रव्यत्वादिसामानाधिकरण्य व्यापकसामानाधिकरण्यप्रतियोगिनि घटत्वादौ नातिप्रसङ्गः न वा द्रव्यं जन्यत्वे सति सत्त्वादित्यादौ द्रव्यत्वविशिष्टसत्ताव्यापके स्पर्शवत्त्वादावप्रसङ्गः निःस्नेहं स्पर्शात् द्रव्यं सत्त्वादित्यादौ शीतस्पर्शान्यत्वरूपान्यत्वादेर्वारणाय तत्रेत्यादि। तत्र साध्यविशिष्टे साधने विशेषणं साध्याभावविशिष्टात्साधनात्सामानाधिकरण्येन व्यावर्त्तकं साध्याभावविशिष्टनिरुक्तसाधनवदवृत्तीति यावत् एवञ्च द्रव्यं सत्त्वादित्यत्र सत्ताया अभेदेऽपि गुणकर्म्मान्यत्वेनाव्याप्तिः नापि द्रव्यं कर्म्मान्यत्वे सति सत्त्वादित्यत्र गुणान्यत्वादौ इत्थञ्च साधनतावच्छेदकस्यानवच्छेदकत्वद्योतनाय परं तद्भिन्नत्वमुक्तं न तु विवक्षितमेव तत् वैयर्थ्यात् इदं दधि जन्यं वा दभ्र इत्यादौ दधित्वाद्यव्याप्तेश्च। यद्वा प्रकृतसाधनतावच्छेदकानवच्छेद्यप्रकृतसाधननिष्ठसाध्यसम्बन्धितावच्छेदकत्वं पूर्वदलार्थः अ-

सवच्छेदकत्वञ्च तच्च साध्याभावविशिष्टसाधनवृत्तितया तद्वि-
शिष्टसाधनस्य साध्याभाववद्वृत्तित्वेन साध्याभाववत्तद्वि
शिष्टसाधनवत्त्वेनेति यावत् एतेन धूमवान् मेयत्व इत्यादौ
मेयत्वावच्छेदेन साध्यसम्बन्धप्रसिद्धिः गुणवद्गुणकर्मान्यत्व
मिति जातिमत्त्वादित्यादौ जातित्वघटकनित्यत्वादेर्वैयर्थ्येन
विशिष्टव्याप्यतावच्छेदकतया गुणकर्मान्यत्वादेरुपाधितापत्ति
रिति निरस्तम् अवच्छेदकत्वञ्च सामानाधिकरण्येन तथा
च साध्यविशिष्टस्य साधनस्यानिरूपितावच्छेदकसाधनताव
च्छेदकावच्छिन्नसाधनस्य व्यापकत्वमर्थः पर्यवस्यति उप
दर्शितमीतव्याप्यत्वादिवारणाय तत्रेत्यादि तत्र साधनता
वच्छेदकविशिष्टे साधने विशेषणं साध्यशून्यावृत्तित्वोप
यिक पक्षसामानाधिकरण्यविशिष्टपक्षसाधनवत्त्व साध्या
भाववति न वर्त्तत इति यावत् साध्याभावविशिष्टपक्षसा
धनाधिकरणसामान्यात् साध्यविशिष्टपक्षसाधनाधिकरण-
सामान्यस्य व्यापकत्वमिति समुदायार्थनिष्कर्षं इत्याहुः ।
केचित्तु विशेषण सामानाधिकरण्य तथा च सामानाधि
करण्यस्यासत्त्वा येनावच्छिद्यते अवच्छेदकीभूतसामाना
धिकरण्यप्रतियोगीति यावत् अवच्छेदकत्वञ्चेदमन्यूनानति
रिक्तवृत्तित्व गुणेऽव्याप्तिसामानाधिकरण्यस्याप्रसक्तेव य
द्यपि सत्यस्य उद्भूतरूपवत्त्वादित्यत्र महान् अनित्यद्रव्य-
त्वादित्यत्र महत्त्वस्यानित्यद्रव्यसमवेतत्वस्य च सत्यमात्रस्य

णाक्रान्तस्योपाधेः सामानाधिकरण्यं साध्यसामानाधिकरण्यन्यूनातिरिक्तवृत्ति तथापि हेतुनिष्ठसाध्यसामानाधिकरण्यस्य हेतुनिष्ठं यत् सामानाधिकरण्यमन्यूनानतिरिक्तवृत्ति-तत्त्वं विवक्षितं सत्त्वनिष्ठद्रव्यत्वसामानाधिकरण्यस्य च तन्नि-ष्ठकर्मान्यत्वसामानाधिकरण्यमतिरिक्तवृत्ति गुणे तदभावा-वच्छेदकावच्छिन्नवृत्तिकत्वात् पृथिवीत्वादिसामानाधिक-रण्यन्तु न्यूनवृत्ति जलादौ तदवच्छेदकावच्छिन्नवृत्त्यभाव-प्रतियोगित्वात् साध्यव्यापकानां सद्धेतावुपाधित्ववारणाय साधनतावच्छेदकभिन्नेनेति तदनवच्छेद्यार्थकमित्याहुः। ननु सर्वत्र सोपाधौ सर्वेणोपाधिना साध्यसम्बन्धोऽवच्छिद्यत इति न नियमः अयं प्रत्यक्षो मूर्त्तत्वादित्यादावुद्भूतरूपवत्त्वादेः तदसम्भवादित्यत आह अतएव च तत्रेति यत एवोद्भूत-रूपवत्त्वादेर्न तथात्वसम्भवः अतएव तत्र तादृशनियमवादि-मते इदं लक्षणमिति साधनाव्यापकत्वमिह साध्याभाव-विशिष्टसाधनव्यापकीभूताभावप्रतियोगित्वं तादृशसाधना-सामानाधिकरण्यमिह पर्य्यवसितं तेनोपदर्शितोद्भूतरूप-वत्त्वव्युदासः। अथ प्रत्यक्षो द्रव्यत्वादित्यादौ घटत्वादा-वतिव्याप्तिः साध्यव्यापकत्वेन विशेषणे च स श्यामो मित्रा-तनयत्वादित्यादौ शाकपाकजत्वादावव्याप्तिरत उक्तं सा-धनावच्छिन्नेत्यादि साध्याभावसम्बन्धिनि विरुद्धस्य साध्य-सम्बन्धस्यावच्छेदभेदं विनानुपपद्यमानस्यावच्छेदकीभूयो-

पपादनमुपाधिफलम् तद्समर्थानाचोपदर्शितोदभृतरूपवत्त्वा दोनां सोपाधिभाव सम्भवतीत्याह व्यभिचारिणीति व्यभि चार सपक्षविपक्षवृत्तित्वम् अथ विपक्षगामित्वरूपव्यभि चारोन्नयनमेवोपाधिफलम् तथोद्भूतरूपादीनामप्यस्तीत्यत आह अतएवेति यतएव साध्यसम्बन्धितावच्छेदकं रूप व्याप्तिः सोपाधौ तु स्वाभाविक हेतुतावच्छेदक न साध्य सम्बन्धितावच्छेदकम् यतएव स्वसमीपवर्त्तिनि स्वसमा-नाधिकरणे व्यभिचारिणि हेतौ स्वनिष्ठसाध्यसम्बन्धिताव च्छेदकरूपव्याप्तिसङ्क्रामकतया साध्यव्याप्यस्यैवोपा धित्वमाचार्य्यैरनुमन्यत इत्याह अतएवेति साध्यन्यून इत्ता-वुपाधिव्यवहारं दूषणौपयिकरूपस्यासत्त्वं याथतयोपाधि-पदस्य यौगरूढ़िलक्ष्यव्यपगमेन निराकुरुते लक्षणन्त्विति लक्षण दूषणौपयिकं रूपम्। साध्येति अत्र साध्यव्याप कमात्र विवक्षित तावतैव साधनवृत्तितदतिरेकेण साध्य-व्यतिरेकानुमानसम्भवात् साधनवति व्यापकनिवृत्त्या साध्य साधनसम्बन्धनिवृत्तिसिद्धावर्थात्साध्यनिवृत्ति सिद्धतीति प्रकारान्तरप्रदर्शनाय पर तथाविधेऽपि। इत्थं न्यून वृत्तावुपाधित्वव्यवहारं निरस्य योगेनाधिकव्याप्ती तन्निरस्यति विषमेति प्रवृत्तिनिमित्तं यौगिक व्यभिचारोन्नाय कत्वमेवेत्येवकारेण योगार्थानादरं सूचयति उपाधित्वम् उपाधिपदप्रवृत्तिनिमित्तम् उपाधिता उपाधिपदवाच्यता

योगाद्दूरे तु लाघवात्साध्यव्यापकतामात्रे स्फूर्त्ति
भावः।

व्याप्तिस्वरूपं निरूप्य परमतनिराकरणपूर्वकं स्वम
तग्रहोपायमभिधातुं प्रथमं प्राभाकरमतमुपदर्शयति
मित्यादिना दर्शनानां प्रत्येकं वा हेतुत्व मित्यितानां
मिलनमपि स्वरूपतो व्यापारतो वा आद्ये दर्शनानां
द्वितीये आश्विति क्रमिकाणामपि स्थिराणामस्थिराणा
सहोत्पन्नानां मिलनमस्तीत्युभयमुपात्तम्। तृतीयमा
निराकुरुते न चेति व्यापकसाध्यसामानाधिकरण्यात्मिक
व्याप्तौ साध्यसामानाधिकरण्यांशस्य प्रथममेव गृहीत
गृहीतव्यापकत्वांशग्रहे सहचारदर्शनजन्यसंस्काराणां हे
वाच्यं तच्च न सम्भवति भिन्नविषयकत्वादित्याह समा
भ्रमस्त्वगृहीतभेदं ज्ञानद्वयं नतु वैशिष्ट्यावगाहीति भ
न तथा न व्याप्तिग्राहकं व्यभिचारदर्शनं व्यापार
सहकारीति व्यभिचारादर्शनसहचारदर्शनसहकृतस्तर्क
व्याप्तिग्राहकः भूयो दर्शनन्तु क्वचित्तर्कप्रवृत्तावुपयुज्यत
निर्गलितम्। नैयायिकमतमाशङ्क्य निराचष्टे नचैवमि
जातमात्रस्येति तथाच तन्मूलको व्याप्त्यन्तरग्राहकतव
तार इति भावः। तर्हीति न च व्याप्तिप्रत्यक्षं प्रति त
हेतुस्तत्तु स्मरणमिति न व्यभिचारावकाशः विनानुभवं स
यस्यायोगात् न च जन्मान्तरीणः स जन्मान्तरेऽपि पर

यौगतादयन्याग्रात् अनादित्विन च परिहार' परतो विचारयिष्यते । न चेति सामाभावात् तर्कस्य च हेतुत्वासिद्धे र्घट वान्वहीतव्याग्रहीतपुरोवर्त्ति ससर्गस्य वा प्रत्यासत्तिर्योऽसि प्रसङ्गसदा पुरोवर्त्ति नि तद्गृहो ऽनुपयतां नतु सामान्यलेनैव्याप नमिति साध्यव्यापकत्वं साध्यसमानाधिकरणाभावप्रतियोगित्व तद्ग्रहय साध्याधिकरणैकदेशावृत्तितया घटसमानस्य तादृशव्यक्त्यन्तरग्रहं विना न सम्भवति इति भूयो दर्शनापेक्षा तदाश्रित सत्कारणेबहिरिन्द्रियमात्रस्य सहकारीमनसोऽपि वा भाष्ये तथासार विनेति द्वितीये सापेति परिशेषात्साध्यसाधनसम्बन्धग्राहकातिरिक्तानपेक्षग्रहकात् उपाध्यभावग्राहकस्यापेक्षणीयत्वादसिद्धि मिरस्यति तथाहीति । उपाधिस्मरण इत्यादि ननु एवमसन्निकृष्टादि हेतुकानुमितिर्न स्यात् उपाधियोग्यानुपलम्भविरहादत आह तथपदारीति तथाच तद्व्यवहारस्य हेतुरेवानुमिति हेतु तत्रोपाध्यभावत्वेन ज्ञानम् उपाधिस्मरण इत्यादि तु तत्कारणप्रदर्शनपरम् अभावत्वञ्चेदमिह साक्षीति प्रतीतिसाक्षिक स्वरूपविशेषोऽतिरिक्त पदार्थोवेत्यन्यदेतत् । एव ञ्चोपाध्यभावत्वेन ज्ञानेऽधिकापेक्षा न वारयाम इति भाव' । व्याप्तिस्वरूपे संशयाभाव आपद्यते निरुपाधिसम्बन्धरूप व्याप्तिमिन सा भाष्ये इष्टापत्ति' द्वितीयमपि किमुपाधिस्मरणादिक विना तत्सम्बधाने सति वा सम्बन्धपक्षे भाष्ये

वारयामः यद्दि तत्तत्प्रकारादिनिवेशेन विशेषे न पर्य्यवस्येदिति दिक् व्याप्तिश्च धूमादिव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वादिकं तादृशसामानाधिकरण्यमात्रस्य रासभादिसाधारण्यात् अत्र च व्यापकत्वांशग्रहे व्यभिचाराग्रहः समानाधिकरणवृत्तित्वांशग्रहे च तद्विशेषणतया सामानाधिकरण्यस्य ग्रहो हेतुरिति वक्तव्यम् । साध्यसम्बन्धितावच्छेदकरूपवत्त्वलक्षणव्याप्तिग्रहे विशेषणतया सम्बन्धस्य ग्रहो हेतुरित्यपि केचित् । यत्तु विरुद्धे सहचारभ्रमेण व्यापकत्व भ्रमात्सामान्यत एव सहचारज्ञानं हेतुरिति तन्न असिद्धत्वात् विरुद्धेऽपि व्यापकत्वसामानाधिकरण्ययोग्रग्राहकसामग्रोक्रमयौगपद्याधीनं ग्रहणक्रमयौगपद्यं न तु मिथः कार्य्यकारणभाव इति । इदं पुनरवधेयं यथा विद्यमानमपि वह्नित्वे व्यवहितविप्रकृष्टरासभादिदेशनिष्ठाभावप्रतियोगितावच्छेदकत्वं न गृह्यते अभावदेशविप्रकर्षादिना ग्राहकाभावात् तथा धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य सत्त्वेऽप्यग्रहसम्भवात् । नानुपलब्धेः प्रतियोगिसत्त्वविरोधित्वादिलक्षणा योग्यतेति न तत्सामान्याभावो लौकिकप्रत्यक्षगम्यः परन्तु कथञ्चिद्विरोधस्फुरणादिवशाद्धूमत्वादौ गृहीतोधूमवन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावो वह्नित्वादावुपनयमर्य्यादया गृह्यते अतएवानुमानादिना व्यभिचारग्रहेऽपि न व्याप्तिधीः निर्णयात्मनि साधारणे वा दोषविशेषाजन्योपनीतभाने संशयादि-

साधारणस्य निययात्मनो वा विपरीतज्ञानमात्रस्यैव प्रति-
बन्धकत्वात् तथाच मार्द्रेन्धनप्रभववह्निशालित्वेन सन्दिग्धे देशान्तरवृत्तित्वसम्भावनापि स्यादिति
वगात्, पद्ममाया वज्ञाद्यभावघटितत्वाभावो धूमत्वाद्यव-
च्छेदेन गृह्यते नाघमादित्यपि वदन्ति । घृताश्चरासभादि
पदार्थसार्थस्यान्वयव्यतिरेकयोरन्वयव्यतिरेकौ धूमस्यापि
लभमानोऽवश्यमेतेषामन्यतम कारण धूमस्येत्यवधार्य म
न्दिग्धे किमेतानि सर्वाण्येव कारणानि कि वा कानिचित्तया
कानिचिन्नेति अत्र च यस्य व्यतिरेकेऽपि इतरेभ्यस्तथा
विधेभ्यो धूमोत्पत्तिमुपलभते तस्याहेतुत्वमेवावधारयति यथा
रासभादेर्यस्य व्यतिरेके तादृशापरमकलान्वयेऽपि धूमा
नुत्पत्तिं पश्यति तस्य कारणत्वमेव निश्चिनुते यथा वह्ने
मत्र चाकारणत्वसन्देहो विरोधितामासादयन्निवर्त्तते येन
तर्केण समस्त धूम इत्यादि । अनुसन्धेयतावश्यं कार्य्यकारण
भावग्रह तदधीनत्वाद्व्याप्तिग्रहे सामानाधिकरण्येनान्वय
व्यतिरेकग्रहात् जायमानस्य सर्वथैवहेतुहेतुमद्भाव ग्रहस्व
स्यैव वा व्याप्तिपरिच्छेदकत्वात् विपर्य्यये तत्कोटिमात्र
पर्य्यवसायिनश्च तर्कस्य तदभावकोटिकज्ञाननिवर्त्तकत्वम्
अन्यथा धूमो यदि वह्निमच्छून्यत्वस्यान्यतरो न स्यात् जन्योन
स्यादित्यादेरपि तथात्वापत्तेः तथा पर्य्यवसायिता च क्वचि
दिशेषतो व्याप्त्या सामान्यतोऽपि क्वचित्पक्षधर्म्मतामत्तात् तम्
समभवये चात्र पक्षसमवहितात्मन्यत्वेन पक्षो विशेष्य विशे

प्रणवत्वेनोपस्थिते विशिष्टाभाववुद्धेर्विशेष्याभावमात्रावलम्बित-त्वात् तथोपस्थितिविरोधि चावह्नेरित्यादि शङ्काद्वयमग्रे निर-सनीयम्। वस्तुतो वह्न्यजन्यमपि वह्निसमवहितजन्यं वह्न्य-समवहिताजन्यञ्च सम्भवतीति वह्निजन्यत्वपर्य्यवसित वह्नि-समवहितजन्यत्व वाच्यं तथा च घटादौ व्यभिचारवारणाय आपाद्यकोटिप्रतियोगिविशेषणार्थकं सत्यन्तम् अजन्ये जन्ये च नान्तरीयके व्यभिचारवारणाय जन्य इति तदर्थस्तु वह्न्य-समवधानकालीन वह्नितत्समवधानेतरयावत्कारणजन्यत्वं तथाविधयावत्कारणकत्वमिति यावत् तथाच वह्न्यसमव-हिताजन्यत्वे सति वह्न्यसमवधानकालीनवह्नितत्समवधाने-तरयावत्कारणको न स्यादिति पर्य्यवसितोऽर्थः। यत्तु नान्तरीयवह्निके व्यभिचारवारणाय आपादककोटावेव विशेषणं सत्यन्तार्थः स च वह्न्यघटितसामग्र्यजन्यत्वमिति तन्न प्राच्य तद्विरोधेः। आद्या द्वयी शङ्का इष्टापत्तिपर्य्यव-सायिनी तृतीया पुनरापादकाप्रसिद्धिपर्य्यवसायिनी अवह्नेः वह्निशून्यात् तदुपादानमिति कारणव्युत्पत्त्या तदीय-कार्य्यप्रयोजकताज्ञानपरम् तादृशान्वयव्यतिरेकानुविधान-बोधपरं वा अग्रेतनमपि स्तक्रियापदं तत्परमेव कृ-त्यादेः शङ्का प्रतिबन्धकत्वे मानाभावात् कारणताग्रहोत्तर-कालीनत्वाच्च। यद्यपि चैतावता धूमत्वावच्छिन्नं प्रति वह्नेर्जनकत्वं नायाति तृणारणिमणिन्यायेन वैकल्पिककार-

सतायामपि तथात्वसम्भवात् तथापि विशेषाणां कार्य्यकारण भावग्रहस्यैकैन तद्विरोधग्रहायामपनीतायां जायमान सामान्यव्यभिचारानिर्णयानुगतागुरुविशेषरूपान्तरानुपस्थितिलाघवप्रतिसन्धानादियशात्सामान्यत एव स परिच्छिनत्ति प्रामाणिकौ च तदैवान्वयव्यतिरेकौ फलबलेन लाघवज्ञानादिशून्याया एव सामान्यव्यभिचारशङ्काया प्रतिबन्धकत्व कल्पनात्। अपरे तु धूमत्वावच्छिन्नस्य वह्न्यजन्यत्वजन्यत्वविशिष्टस्य यथाश्रुतवह्न्यसमवहितावजन्यत्वस्य व्यतिरेक उपपादनीय तथोऽन्यथायेन तादृशवह्नियुक्तकारणकलापजन्यत्वग्रहेण तद्व्यतिरेकसन्यसशङ्कानिरासात् वह्निविरहेऽपि निरतिशयस्यैव तादृशसमूहस्य धूमजनकत्वसन्देहस्य च तथाविधात् धूमानुत्पादर्दर्शनेनैवायोगात् तादृशस्यैव क्वचिद्वह्नि क्वचिनेतरदासाद्य जनकत्वसम्भावनायाञ्च क्वचिद्धूमानुत्पादप्रयोजकत्वेनावधृतस्य वह्निविरहस्यैव तथाविधसमूहत्वे धूमानुत्पत्तिसामान्य प्रतिलाघवात्प्रयोजकत्वनिर्णयेनापनयासम्भवस्यैव सुग्रह वह्नेर्वह्निसमवहितस्योपादानम् अत्र च नियमव्यवच्छेदयस्य वह्न्यसमवहितानुपादानस्य प्रयोजकं तदजन्यत्वज्ञाने परम्परया वह्निसमवहितोपादानस्य वा प्रयोजके तत्र तात्पर्य्यम्। यत्सम्यग्व्यतिरेकानुविधायित्वज्ञानमेव विशेषदर्शनतया शङ्काप्रतिबन्धक तदेव तर्कघटक तदिदमुक्तं, यदि,मस्त्यौराग्वयव्यतिरेकं हेतुमितोसि तत्र यावृच्छिकस्य तदनुविधानस्य व्यभिचारित्वा-

न्नियतस्य चोक्ताभेदसम्पादकत्वादिति वदन्ति तच्चिन्त्यम्। केचित्तु कार्य्यकारणभावग्रहानन्तरं व्याप्तिग्रहाय व्यधिकरणस्य जनकत्वशङ्का निरासार्थमयं तर्कः तथा च धूमो यदि सामानाधिकरण्यातिरिक्तप्रत्यासत्त्या वक्न्यजन्यत्वे सति सामानाधिकरण्यप्रत्यासत्त्या वह्निजन्यो न स्यात् वह्निजन्यो न स्यात्। अप्रत्यासन्नस्याजनकत्वात् तादृशाजन्यत्वञ्च प्रत्यासत्त्यन्तरशालिवह्निसत्त्वेऽपि धूमानुत्पादादिना ग्राह्यमिति इदमेव च वाचोभङ्ग्या परे परिष्कुर्वन्ति धूमो यदि वक्न्यनधिकरणदेशानुत्पत्तिकत्वे सति वक्न्यधिकरणदेशोत्पत्तिको न स्यात् जन्यो न स्यात् तादृशानुत्पत्तिकत्वग्रहश्च धूमानुत्पत्तिं प्रति वह्निसम्बन्धाभावस्य प्रयोजकत्वे ग्राह्ये उपस्थितत्वान्नाघवाच्च तादृशसम्बन्धाभावस्यैव तथात्वावधारणादिति तच्चिन्त्यम्। मिश्रास्तु परं प्रति व्याप्तिग्रहोपाये प्रदर्श्यमाने व्यभिचारशङ्कानिरासहेतुत्वेनोपदर्शिते तर्के मूलशैथिल्यादिशङ्कोद्भावकं तं प्रति व्याघातोऽयमुपदर्श्यते नैवं शङ्किष्ठाः तथा सति तत्तत्कार्य्यार्थितया तत्र तत्र कारणे तवैव प्रवृत्तयो व्याहन्येरन् यदाह न हि सम्भवति स्वयं वक्न्यादिकमितीति प्राहुः। तच्चेति तत् व्यभिचारादर्शनं व्यभिचारज्ञानसामान्याभावः योग्यतादिसन्देहेऽपि शब्दादिना अर्थनिश्चयात् तत्तर्कस्वरूपमिति केचित्। ननु वस्तुतो व्याप्तिसत्त्वे तर्काभासात् प्रमाभ्रमयोरुत्पादानुत्पादाभ्यां व्यभिचार इत्यत आह विशेषदर्शनेति। तथा च यथा तस्य

योऽयतदभाववदिषयत्वे सत्यत्वासत्यत्वे तथा तर्कस्यापीति
मत च सत्यत्वादिमम्पादके धर्मिणो योग्यादिमत्त्वे योग्या-
दिमद्भूमिसन्निकर्षे वा तात्पर्य्यं लाघवात् तर्कस्य व्यभि
चारेणाहेतुताया व्ययमेव दर्शितत्वाच्च अथ विपरीतप्रा
मोत्तरप्रत्ययो तन्निवर्त्तकत्वेन विशेषदर्शनस्य हेतुत्व तथ
तर्कस्यापीति चेत् अस्तु तावदापाततस्तथा तथाप्यन्यत
तु प्रमाणाप्रमाणादिप्रयोजकादेव तत्र प्रामाण्याद्युपपत्तौ न
तस्यापि विशेषत कारणत्व गौरवात्। तस्मात् विशेषण
ज्ञानस्य विशिष्टज्ञानकारणत्वमते सर्वत्र विशेष्य सम्बन्धास
म्बन्धविशेषणज्ञानमेव प्रमाभ्रमप्रयोजकमिति यदस्ति तत
प्रमाणेति इदमनादिसिद्धत्वज्ञानस्य प्रयोजकत्वमभिप्रेत्य
परार्थाभिप्रायेण वा अनुमानत्वात् व्याप्तिपक्षधर्म्मताशक्ति-
मत्वात्। व्यभिचारग्रह इति हारेण हारिणो नान्यथा सिद्धि
रिति भाव। अनुमानमात्र इति अनिश्चितसाध्यपक्षके सर्वत्र
सम्भवितात् पक्षे साध्यनिर्णयेऽनुमानवैयर्थ्यात् उपाधित्वेन
व्यभिचारेण व्यभिचारोन्नायकत्वे मानुमानमात्रोच्छेदक
ताज्ञानमेव साध्यव्यापकताबुद्धि विरुद्धादिव्यावर्त्तकाय अपि
चेति। करवशेति। परमते न इद स्वमते तु वाय्वादौ स्पर्शा
दिना रूपादिसाधने शब्दातिरिक्तविशेषणप्रवेशेन वा तद्बो
ध्यम्। उक्तव्याप्तीति प्रतियोग्यसामानाधिकरण्यादिविशेषण
विरहेण लाघवात्। अथ संयोगाभावस्येव संयोगवद्वृत्त्यापि
हेतुसामानाधिकरण्यस्येऽप्यनुमिति दर्शनात्तत्रापि तद्वत्त

निवेशनीयमिति क्व लाघवम् । नन्वेवं प्रतियोग्यसामानाधिकरण्याद्यनुपस्थितौ हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वग्रहेऽप्यनुमितिर्न स्यात् न च प्रतियोगिसमानाधिकरणत्वेनाज्ञायमाना यावन्तो हेतुसमानाधिकरणा अभावास्तत्प्रतियोगितावच्छेदकत्वाभावग्रहो हेतुरिति वाच्यं तादृशाभावग्रहो हि न हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वेन रूपेण प्रतियोगिसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकत्वग्रहे तदसम्भवात् नापि प्रातिस्विकरूपेण जन्मसहस्रेणाप्यसम्भवात् नापि रूपान्तरेण वह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य धूमसामानाधिकरण्यभ्रमेऽपि वह्नित्वानवच्छिन्नप्रतियोगिताकधूमसमानाधिकरणनिखिलाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादपि अनुमितिप्रसङ्गात् न च हेतुसमानाधिकरणत्वेन ज्ञायमाना इति वाच्यं वह्नित्वे धूमाधिकरणरासभाद्यभावप्रतियोगितावच्छेदकत्वभ्रमेऽप्युक्तरूपेण तथाग्रहसम्भवात् धूमाधिकरणान्तरानुपस्थितौ वह्नित्वे रासभत्वादौ च तादृशप्रमोत्पादेऽपि रासभादेरिव वह्नेरप्यननुमानाच्च । एवं वह्नित्वावच्छेदेन शुक्लत्वाभावभ्रमदशायां शुक्लप्रतियोगिका वह्नीतरप्रतियोगिताकाश्च ये धूमसमानाधिकरणाभावास्तत् प्रतियोगितानवच्छेदकं वह्नित्वमिति ग्रहेऽपि । मैवं प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहविरोधिग्रहविषयत्वेन तेषां तादृशावच्छेदकत्वग्रहविरोधित्वेन

तद्धीनां चानुगमात् विरुणद्धि च सामान्याभावबोधोऽपि सामान्यघटितविशेषवत्तावुद्धिं सत्यां हि घटो नास्तीति बुद्धौ श्यामपि नीलो घटोऽस्तीति बोधानुदयात् तत्कथ्रं नैतोऽन्यदिगिष्टप्रतियोगिमत्तावुद्धिं प्रति तदवच्छिन्नप्रति योगिताकाभावबुद्धेर्विरोधित्वात् अवगाहते च नीलघटवत्ता बुद्धिरपि घटत्वविशिष्टतद्वत्तां अतएवावच्छेदकतत्त्वयोरन्यो ऽन्यात्यन्ताभावयोरुपलक्षणत्वं स्याभावे च वक्ष्यमाणरीति रिहाप्यनुसन्धेया यदि च साध्यतावच्छेदकस्याभावप्रतियो-गितानवच्छेदकत्वादिग्रहायानुमितिस्तदा तादृशावच्छेदक त्वग्रहाविरोधित्वेन विशेषणीयम् अन्योऽन्याभावस्याव्याप्यवृ-त्तितापक्षे तु सुतरां विशेषणदानमिति सत्यं तथाप्यन्योऽन्या भावे प्रतियोग्यवृत्तित्वस्यैव विशेषणत्वं न वा प्रतियोगिताव च्छेदकसम्बन्धभेदानुधावनमतो लाघवमिति यथाश्रुतयन्थानु रोधिनः । अपरे त्वन्योऽन्यात्यन्ताभावगर्भव्याप्त्योरेकतरा वच्छेऽप्यन्यतरज्ञानादनुमितेरानुभविकत्वात्तदुभयज्ञानमेव हेतु रिन्द्रियसंयोगादिवत् विशिष्यैव कार्यकारणभावात्र व्यभि चारः । यत्तु यद्रूपावच्छिन्नप्रतियोगिताकत्वेनोपस्थितोऽभावो धर्मिणि विशेष्यतया तद्वत्तावुद्धिं विरुणद्धि तद्रूपावच्छिन्न प्रतियोगिताकाभावसामानाधिकरण्यावगाहिनो ग्रहस्य वि रोधित्वं व्याप्तिबुद्धयोऽनुगमनीया प्रतिबध्नीतय साध्यवद-न्यत्यन्तान्योऽन्याभावयद्वौ साध्यवत्तावुद्धिं केवलान्वयिस्थले च भ्रमरूपस्यैव तद्ग्रहस्य कथञ्चित् प्रसिद्धिरिति तच्चिन्त्यम्

साध्यतावच्छेदके साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वावगाही साध्यतावच्छेदकावच्छिन्नसाध्यवत्त्वे च साधनसमानाधिकरणान्योऽन्याभावप्रतियोगितावच्छेदकत्वावगाही यो ग्रहस्तद्विरोधित्वं साध्याभाववद्वृत्तित्वसाध्यवदन्यवृत्तित्वोभयावगाहिग्रहविरोधित्वादिकं वानुगमकं वाच्यं प्रसिद्धिः पूर्ववत् अधिकं हेत्वाभासे वक्ष्यमाणरीत्या बोध्यं ग्रन्थस्तूपलक्षणपरोनौपाधिकत्वमात्रव्यवच्छेदाय यद्वक्ष्यति अनौपाधिकत्वन्तु तल्लक्षणमितीति वदन्ति। व्यभिचाराज्ञानस्य व्याप्तिधीहेतुत्वात् व्याप्तिग्रहप्रतिबन्धकग्रहविषयत्वेन व्यभिचारस्याभासत्वम् सोपाधित्वज्ञानन्तु न साक्षाद्व्याप्तिधीविरोधि विरोध्यविषयत्वात् किन्तु व्यभिचारधीद्वारा वक्ष्यते चानुमितेस्तत्कारणज्ञानस्य साक्षाद्विरोधिन एवाभासत्व निरुपाधित्वस्य ज्ञानन्तु न व्याप्तिधीहेतुः मानाभावात् तथात्वेऽप्युपाधेराभासत्वायोगाच्चेति ।

इदं पुनरिहावधेयम् यदन्योऽन्याभावस्याव्याप्यवृत्तित्वे प्रतियोग्यवृत्तित्वविशेषिततद्घटितलक्षणस्य संयोगादिसाध्यकव्यभिचारिण्यतिव्याप्तिः संयोगान्योऽन्याभावस्य केवलान्वयित्वात् । अथ व्याप्यवृत्तिसाध्यके स्वव्यापकसाध्यसामानाधिकरण्यमेव व्याप्तिः अव्याप्यवृत्तिसंयोगादिसाध्यके तु स्वव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकात्यन्ताभावेन तादृशरूपविशिष्टावच्छिन्नप्रतियोगिताकान्योऽन्याभावेन वा समस्तसामानाधिकरण्यमिति चेत् स्मृतिसंस्कारजन्यज्ञान-

विषयत्वादिसैवमाव्यपिसाध्यकेषु का गति । अथ स्वाधिकरण यत्किञ्चिद्व्यक्तिवृत्तिधर्मानवच्छिन्नप्रतियोगिताकान्योऽन्याभावप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वं यद्धर्मावच्छिन्नयत्किञ्चिदधिकरणवृत्तिधर्मानवच्छिन्नप्रतियोगिताकान्योऽन्याभावप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वे सति तद्धर्मविशिष्टत्वं वा नेति चेत् अत किं यथा कथञ्चित्सम्बन्धेन तदधिकरणवृत्तित्वं विवक्षितं साध्यतावच्छेदकसम्बन्धेन वा आद्ये गुणः स्पन्दत्वादित्यत्राव्याप्तिः गुणस्य स्वरूपसम्बन्धेन स्पन्दवृत्तितया तद्वृत्त्या स्पन्दनिष्ठताहृगान्योऽन्याभावप्रतियोगितानवच्छेदकत्वात् । द्वितीये समवायेन जातिसाध्यत्वे मेयत्वादावतिव्याप्तिः जातिमन्मेयव्यक्तिनिष्ठतादृशान्योऽन्याभावप्रतियोगितायाः जातिमत्त्वेनावच्छेदाज्जातिशून्यमेयव्यक्तौ समवायेन वर्त्तमानत्वाप्रसिद्धत्वात् । एतेन पक्षो व्याख्यातः । एवं तथात्वेऽत्यन्ताभावगर्भमपि दुर्वचं तथाहि प्रतियोग्यनधिकरणीभूतहेत्वधिकरणनिष्ठात्यन्ताभावेत्यादिगर्भमव्यापकमेव संयोगादिसाध्यकद्रव्यत्वादौ स्वाधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्ति प्रतियोगिकात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसमानाधिकरणहेतुत्वमित्यत्रापि पूर्ववत् गुणः स्पन्दत्वात् जातिमान्मेयत्वादित्यत्रादिव्याप्तिः एवं स्वप्रतियोगिनिष्ठाधेयत्वानिरूपकहेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसमानाधिकरणहेतुत्वमित्यत्रापि सम्पत्ति

तायनुरोधात्सामान्यज्ञानं प्रत्यासत्तिः अपेक्षणीयश्च तदि-न्द्रियकरणकतद्धर्म्मवत्त्वबोधसामाग्रयन्तरम् अतएवान्धतमसे सौदामिनीसम्पातजनितेऽपि द्रव्यप्रत्यक्षे चरमं न चाक्षुषो निखिलद्रव्यसाक्षात्कारसन्तान इति तु नव्याः। इयञ्च धर्म-विषयकं ज्ञानं धर्म्मिणां प्रत्यासत्तिरितरा तु यद्विषयकं ज्ञानं तस्य अतएव सुरभिचन्दनमित्यादौ सौरभत्वादेरपि भानमिति। ततः स्मृता सेति धूमसमानाधिकरणात्यन्ता-भावाप्रतियोगिवह्निसमानाधिकरणवृत्तिधूमत्वं वह्निमदन्या-वृत्तित्वं वह्निसम्बन्धितावच्छेदकरूपवत्त्वं वा व्याप्तिः एकैव च सा सर्वधूमसाधारणीति भावः। व्याप्तिनानात्वे तु पर्व-तीयवह्नेरसन्निकर्षे तत्सामानाधिकरण्यग्रहायोगः अन्यदीय-वह्निसामानाधिकरण्यस्य तत्र भानाङ्गीकारे भ्रमत्वापत्ति-रिति द्रष्टव्यम्। गवादिपदेष्वपीति शक्त्यनुभवशक्यस्मरणे हेतु हेतुमान् वाक्यार्थबोधः। नचैवं जातिशक्तिवादविरोधः जातौ व्यक्तौ च शक्तिः परन्तु जातिविषयत्वेनैव ज्ञाता शक्ति-र्व्यक्तिं स्मारयति अनुभावयति चेति तदर्थादिति वक्ष्यमा-णत्वात्। अतद्गुणसंविज्ञानबहुव्रीहिणापश्वादिलिङ्गादिपदा-भिप्रायेण परनीत्या वेत्यपि कश्चित्। विशेषणज्ञानसाध्येति न च पक्षतावच्छेदकज्ञानजन्यतया सिद्धसाधनं यद्यद्विशिष्ट ज्ञानं तत्तद्धीसाध्यमिति सामान्यव्याप्त्यादरात् अभावत्व प्रतियोगित्वयोरप्यनुपस्थितयोरप्रकारत्वात्। वह्निविशिष्ट ज्ञानत्वेन तद्वह्निविशिष्टज्ञानत्वेन वा तज्ज्ञानजन्यत्वसाध

नाशा विशिष्टवैशिष्ट्येत्याद्यभ्युपगमवाद' वस्तुतो विशेषण-तावच्छेदकादीनां युगपदिन्द्रिय सन्निकर्षात्साद्दग्यप्रत्यक्षम् अनुमित्यादेस्तु तादृप्येण व्याप्त्यादिग्रहात् अतएवानेकव्य क्तिकद्रव्यादिविशेषणतावच्छेदकमानुमित्या तद्भानार्थं न सामान्यलक्षणादर । अस्तु वा दण्डीत्यादि प्रत्यये दण्ड त्वादिना दण्डसयोगवानित्यादौ च दण्डसयोगत्वादिना यत् किञ्चिद्व्यक्तिज्ञान कारणम् । दृष्टान्ताभावादिति विशेषण ज्ञानत्वेन हेतुत्वस्य विशिष्यज्ञानादेरपि कारणत्वापत्त्या मानाभावेन च निरस्तत्वादिति एतेनास्तु विशेष्यज्ञानमपि कारणं सन्यतो निर्विकल्पमपि सामान्यलक्षणया सर्वज्ञत्वा-पत्त्या तत्रास्तद्लमकत्वे-ुतत एव बाधकात्र तत्कारणमिति निरस्तम् । प्रसिद्धधूम इत्यादि धर्मिज्ञानस्य संशयहेतुत्वा नङ्गीकारेऽपि संशय एव धर्मिभानार्थं सा स्वीकार्या धर्मि तावच्छेदकप्रकारकज्ञानस्य प्रत्यासत्तित्वाभ्युपगमेत्वविवा दात् तद्धर्मप्रकारकज्ञानस्य तद्धर्माश्रयप्रत्यासत्तित्वोपग मात् । अत वह्नि प्रसिद्धधूमे धूमत्वेन व्याप्तिज्ञान एत द्धूमत्वेन वा आद्ये संशयोऽसिद्ध' द्वितीये धूमत्वावच्छेदेन व्याप्तिग्रहस्यैव तद्विरोधितया संशयोनानुपपन्न कथमन्यथा पृथिव्यादिरूपे वायुत्वाभावव्याप्यतानिर्णयेऽपि रूपं वायुत्वा भावव्यभिचारि नवेत्यादिसंशय, नचातिरिक्तसम्भावनया तथा विशेषतत्वोपस्थितानामतिरिक्तानां विशेषद्दर्शनात्तेषा तथा अतिरिक्तान्तरोपस्थितये अवश्य सा स्वीकरणीयेति

वाच्यं यतो रूपेषु नातिरिक्तत्वसम्भावना तेषु विशेषदर्शनात् नाप्यतिरिक्ते रूपत्वसम्भावना रूपान्यन्नरूपं द्रव्यादयो- रसादयश्च न रूपं प्रसिद्धरूपभिन्नं यद्रूपभिन्नं द्रव्यं रसादि वा तत्सर्वं न रूपं रूपत्वाभाववच्चेत्यादिविशेषदर्शनेन तस्या अप्ययोगात् 'तदानीञ्चोक्तसंशयस्य सर्वजनानुभवसिद्धत्वात् अतिरिक्तसम्भावनाया गौरवेणाप्रयोजकत्वाच्च तस्मात्तत्रैव धूमे रूपे वा धूमत्वेन रूपत्वाद्यवच्छेदेन व्याप्तेरग्रहाद्- व्यभिचारसंशयो नायुक्तः। यत्तु सामान्याभावभानार्थं सा स्वीकार्य्या तां विना सकल तत्प्रतियोगिज्ञानासम्भवादिति तन्न नह्यभावस्य ज्ञानमात्रे लौकिकप्रत्यक्षे वा प्रतियोगि- ज्ञानं कारणं तत्र सामान्यलक्षणया दूरत्वादिना च भाने व्यभिचाराभानाभावाच्च अतएवेदन्त्वादिनोपस्थिते तमसि भावत्वाभावत्वसंशयः तेजोऽभावत्वेनोपस्थितेतदयोगात् प्र- तियोगिविशेषिततज्ज्ञानन्तु विशिष्टवैशिष्ट्यबोधमर्य्यादां नातिशेते सकलप्रतियोगिविषयत्वन्तु तस्या सिद्धं प्रति- योगिज्ञानस्य हेतुत्वेऽपि प्रतियोगितावच्छेदकविशिष्ट यत्- किञ्चित् प्रतियोगिज्ञानादेव तत्सम्भवात् यावत्प्रतियोगि- ज्ञानत्वेन गौरवेण हेतुत्वात् न च तदभाववुद्धौ तज्ज्ञान- हेतुत्वात् यावत् प्रतियोगिज्ञानस्य हेतुत्वमर्थायातं माना- भावात् ध्वंसप्रागभावात्यन्ताभावाश्च प्रतियोग्यादित्रितय- प्रतियोगिकाः द्वयाग्रहेऽप्येकग्रहादेव गृह्यन्त इत्यभ्युप- गमाच्च अन्धकारस्तु तेजो विशेषसामान्याभावो नाभावसमु-

दाय यावत्तद्भावानामिकवाममभवाग् अनवुगमाद्धेरया तेजोविशेषत्वादिज्ञानस्य तेज सामग्र्याश्च विरहेऽपि तेजो विशेषात्यन्ताभावमागभावानां प्रत्यक्षानभ्युपगमात प्राग भावप्रत्ययोऽपि च प्रतियोगिएत्तिघटत्वादिमकारकज्ञाम माध्यो न प्रतियोगिज्ञानमपेक्षते। अथ घटो भविष्यतीति प्रत्यक्ष प्रतियोगिविशेषितं प्रागभावमवगाहते न च प्राचो *नास्तप्रतियोगिमत्तप्रतियोगित्वावगाहने च भ्रमत्व* मघा नागते घटे प्रत्यासत्त्यसत्त्वमस्ति अत सामान्यप्रत्यासत्त्या घटत्वेनानुभूतं स्मृतञ्च त तदागमयते। न च चरमकारण रूपसामग्र्यधन्त्र प्रागभावो साध्य अन्यदा तदप्रत्ययात्तस्या स्वरूपसत्या स्वरूपेण वा ज्ञातायास्तथात्वेऽतिप्रसङ्गात् व्याप्यत्वेन गृहीतायास्तथात्व साध्य तथा च तर्केणुक्ता प्रागभावस्यानुमितिरेव तावत्कालं प्रागभावस्यासत्त्वेन प्रत्य क्षायोगाच्चेति साध्यं यादृगकारणकलापानन्तरं कार्य्योत्पादो दृष्टस्तादृगुदेरेव व्यञ्जकत्वाभ्युपगमात् अनुयोगिताविशे षादिरूपप्रागभावत्वादे क्वचिद्‌प्रतीतौ तादृग्योगानुमाना *सम्भवाच्चेति* चेत् *भविष्यत्त्व हि न वर्त्तमानप्रागभावप्रति* योगित्व ध्वंसाभावेनापि भविष्यतीति प्रत्ययप्रसङ्गात् किन्तू त्पत्स्यते भविष्यतीत्यादे समानार्थकत्वाद्वर्त्तमानप्रागभाव प्रतियोग्युत्पत्तिकत्व वर्त्तमानकालोत्तरकालोत्पत्तिकत्व वा तत्त्व नचेदमध्यक्षम् उत्पत्तेरतीन्द्रियत्वात् इदानी घटो भविष्यतीत्यादौ च तादृशोत्पत्तेर्देशविशेष कालविशेष

स्वाधिकरणत्वेन प्रतीयते न तु प्रागभावस्योत्पत्तिमतो वा अतएव कपालनाशजन्यघटनाशस्य घटाद्यात्मकतत्प्रागभाववत्यपि तत्र कपाले नेह घटध्वंसो भविष्यतीति बुद्धिः न वा भवने श्वः समुत्पद्य प्राङ्गणे परश्वो गमिष्यति मैत्रे प्राङ्गणे परश्वो भविष्यतीति धीः। अत्र च धातुनोत्पत्तिः प्रत्याय्यते प्रत्ययेन च धात्वर्थनिष्ठं तादृशप्रतियोगित्वं तादृशकालीनत्वं वा नङ्क्ष्यति नश्यति नष्ट इत्यादौ च प्रत्ययेन यथायथमनागता वर्त्तमानातीता चोत्पत्तिः तस्यामेव च कालविशेषादिर्विशेषणत्वेनान्वेति एतेन श्वोभाविनाशके परश्वो नङ्क्ष्यतीति नष्टे च नश्यतीति च व्यवहारः स्यात् न स्याच्च नाशस्य विद्यमानत्वान्नष्ट इत्यादिव्यवहारः। न च तत्रातीतकालसम्बन्धित्वं वर्त्तमानत्वं वा निष्ठादेरर्थः चिरविनष्टेऽपि पूर्वेद्युर्नष्टोऽधुना वेतिव्यवहारप्रसङ्गादिति परास्तम्। कर्त्तरि विहितेनाख्यातेन क्तेन वा यथायथमाश्रयत्वप्रतियोगित्वलक्षणं कर्तृत्वं आश्रयप्रतियोगिरूपश्च कर्त्ताभिधीयते। कार्य्यानुत्पाददशायाञ्चाभावधीः सामयिकात्यन्ताभावमवगाहते न च प्रतियोगिसमवायिनि समयावच्छेदेनात्यन्ताभाववृत्तौ मानाभावः भाविनि नष्टे वा घटे इह कपाले घटो नास्तीति प्रत्ययात् नह्ययं घटप्रतियोगिकमभावमात्रमवगाहते यत्किञ्चिद्घटवत्यपि तादृशप्रत्ययप्रसङ्गात् परन्तु घटत्वावच्छिन्नप्रतियोगिताकं न च ध्वंसप्रागभावौ तथा सम्भवतो वा न तत्र कपाले ततः पूर्वं परतश्च बहूनां घटानां

मदात्वादुत्पत्स्यमानमनात। यदैव कपालादी क्व घटध्वंसा दिरन्यथाबुद्धि प्रागभावस्य ध्वंसाद्यविरोधित्वादिति चेन् न तदधिकरणक्षणपादतिरिक्तानैवानुगताद्भावादा इहेदानीं घटप्रागभाव इति च प्रत्ययो न लौकिकानाम् यदैवं जातो घट इत्यादिवत्प्रत्ययो घटध्वंस इत्यादिविलक्षणप्रत्यय बलेन प्रागोऽतिरिच्यतां न तु प्रागभाव पूर्वत्वतत्पूर्वत्वादि व्यवहारयोगीत कालत्वमितदुत्पत्तिकालीनध्वंस प्रतियोगि-कालवृत्तित्वादिविषयक एवास्तु दुःखाद्यस्याभावस्य स्वमि न्नतरकालानप्रसि इष्टसमाधनस्य सं वा प्रवृत्तिरस्तु मानाभावादिह हि प्रयोजनमुद्दिश्य पुमांस प्रवर्तन्ते न तु प्रहत्त्येव तत्सिद्धिः उत्पन्नस्य पुनरुत्पा दप्रसङ्ग प्रागभावकार्यादि प्रतिबन्धकत्वेनापि निरसनीय तदुत्पत्तिश्च प्रागसमयसम्बन्धाङ्गीकुर्वतां मते स्वाधिकरणसमय ध्वंसानधिकरणसमयसम्बन्ध तदुक्तम् प्रथमत्व क्षणयोगस्य क्षणयोगो जनिर्मतेति क्षण समय तदङ्गीकारे तु क्वचिदपि यदीयसमयसम्बन्धे यत्समयवृत्तिध्वंसप्रतियोगित्व नास्ति तस्य तत्समयसम्बन्ध तदधिकरणक्षणावृत्तित्वव्याप्यस्ववृत्ति ध्वं सप्रतियोगिताकसमयवृत्तित्व वा क्षणत्वञ्च स्ववृत्तिध्वंस प्रतियोग्यनाधारत्व स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयाव द्ध्वंसविशिष्टसमयत्व स्ववृत्तियावद्ध्वंसविशिष्टसमयत्व स्ववृत्तिया वदभावविशिष्टसमयत्व स्वपूर्ववर्त्तियावत्पदार्थविशिष्टसम यत्व वा स्वपूर्वत्वञ्च स्वाधिकरणयावत्कालवृत्तिध्वंसप्रति

योगित्वं जन्यमात्रस्यैव कालोपाधित्वाददोषः यो यत्काल-वृत्तिध्वंसप्रतियोग्यवृत्तिस्तस्य तद्वृत्तित्वमुत्पत्तिरित्यपि केचिदिति चेत् नैवमपचीयते किञ्चिदस्माकमित्येकदेशिनो वर्णयन्ति । अथ पटस्य स्वानधिकरणेषु तन्तुषूत्पत्तिवारणाय सहस्रादीनां तत्तत्तन्तुत्वेन तत्तत्पटजनकत्वं वाच्यं तथा च लाघवादेक एव प्रागभावः कल्प्यते स च स्वाश्रय एव प्रति-योगिजनक इति नातिप्रसङ्गः इत्थञ्चानेकत्र प्रागभावसिद्धौ प्रागभावत्वेन प्रतियोगिजनकत्वाद्वितन्तुकेऽपि तत्सिद्धिरिति चेत् त्रिचतुरेष्वेव तन्तुषु उत्पन्नेषु संयुक्तेषु च तत्पटोत्पत्ति-प्रसङ्गः तावत्तन्तुवृत्तेः पटस्य कतिपयविरहे कथमुत्पत्तिरिति चेन्न कार्य्यानुत्पादस्य विना कारणविरहमनभ्युपगमात् सामग्रीसत्त्वेऽग्रिमक्षणे कार्य्यसत्त्वस्यावश्यकत्वाच्च तत्पट-प्रागभावाश्रययावत्तन्तुत्वेन तत्पटजनकत्वमिति चेत् अव-च्छेदककोटौ प्रागभावस्य प्रवेशाप्रवेशयोः कारणत्वे प्रमाणा-भावः परस्परासंयुक्तेषु कतिपयतन्तुषु तत्पटो जायेत न च तत्पटप्रागभावव्याप्ययावत्संयोगानामपि जनकत्वं कतिपय-तन्तुसंयोगेष्वतीतेषु अनागतेषु वा तत्पटानुत्पत्तिप्रसङ्गात् तत्पटप्रागभावमपेक्ष्य स एव पटो लघीयान् यावत्त्वानिरु-क्तेश्च । एतेन त्रित्वाद्युत्पत्तिर्व्याख्यातेति । परे पुनरिहेदानीं घटध्वंस इतिवदिहेदानीं घट प्रागभाव इति साधारणमेव लोकानां प्रत्यक्षं कल्पयन्तस्तद्बलेन प्रागभावं सामान्यलक्ष-णाच्च व्यवस्थापयन्तो वर्णयन्ति । अव्याप्यवृत्तेः कार्य्यस्य

द्वितीयक्षणे धारावाहिकस्थले च प्राथमिकनिर्विकल्पकस्य चतुर्थक्षणे उत्पत्तिवारणाय एकावच्छेदादिना कार्य्याभाव-स्योत्तरज्ञानाभावस्य च कारणत्वं वाच्यं तथा च लाघवात् प्रागभावस्य तत्त्वं कल्प्यते स्वभावाधीनत्वाच्च तत्कादैशिक स्वाश्रयदैशनियमः संयोगादीनामिति। अन्ये तु सर्वत्र तत्त-त्सामग्र्याविशेषाणां विशिष्य हेतुत्वोपगमेनैव तत्तद्व्यक्त्युत्पाद नियमसम्भवेऽपि युगपदुत्पन्नेषु नित्येषु च विलक्षणोत्पत्तिनि यामकत्वेन प्रागभावः कल्प्यत इत्याहुः। यत्तु ज्ञानेच्छा कृतीनां कार्य्यकारणभावग्रहो न तदुपस्थितिं विनेति न चेच्छाकृतिकाले ज्ञानेच्छासाक्षात्कारो योग्यविशेषगुणयोग पद्यस्यात्मनि निषेधात् अतो ज्ञानाद्यनन्तरसाक्षात्कार एव ज्ञानत्वादिनेच्छाजनकज्ञानादिक कृत्सातीत्यभ्युपेयमिति तन्न पौर्वापर्य्यापरिचये धर्म्मिस्वरूपग्रहेऽपि कारणत्वग्रहा सम्भवात् इच्छाकृत्युत्पादस्थले ज्ञानेच्छयोः साक्षात्काराज् ज्ञानेच्छासामान्यव्यतिरेकनियतेच्छाकृतिव्यतिरेकग्रहे मनसा कार्य्यकारणभावग्रहस्यावश्याभ्युपेयत्वात् कृत्युत्पादक्षणे ज्ञानेच्छयोः कृत्यनन्तरमिच्छाद्यो समूहालम्बने साक्षा त्कारस्य स्मरणेन च ज्ञानानुमानस्य च सम्भवात् विशेष्य कुत्रचिदवच्छेदेन युगपद्विशेषणविशेष्यज्ञोत्पादयदिच्छाकृतिकाले ज्ञानोत्पादस्याविरोधाच गोत्वे च गोनिष्ठात्यन्ताभावाप्रति योगित्वेन समवेतत्वेन च विशेषितमविशेषितं वा गवेतरा समवेतत्वं व्याप्यतावच्छेदकं ननु सकलगोवृत्तित्वविशे

षितं सामान्यलक्षणयापि गृहीतुमशक्यत्वात्। ननु समानविषयकत्वेनापीति स्यादेतत्समानप्रकारतामात्रस्य प्रयोजकत्वे क्वचिदेव रजतत्वप्रकारिकेच्छा क्वचिन्नेति नियमो न स्यात् तादृशप्रकाराश्रय एव तदुत्पादोपगमे कथमरजते रजतत्वप्रकारिकेच्छा अनुपस्थिते चासंसर्गाग्रहोऽपि न नियामकः वस्तुतोऽसंसर्गाग्रहमपेक्ष्य लघीयसस्तद्विषयतामात्रस्यैव नियामकत्वमुचितम् सामान्यतश्च तदिच्छायां व्यवस्थितहेतुभावस्य तद्विषयकज्ञानस्य तत्प्रकारकत्वमवच्छेदकं कल्प्यते लाघवात्। अस्तु वा समानप्रकारकत्वेन व्यवस्थिते कार्य्यकारणभावेऽतिप्रसङ्गभङ्गाय सामानाधिकरण्यमिव समानविषयत्वमपि प्रत्यासत्तिः। असंसर्गाग्रहादेः कारणतामपेक्ष्य समानविषयत्वस्यावच्छेदककोटिनिवेशोऽपि लघीयान् कारणयथार्थत्वायथार्थत्वाधीनस्तु कार्य्यस्य तथाविधो विशेषः एतेन रजतत्वप्रकारकेच्छायां तत्प्रकारकं ज्ञानं संवादिन्यां तस्यां दोषाभावसहितं विसंवादिन्यान्तूपस्थिता रजतगतभेदा ग्रहसहितं हेतुरिति परास्तम् त्वद्दिशापि च संवादिन्यामुपस्थितरजतभेदाग्रस्यैव हेतुत्वौचित्यात् दोषाणां रजतभेदग्रहप्रतिबन्धकानामभावमपेक्ष्य लघुत्वात्। अतोऽज्ञः सिद्ध एव सुखे सुखत्वेन रूपेणेच्छालाघवात् तत्प्रकारकेच्छायां तत्प्रकारावच्छेदेन सिद्धत्वज्ञानमेव हि विरोधि न च तत्प्रकृते तत्सत्त्वे इच्छोत्पत्तेस्त्वयाप्यनङ्गीकारात् कथमन्यथा चिरप्रोषितस्याज्ञातकान्तामरणस्य तत्कान्तावली-

साध्यत्वसाधनत्वे न सम्भवतः अतोऽभिमते इति यो यद्व्यापकत्वे सति यदव्यापकः स तत्रोपाधिरिति निर्गलितोऽर्थः व्यापकत्वाव्यापकत्वे एकरूपेण विवक्षिते नत्रूपाधिः साध्यव्यापकत्वं साध्यनिष्ठव्याप्तिनिरूपकत्वं सा च यावदुपाधिव्यापकव्यापकत्वरूपानौपाधिकत्वज्ञानादेव ग्राह्या उपाधिव्यापकयावदर्थान्तर्गतस्य चोपाधेः साध्यव्यापकत्वग्रहस्य साध्यनिष्ठ व्याप्तिग्रहादित्यन्योऽन्याश्रय इत्यत आह अनौपाधिकत्वेति व्यापकत्व व्याप्तिनिरूपकत्वं साचानौपाधिकत्वग्रहाद्ग्रहीतव्या तत्प्रविष्टव्याप्तिज्ञानमपि अनौपाधिकत्वान्तरग्रहादित्यनवस्थेत्यत आह अनौपाधिकत्वेति अन्योऽन्याश्रयपदमनवस्थापरमिति सम्प्रदायः। अव्याप्यवृत्तिनां व्यापकत्वमुपपादयितुमाह प्रतियोगित्वञ्चेति तदधिकरणानधिकरणत्वन्तदधिकरणाधिकरणत्वविरोधि यत् प्रतियोगित्वं प्रतियोगिव्यधिकरणाभावप्रतियोगित्व तदिह ग्रहीतव्यम् प्रतियोगिव्यधिकरणत्वेनाभावो विशेषणीय इति फलितोऽर्थः। साधनेति अनयोरसङ्करोऽग्रे दर्शयिष्यते। पक्षेतरेति पक्ष इतरो यस्मादिति बहुब्रीहिः भावप्रधानश्च निर्द्देशः। पक्षमितरयति व्यावर्त्तयतीति व्युत्पत्त्या तद्वृत्तिधर्म्मवचन इत्यपि कश्चित्। तादात्म्येन धर्म्मिण एव व्यापकत्वमिति तु परमार्थः अतएवाग्रे पर्वतेतरान्यत्वादिति साधु सङ्गच्छते इतरथा तु व्यापकाभावस्येव व्यापकवदन्योऽन्याभावस्यापि गमकत्वमाश्रित्य सङ्गमनीयम्। व्यतिरेक इति यद्यपि

व्यापकाभावमुद्रया गमकत्वे तथावैयर्थ्यं न दोषाय तथापि वास्तववैयर्थ्यशून्यत्वमेव विशेषण न्यायमिति भाव । यत्तु ययोर्व्यतिरेकव्याप्तिस्तयोरेव व्याप्यव्यतिव्यतिरेकिणोरन्वय-व्याप्तिरिति नियम इह तु व्यर्थविशेषणतया व्यतिरेकिव्याप्त्य भावादन्वयेऽपि न तथा अत साध्याव्यापकत्वान्नायमुपाधि रिति भाव इति तन्न पक्षेतुकामशरीरादेर्हेतुकत्वयोर्व्यभिचारात् एवमपि संयोगादौ केवलान्वयिनि च साध्ये पक्षेतराति-व्याप्तितादवस्थ्याच । वस्तुगत्येति यथा च पक्षे साध्यपति तदितरत्व साध्याव्यापकं तद्रहिते च बाधोन्नीतत्वादुपाधि रेवेति भाव । यद्विषयतया ज्ञानस्य प्रतिबन्धकत्व तदेव प्रकृते उपाधित्व वाच्य नान्यदनुपयुक्तत्वात् तथेदृक्त एप तदा तद्वत्तया पक्षेतरस्यापि ग्रहादनुमितिमात्रोच्छेद इत्यभिप्रायवानाह भवन्त्विति । उपाधिमात्रमिति सत्प्रति पक्षोन्नायकतया दूषकत्वमिति मते इतरथा तु पचाहस्ते र- च्छेदो बोध्य । विपक्षेति विपक्षव्यावर्त्तकधर्म्मावच्छिन्नविशि ष्टपक्षेतरत्ववारणाय निषेधद्वयगर्भता विपक्षाव्यावर्त्तकविशेष णानवच्छिन्नसाध्यव्यापकत्वमावना रापक्षत्वमालित्व तद्वि वक्षितमित्याशङ्क्य पक्षेतरत्वस्योपाधित्वमनङ्गीकुर्वतस्ताय मते नातिव्याप्तिरभिहिता वस्तुतो दूषकताप्रयोजकरूपवत्तयास्या नुपाधित्वाभ्युपगमस्तद्वारणाय च विशेषणोपादान द्वयमपि न युक्तमित्यभिप्रायवानाह तथापीति तावन्मात्रस्य साध्य व्यतिरेकोन्नायकत्वमसाध्यव्यापकतामात्रस्य दूषकत्व दोषो

न्नयनोपयोगित्वात् । जातित्वादिति । तदुत्तरस्येत्यादि । उपाधित्वाभावेऽपीति उपाधित्वानङ्गीकारेऽपीत्यर्थः । दूषकतावीजसत्त्वे तस्योपाधित्वं दूषकतावीजञ्च न व्यभिचारादेरुन्नायकत्वम् अपि तु सत्प्रतिपक्षस्य तच्च नास्तीत्यतो न स उपाधिरिति शङ्कते अथेति व्यभिचारोन्नायकतया व्यभिचाराद्युन्नायकतया अव्याप्यतया अव्याप्यत्वादिना अव्याप्यत्वमव्याप्यत्वादि । सत्प्रतिपक्षान्तरवदिति व्याप्तिपक्षधर्म्मतारूपबलसत्त्वे नैकेनापि वहूनां प्रतिरोधसम्भवात् बहुत्वस्याबलत्वात् यच्च प्रमाणतत्त्वबोधादौ वहुत्वमपि बलमुक्तं तन्न सत्प्रतिपक्षतायां किन्त्वेकत्राङ्गभङ्गप्रसङ्गे बहुषु तत्कल्पनागौरवमेकत्र च लाघवमिति तर्कोत्थापकतयेति नोपाधिः सत्प्रतिपक्षोत्थापकतया तत्र दूषकत्वसम्भव इति भावः एवं सत्प्रतिपक्षोन्नायकतया दूषकत्वे बाधस्यानिश्चयेऽसाधारण्यानिश्चये च वैयर्थ्यात् माभूत् सोऽप्युपाधिरित्यभिप्रायेण शङ्कते नन्विति । हेतुमतीति नचासङ्कीर्णबाधस्थले व्यभिचारः प्रतियोगिव्यधिकरणसाध्याभावस्यैव प्रकृते बाधत्वात् तदनभ्युपगमाद्वा । अतेजस्त्वं विनेति तत्समशीलं विना शुद्धसाध्यव्यापकस्योपाधेरभावादित्यर्थः तेन भास्वररूपशून्यत्वादेरूपवत्तावच्छिन्नसाध्यव्यापकगुरुत्वादेश्च सत्त्वेऽप्यदोषः नचैतद्व्यतिरेकोनासाधारणः पक्षे साध्यस्यासिद्धौ सपक्षाभावात् सिद्धौ तु तत्रैव सपक्षे वर्त्तमानत्वादिति वाच्यं पक्षमात्रवृत्तिरसाधारण इत्यभिप्रायात् जलादावुष्णत्वभ्रम-

ष्टाग्रां सद्यासमित्यपरे । योगोपाधि तेऽन्त्वापक्षदगाया मप्रतीतमाध्यतद्भावसहचारदूषकत्वगसाधारणमित्यन्ये । अ-साधारणं हि साध्यसहचारपक्षप्रतिबन्धेन व्याप्तिपक्षप्रतिबन्ध व्यतिरेकव्याप्त्यादरे तु साध्यतद्भावयोर्योगेऽपि तदवि शेषात् सत्प्रतिपक्षो दूषकताबीजम् । नचैवमयोव्यतिरे-किव्याप्त न द्वितीय सत्प्रतिपक्षे तदनयकागात् अत पक्षेतरेऽपि सत्प्रतिपक्षोन्नायकतयोपाधिरेवेत्याह व्यतिरेकिपक्षादिना । मन्वेवं प्रागुक्तरीत्या व्यभिचार उन्नायकत्वस्य सत्प्रतिपक्षेऽनुन्नायकीयत्वापत्त्या च सत् प्रतिपक्षोन्नायकत्वस्य दूषकतायामबीजत्वे उपाधिदूषण मेव न स्यात् बीजाभावात् अत आह तस्मादिति । तदुक्त मुपाधेव्य भिचारमद्देवेति भवतु वा पक्षेतरो नोपाधि उपादीयताच सद्यावृत्तये विपक्षाव्यावर्तकेत्यादिकं विशे षणं तथापि मध्यमते व्यापकमेव अपक्षो अन्याश्रयो वा सकर्तृका कार्यत्वादित्यादावनणुत्वादौ । ननु व्यभि चाराद्युन्नायकतामात्रेणोपाधित्वे व्यापकव्यभिचारित्वादा वतिप्रसङ्ग इत्यत आह तथेति तथा तेन रूपेण स्वव्यभि चारेण स्वव्यतिरेकेण वा दूषकतायां व्यभिचारस्य सत् प्रतिपक्षस्य चोन्नायकतायामतिप्रसङ्गभञ्जिकायां साध्य-व्याप्यत्वस्य व्यर्थत्वात् साधनाव्यापकधर्मस्योपाधित्वे साध्या व्ययव्यतिरेकोन्नायकाव्ययव्यतिरेकशालित्वरूपं साध्यप्र योजकत्वं नियामकम् अन्यथातिप्रसङ्गादित्याशङ्कते अथेति

अभवतोऽसतः भवत सतः। व्यर्थत्वादिति नचैवं पक्षेतर-त्वेऽतिप्रसङ्गः तत्रापि पक्षेतरसाध्यवत्त्वादावतिप्रसङ्गात्। विषमव्याप्तस्यानुपाधित्वे योगाभावं नियामकमाशङ्कते न-न्विति उप समीपवर्त्तिनि आदधाति स्वीयं धर्म्ममित्युपाधिः यद्धर्म्मबोधकशब्दसमभिव्याहारेण चोपाधिपदं प्रयुज्यते तद्ध-र्म्मसंक्रामकत्वं तद्बोधयति यथा स्फटिकलौहित्ये जवा-कुसुममुपाधिरित्यत्र लौहित्यसंक्रामकत्वं प्रयुज्यते च शास्त्रे व्याप्यत्वबोधकशब्दसमभिव्याहारेण तत् यथात्र साधने असा-वुपाधिरित्यतो व्याप्तिसंक्रामकत्वलाभः। यदभाव इति अस्ति तावदिह हेतावुपाधिर्नेह हेतावुपाधिरिति प्रतीति-र्व्यवहारश्च तावालम्ब्य चेदं लक्षणवाक्यं तत्र यदि साधने उपाधिव्यभिचाराव्यभिचारौ तदव्याप्यत्वव्याप्यत्वे वा यदि वा तेन सम्बन्धेन तद्वृत्त्यवृत्ती एव तदालम्बनमुभयथापि नेह क्षतिः यदभावशब्देनापि तथैव वक्तुं शक्यत्वात् तदभावस्य च व्यभिचारविरोधित्वं तत्सत्त्वेऽवश्यं व्यभिचार विरहस्तद्विर-हिणि धर्मे चावश्यं व्यभिचारकत्वं तत्सत्त्वेऽवश्यं व्यभिचार-विरहः व्यभिचारविरहिणि धर्मे चावश्यं तत्सत्त्वमिति वा ई-दृशश्च विरोधो न विषमव्यापकाभावस्य तत्सत्त्वेऽपि व्यापकएव व्यभिचारसत्त्वात् नापि विषमव्याप्याभावस्य साध्यएव तद्विर-हेऽपि व्यभिचाराभावात् तादृशधर्मस्य चोक्तसम्बन्धेनोक्तसम्-बन्धस्य वा यत्र वृत्तिस्तत्रायमुपाधिः स एव च सोपाधिः अ-तएव तदभावलक्षणमनौपाधिकत्वं व्याप्तिरिति गीयते विरो-

अघटकत्वमद्वये च एकैकस्य व्यभिचारोरघटकता दूषकता वा न स्यादित्युभयोपादानमिति सर्वं सुस्थम्। यदि च समव्याप्ताकाशोभयसाधवृत्तिधर्मेणाकाशस्योपाधित्वं वारणीयं तदा यत्पदं वृत्तिमत्परं बोध्यम् अत्र च व्यभिचारस्य घटकत्वेऽपि प्रमेयत्वपद व्यतिरेकिधर्मोपन्यनकम्। अथैतादृशो पाध्यभावस्य व्याप्तिमत्त्वात् यत्र व्यभिचारिणि नैतत्सम्भव स्तत्रातिव्याप्तिः तस्यात्यन्तममत्त्वेनाभावानिरूपणे तु तत्रत्य मद्वैतावव्याप्तिरत आह व्यभिचारे चेति यस्य यद्यभिचा-रस्य यदव्याप्यत्वस्य वा अभाव साध्यव्यापके व्यभिचारवि रोधी स साधनाव्यापक उपाधिरित्यपि वदन्ति। यद्यभि चारिस्वाभाव साधने साध्यव्यभिचाराभावापादकः स साध्य व्यापक उपाधिरित्यपि केचित्। न तु यद्यतिरेक इति यद्यतिरेकेऽनुमितिप्रयोजकं रूप व्याप्त्याद्यन्यतम अपत्येव यथा अभिसिद्धिव्यतिरेके सिद्धिरित्यर्थ । विरुद्धत्वादेरिति विपक्षमात्रगामित्वमपक्षविपक्षगामित्व लक्षणविरोध व्यभिचा रयोरेकैकविरहेऽपि व्याप्तेरनियमादित्यर्थ यत्र पक्षे हेतु मति च साध्य हेतुश्च पक्षाद्धसिद्धचैक पक्षाद्धसिद्धेर्हेतु समानाधिकरण अपरश्च पक्षमिष्ठ साध्यवति हेत्वसमा नाधिकरण हेत्वसमानाधिकरण एव वा उपाधिस्तत्र साधन पक्षधर्मावच्छिन्नसाध्यव्यापकयोरसङ्करो बोध्य यथा घट-प्रत्यक्षो नित्यद्रव्यत्वा द्विभुत्वादित्यादौ साधनावच्छिन्न साध्यव्यापकमाकत्व पक्षधर्मावच्छिन्न साध्यव्यापकमुद्भूत

रूपवत्त्वं प्रत्यक्षस्पर्शाश्रयत्वं वा मिथोऽसङ्कीर्णमुपाधिः । अश्रावणत्वेति । घटो मेयो द्रव्यत्वादित्यादौ गन्धवत्त्वाद्यवच्छिन्नसाध्यव्यापकपृथिवीत्वादावतिव्याप्तिर्द्रष्टव्या । नवानेन रूपेण ज्ञातस्य दूषकत्वमित्याह आर्द्रेन्धनेति । पक्षधर्म्मेति विरुद्धस्थलीयोपाध्यव्याप्तिरपि द्रष्टव्या । साधनावच्छिन्नेति स्वावच्छिन्नेत्यर्थात्साधनवतीति विशेषणाद्वा न व्यभिचारः । ननु शुद्धसाध्याव्यापकस्थल एवासिद्धिशङ्कानिरासायावच्छेदकांशोऽपि निवेशनीयोऽखण्डाभावस्य घटकतया च न वैयर्थ्यं येन रूपेणोपाधिता विशेषणवति तद्रूपावच्छिन्न व्यभिचारस्यैव वा हेतुत्वं शुद्धसाध्यव्यापकस्थले तु साध्यव्यापकव्यभिचारो व्यापकतावच्छेदकार्द्रेन्धनत्वाद्यवच्छिन्नव्यभिचारो वा हेतुरूपन्यसनीयः प्रायशस्तद्धर्म्मवति तद्धर्म्मविशिष्टसाध्यव्यापकव्यभिचारित्वस्य हेतुत्वेऽपि न वैयर्थ्यं अखण्डाभावस्यातिरिक्तत्वात् वस्तुतस्तूपाधिना असाधकत्वासाधनेऽपि न क्षतिः उद्भावितयावद्दोषैरेव तत्साधनीयमिति नियमाभावात् तदुन्नीतव्यभिचारेण तत्साधनसम्भवात् । सन्दिग्धोपाधिसमशीलः सन्दिग्धो व्यभिचार इत्यत आह किञ्चेति । केवलेति तथा च केवलस्यैव साध्यस्य व्यभिचारो व्यतिरेको वा जिज्ञासितो विरोधित्वात् न तु विशिष्टस्याविरोधित्वादिति भावः उद्भाव्यो विशेषणाव्यभिचारित्वे सति विशिष्टसाध्यव्यभिचारेण साधनीयः तत्र विशिष्टसाध्यव्यभिचारेऽसिद्धावुद्भावितायां तत्सिद्धये उपाधिरुद्भाव्य इति । तर्हीति प्रकृतानु-

मिति विरोधिगुरुसाध्यव्यभिचारा साधकत्वादिति भाव । अथ वक्ष्यमाणरीत्यावच्छिन्नसाध्यव्यापकेनाणुपाधिना आरू न्येव साध्यव्यभिचार साधनीय इत्यत आह किञ्चेति पच धर्मावच्छिन्ने त्यादिकमुपाधिमात्रव्यभिचारोपलक्षक न साधा न्ये नोपाधिव्याप्यादिविरहेणाभेदुत्वात् । पर्य्यवसितेति अत लक्ष्यतानियामक दूषकतावीज सत्प्रतिपक्षोन्नायकत्व व्यभि चारोन्नायकत्वस्य तन्ने साध्यवत्पचाहसौ व्यभिचारोन्नायक उन्नासे वक्ष्यमाणक्रतकत्वोपाधेर्दूषकत्वापत्तेरा न हि तद्य भिचारेण हेतौ गुरुसाध्यव्यभिचार शक्योन्नयनो बाधानव तारदशायां ताहशव्यभिचारासिद्धे न च पर्य्यवसितसाध्य व्यभिचार साध्यव्याप्यताबोधविरोधीति नचैवमपि कथ तत्र सहेतावुपाधिसम्भवो मोमांसकमतेन तदभिधानात् शब्द शब्दयोभावप्रधानत्वाद्वा पचतावच्छेदकादेरुपाधितावारणाय पचाहत्तित्वे सतीति विशेषणीयम् । यदि चेति एतच्च स्वसम्व क्रतकत्वसाधनदशायां बोध्यम् अनित्यत्वसाधनोपयोगितया तु क्रतकत्वसाधने द्वयोरपि सन्दिग्धत्वे नैकातरव्यतिरेकस्यान्य तरव्यतिरेकासाधकत्वात् । एव होत्यादि असमवेतत्वेन द्रव्यासमवेतत्वेन वा भर्थ्यान्तरवारणाय सावयवत्व इति साध्ये द्रव्यपद नित्यद्रव्यवृत्तिताया स्फुटतरसिद्धर्थं द्रव्य समवेतेऽनित्यद्रव्यासमवेतत्वस्य नित्यद्रव्यसमवेतत्वमादाय पर्य्यवसानात् हेतौ च जन्यपद परमाणुनित्यत्वासिद्धिदशा यामाकाशादौ व्याप्तिग्रहाय विशिष्टाभावस्यातिरिक्तत्वाच्च

वैयर्थ्यं नित्यमहत्त्वव्यावृत्तानित्ययावन्महत्त्ववृत्तिजातिपरिचयाय तदिति तु न तादृशजातौ मानाभानात् वैभवापेक्षिकापकर्षव्यवहारस्याननुगतजातिभिरेव सम्भवात् तुल्यन्यायतया त्र्यसरेणुमहत्त्वापेक्षिकोत्कर्षेणैकजात्या सङ्कर प्रसङ्गाच्च। निःस्पर्शेति साध्योपाध्योर्व्याप्तिदार्ढ्यप्रदर्शनाय द्रव्यपदं गमकता तु तेन विनापि पर्य्यवसितसाध्यसमव्याप्त एवोपाधिरिति मतेनेदमित्यपि कश्चित्। ननु भवतां शुद्धसाध्यव्यापकस्पर्शवदसमवेतत्वं कथं नोपाधिः अनवस्थाभिया कस्यचिन्निरवयवस्य स्पर्शवतः सिद्धौ तत्समवेतद्रव्ये साध्याव्यापकत्वादिति चेत् तुल्यं ममापीत्यत आह किञ्चेति सोपाधौ सोपाधितया निश्चिते। ननु लभ्यत्व लाभयोग्यत्वं पक्षे यादृशं साध्यं सेद्धुमर्हति तद्व्यापकत्वे सति पक्षावृत्तित्वं पक्षे साध्यसिद्धिविरोधिव्यापकताशालित्वमिति यावत् स्वव्यतिरेकेण पक्षे साध्यसिद्धिविरोध्युन्नायकत्वमिति तु निर्गलितोऽर्थः। भवति च शब्दधर्म्मातिरिक्तधर्म्मरहिते शब्देऽनित्यत्वाभावसिद्धिर्यथोक्तसाध्यसिद्धिविरोधिनी तथा साधनादिमति साधनाद्यवच्छिन्नसाध्याभाव सिद्धिरपि। वस्तुतस्तु पक्षधर्म्मावच्छिन्नसाध्यव्यापकत्वे सति पक्षावृत्तित्वमेवोपाधित्वं सिध्यति च विशेषणवति विशिष्टसाध्यव्यापकव्यतिरेकेण शुद्धसाध्यव्यतिरेकः तादृशश्च साधनव्यापकः सग्राह्यो व्यभिचारोन्नायक इव पक्षवृत्तिरितरेषाम् अपरेषां सत्प्रतिपक्षोन्नयनक्षमस्य साधनव्यापकस्यैवास्माकमपि व्यभिचारोन्नायकस्य पक्षवृत्तेरसग्रहो

न दोषाय परेषां साधनभेदात्रियाणाकमपि पक्षभेदादुपाधि भेद इति चेदत वक्ष्यते अन्यकृतैव। सद्धतावच्छेदकमात्र यद्यभिचारित्वमित्यादि उन्नीयत इति शेष उन्नायकाय तद्योग्यता सा च व्याप्तिपक्षधर्म्मतेति तथाच यद्यभिचारी यद्धर्म्मावच्छिन्नाभावाधिकरणीभूत यत्किञ्चिदधिकरणवृत्तित्व साध्यव्यभिचारव्याप्य साधनमस्ति च तद्धर्म्मावच्छिन्न तद्योपाधिरित्यर्थः तेनार्द्रेन्धनाभाववद्वृत्तित्वेन वह्नौ धूम व्यभिचारसाधनेऽप्यार्द्रेन्धन द्रव्यत्वादिना न तद्योपाधि तद्रूपावच्छिन्नाभाववद्वृत्तित्वस्य वह्निवृत्तित्वात् शुद्धसाध्य व्यापके तदभावयत्नायवृत्तित्व साध्यव्यभिचारव्याप्यम् अव च्छिन्नसाध्यव्यापके स्वावच्छेदकाधिकरणीभूततदभावाधि करण वृत्तित्वमित्युभयत्रापि मन्तव्यमिति । द्रव्यत्वेन रूपवत्त्वेन साध्ये सत्ताद्रव्यत्वजलत्वमात्रविशेष्यिका या धीस्तद्विशेष्यत्वे जलसमवेतनित्यत्वे या सति पृथिवीत्ववद्वृत्तित्वादित्यादिना प्रकारेण व्यभिचारोन्नयनसमर्थोऽपि पृथिवीत्वाभावादिर्नो पाधि । न हि पृथिवीत्वात्मक तदभावाधिकरण तादृशं किञ्चिदस्ति यद्वृत्तित्वसामान्य साध्यव्यभिचारव्याप्यम् पृथि वीत्वादावेव व्यभिचारात् न च व्यभिचारोन्नायकतामात्रेण प्रकृतोपाधितानिर्वाह अपि तु कथकानां तान्त्रिकाणाञ्च तथाविधव्यवहारविषयत्वेन तदवच्छेदकञ्च यथोक्त रूप व्याप्य व्याप्तिसंग्राहकत्वादिकं सम्भवदपि न तथा गौरवात् अत एवेद मस्माकमप्यादित्युक्त साध्याव्याप्यत्वेन जलत्वाव्याप्यत्वेना

यकस्यापि द्रव्यत्वादेरसंग्रहो न दोषाय अथैवं स्वव्यभिचारेण व्यभिचारोन्नायकत्वमेव तथास्तु लाघवात् तच्चोक्तोपाधावप्यस्तीति चेदेवं तर्हि साध्याभाव साधनोभयाधिकरणवृत्त्यभावप्रतियोगित्वमेव तथास्त्वतिलाघवात् अस्तु च सहार्थे तृतीयाश्रयणेनास्यापि स एव फलितोऽर्थः एतद्रूपमात्रज्ञाने तेषां नोपाधिव्यवहार इति चेत्तुल्यं त्वदुक्तेऽपि अतएव शुद्धसाध्याव्यापकस्थले साध्ये व्याप्यतावच्छेदकं नियमतस्तादृशं धर्म्ममनुसरन्ति ते यद्वति साध्यव्यभिचारनियमो भवत्युपाधिव्यभिचारस्य वस्तुतस्तु यदभावेन यद्वदन्यत्वेन वा साधनवति साध्याभाव उन्नीयते स उपाधिर्लाघवात् अतएव जलत्वतेजस्त्वयोर्न तदुभयत्वेन क्वचिदप्युपाधित्वम् यद्व्यभिचारित्वेनेत्यस्यापि स एवार्थः तथाहि यद्व्यभिचारित्वेन हेतुमद्वृत्तित्वविधया साधनस्य पक्षतावच्छेदकीभूतस्य साध्याभावरूपसाध्यवत्पक्षवृत्तित्व सिध्यतीति अत्र च साध्यसमानाधिकरणत्वेनावच्छिन्नो धर्म्मो साध्यासमानाधिकरणार्द्रेन्धनादि व्यक्तेरार्द्रेन्धनत्वादिनोपाधित्वे पुनरवच्छेदकधर्म्म एव साध्यसमानाधिकरणवृत्तित्वेन विशेषणीयः तेन जलह्रदत्वाभावाधिकरणायोगोलकवृत्तित्वस्य धूमव्यभिचारव्याप्यस्य वह्निवृत्तित्वेऽपि जलह्रदत्वादौ नातिप्रसङ्गः न वा द्रव्यत्वेन तेजस्त्वसाधने शीतस्पर्शजलत्वाद्यात्मकास्वाभावेन तद्वृत्तित्वेन वा द्रव्ये द्रव्यत्वे वा साध्याभावस्य व्यभिचारस्य वा साधके स्पर्शाभावजात्यभावादौ द्रव्यत्वादिना तु कम्बुग्रीवादिमत्त्वादौ

साध्ये ऽव्यभिचारेण स्वाभावेन वा हेतौ तद्वति वा
व्यभिचारस्य साध्याभावस्य वा साधक घटत्वादि व्यभिचारि
त्वमुपाधिरेव घटत्वादेस्तदभावस्य वा गमकत्वेऽपि धूमप्राग
भाववद्वैयर्थ्यं न चाभावस्यानुपाधितापत्तिः प्रतियोगिमत्त
द्वृत्तित्वस्यैव वा हेतुत्वादिति वाच्यम् तस्याप्रयोगेऽपि वस्तुतो
ऽस्तदभाववत्त्व तद्वृत्तित्वस्य च हेतुत्वानपायात् तदभावा
भाववद्वृत्तित्वेनोपस्थितावपि तद्वृत्तित्वेनानुपस्थितेर्व्यभिचार
साधने न वैयर्थ्यमित्यपि वदन्ति । लक्षणमाह पर्य्यवसित-
त्यादि । पर्य्यवसितपदार्थमाह यद्धर्मेति यदुभयतोऽन्वयं ।
नन्वेवं सद्धेतौ सपक्षकोटिगतवृत्तिधर्मेऽतिप्रसङ्ग अथ यद्धर्मा
वच्छेदेन साधनवति साध्य प्रसिद्ध तद्धर्म्मावच्छिन्नसाध्य
व्यापकत्व साध्यसाधनसम्बन्धव्यापकत्वमिति यावत् विरुद्धसाधे
चोपाधिविरहेऽपि न क्षति व्याप्यतावच्छेदके च साध्यसमा
नाधिकरणत्वेन साधन तादृग्वृत्तित्वेन वा साधनतावच्छेदक
विशेषणीयम् साधनव्यापकीभूतधर्मावच्छिन्नसाध्यव्यापकत्व
वा विवक्षितं विरुद्धेऽपि साधनव्यापकेनान्ततोऽन्यतरत्वादि
नावच्छिन्नस्य साध्यस्य व्यापकत्वमस्त्येवोपाधेर्ना प्रमेयत्वादिना
च वाय्वादौ प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वादिकं नोपाधि
र्व्याप्यतावच्छेदकवाक्यस्य प्रयोजनत्वमपि तृतीयावसाय
व्यभिचारस्थले साधनस्य साध्यव्यभिचारित्वनियम इत्यर्थे
पर्य्यवसानात् नैवम् जनकत्वेन वह्नौ कार्य्यानुकूलेत्याद्यात्मक-
भक्तिसाधने बहिरिन्द्रियासत्यचलस्योपाधेर्व्यञ्जकतैवोक्ताश्रयि

वारणसम्भवे पर्य्यवसितसाध्यव्यापकत्वाभिधानम् व्यापका भावेन व्याप्याभावस्यावश्यभावप्रदर्शनार्थं तत्साध्यकतत् साधनकसकलोपाधिसाधारणमेव साध्यव्यापकत्वमाधना-व्यापकत्वाय घटकरूपानतिरिक्तवृत्तिसाध्यसमानाधि करण यत्किञ्चिद्धर्मव्यापकतावच्छेदकरूपवत्त्वमुपाधित्वम् अव च्छिन्नसाध्यव्यापकोपाधौ चासत साध्योपाधिशून्या साधन वत्तो या व्यक्तिस्तद्वृत्तित्वमेव तादृश रूपमित्यपि वदन्ति। रूपादिसाध्यकद्रव्यत्वादिहेतौ पृथिवीत्वाभावादेरुपाधिता पक्षे तु स्वविशिष्टसाध्यानधिकरणीभूतसाधनाधिकरणवृत्ति धर्म्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वम् अत च पूर्वदलप्रविष्टा या साधनव्यक्तिस्तदव्यापकत्वं बोध्यं तेन रूपा दिना गुरुत्वादौ साध्ये पृथिवीत्वाभावादौ नातिप्रसङ्ग विवेचयिष्यते चेदमुपरिष्टात्। साध्यासमानाधिकरणधर्मस्य साध्यव्यापकाभावस्य वा समानाधिकरणं यत् साधनं तद् वन्निष्ठ प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिव्यधिकरणा त्यन्ताभाव प्रतियोगितावच्छेदक-साध्यसमानाधिकरण वृत्ति धर्मवत्त्व वा एवञ्चायमसौ साधनवति साधमै वा साध्यासमा नाधिकरणधर्मादिना तत्सामानाधिकरण्येन वा साध्या भावो व्यभिचारो वा गम्यते ज्ञातुमिति तु ध्येयम् उपाधि मणेरभानस्य साधननिष्ठसाध्यव्यभिचारादिविषयत्वसद्वि ष्णुतायान्तु साध्यव्यभिचारित्वेन साध्याव्याप्यत्वेन वा साधन विशेषणीयम् मिश्रास्तु यद्वाभिचारित्वेनेत्याद्येव लक्षण

पर्य्यवसितेत्यादिकन्तु व्यभिचारोन्नायकताप्रयोजकरूपप्रदर्शन तत्र पूर्वं प्रतीकं व्याप्तेर्हितीयञ्च पक्षधर्म्मतायाः प्रदर्शनार्थं एवञ्चायमेतत्साधननिष्ठसाध्यव्यभिचारोन्नायकव्यभिचारप्रतियोगीत्यर्थके अयमत्र हेतावुपाधिरित्युक्ते कथमस्य व्यभिचारोन्नायकत्वमित्याकाङ्क्षायां व्यभिचारोन्नयनमपि साधु सङ्गच्छत इत्याहुः। नवीनास्तु संयोगवदन्यत्वेन द्रव्यत्वाभावस्येव संयोगाभावस्याभावेन सयोगेन द्रव्यत्वाभावाभावस्य द्रव्यत्वस्य साधनसम्भवादेकशेषस्य दुष्करत्वात्तस्याप्युपाधित्वं लक्षणन्तु साधनवति साध्याभावोन्नायकव्यतिरेकप्रतियोगितावच्छेदकरूपवत्त्वं प्रतियोगित्वञ्च तदभावत्व व्यत्यादितञ्च प्रतियोगितावच्छेदकस्यैवान्योऽन्याभावाभावत्वं शेषं पूर्ववदिति विशेषणाव्यभिचारित्वेनेत्यादि सामान्यतो दृष्टस्यैवैकविशेषबाधे भावयति विशेषान्तरप्रकारिकामनुमितिं नचातिरिच्यते विशिष्टाभावो विशेषणविशेष्याभावाभ्यामिति मतेनेदम्। स्वमते नाह यद्वेति। प्रत्यक्षस्पर्शाश्रयत्वमित्यादि प्रत्यक्षसंख्यापरिमाणवत्त्वाद्युपाध्यभिप्रायेण यथाश्रुतमेव साधु आत्मैकत्वादेरपि प्रत्यक्षत्वाङ्गीकारात् उद्भूतरूपादिपरत्वे च साध्ये हेतौ च प्रत्यक्षपदं वहिरिन्द्रियप्रत्यक्षपरं द्रव्यपदे वा वहिर्द्रव्यपरे महत्त्वपदञ्च जन्यमहत्त्वपरमिति व्यापकव्यभिचारित्वञ्च व्यापकतावच्छेदकरूपावच्छिन्नाभाववद्वृत्तित्वम् न च द्रव्यपदवैयर्थ्यं विशिष्टाभावस्यातिरिक्तत्वात् द्रव्यत्वा व्यभिचारित्वे सति उद्भूत-

रूपादिव्यभिचार एव हेतु व्यापकत्वोपन्यासस्तु तर्कप्रदर्शनायेति तत्त्व द्रव्यत्वाव्यभिचारो द्रव्यत्वाभाववदवृत्तित्वम्। मित्रातनयत्वमिति अनुमानमिदमुपाधे प्रमाणान्तरेण साधनाव्यापकतानिर्णयदशायाम्। ननु तदव्यभिचारित्वं तदव्यत्वाभाववदवृत्तित्वं तथा च साधनविकलोऽयं साध्यवान् दृष्टान्त इत्यत आह अव्यभिचारश्चेति। नन्वेव विशेष्यवैयर्थ्यं धूमप्रागभाववद्धर्मिभेदाद्वैयर्थ्यमिति चेत्तथापि मित्रातनयत्वव्यापकत्वविशेषितं वृत्तिमत्त्वमेव गमकमिति चेन्न यत्किञ्चित्सदधिकरणनिष्ठात्यन्ताभावाप्रतियोगित्वस्य फलत सामानाधिकरण्यपर्य्यवसितस्योक्तत्वात् तथाचायमर्थं मित्रातमयत्वाधिकरणयद्वृत्तिनिष्ठात्यन्ताभावाप्रतियोगित्वं तच्च शाकपाकजत्वव्यभिचारित्वात् मित्रातनये शाकपाकअव्यभिचारित्वादिति यावत् तेन श्यामत्वादौ न व्यभिचार। अव्यभिचारश्चेति तथाच बहुव्रीहि' यद्धर्माव्यभिचारित्वे सति तद्धर्मावच्छिन्नयत्साध्यव्यापकव्यभिचारि तत्तत्साध्यव्यभिचारीति सामान्यव्याप्तेरघटत्व दृष्टान्त इत्यप्याहु। मेयत्वादावपि विशेषणवति विशिष्टसाध्यव्यापकोपाधिव्यभिचारेण शुद्धसाध्यव्यभिचार साधनीय'। एव विशिष्टसाध्यव्यापकस्यापि साक्षाच्छुद्धसाध्यव्यभिचारोन्नायकतयोपाधित्व समर्थंसाध्यात्परम्परासाधारणतदुन्नायकतामाक्षेप तत्रास्य व्यवस्थापयति यदेत्यादिना। अत्र पूर्ववदिदवारणाय

साध्यसमानाधिकरणेति बोध्यं व्यभिचारोन्नायकत्वञ्च यत्र क्वचित् एवञ्च पृथिवीत्वादिना गुरुत्वादौ साध्ये द्रव्यत्वादौ व्यभिचारोन्नायकस्य रूपवत्त्वादेर्वारणाय साधनव्यभिचारीति बहुव्रीहिः। नचैवमपि गुरुत्वादिसाध्यके रसवत्त्वादिहेतौ द्रव्यत्व गुरुत्वादिव्यभिचारि जलभिन्ने पृथिवीत्वादिव्यभिचारित्वादिति व्यभिचारोन्नायके पृथिवीत्वादावतिप्रसङ्ग. साधननिष्ठं यद्व्यभिचारित्व साध्यव्यभिचारोन्नायक तत्त्वस्योक्तत्वात् उक्तिवैचित्र्याच्च पूर्वस्माद्भेदः। केचित्तु व्यभिचारोन्नायकत्वमिह तद्व्याप्यकोटिप्रविष्टतामात्रेण इत्थञ्च जलत्वेन करकात्वे साध्ये जलत्वं करकात्वव्यभिचारि स्नेहव्यापकत्वात् घटेन वा घटत्वे साध्ये घटो घटत्वव्यभिचारी जन्यद्रव्यत्वादिति व्यभिचारोन्नयनसमर्थस्य स्नेहस्य द्रव्यत्वस्य च वारणाय साधनव्यभिचारीति अयं घटः सत्त्वादित्यादौ सत्त्वं घटत्वव्यभिचारि शब्दादिवृत्तित्वादिति व्यभिचारोन्नायकस्य शब्दादेर्वारणाय साध्यसमानाधिकरणेत्यपि वक्तव्यम् एवञ्च रूपेण गुरुत्वादौ साध्ये रूपं गुरुत्वादि व्यभिचारि जलभिन्ने पृथिवीत्वाभाववद्वृत्तित्वादिति व्यभिचारोन्नायकस्य गुरुत्वव्यभिचारितैजसरूपनिष्ठव्यभिचाराप्रतियोगिनः पृथिवीत्वाभावस्य वारणाय यत्राधिकरणे साधनाव्यापकत्वं तत्र व्यभिचारोन्नायकत्वं वक्तव्यं यथा कथञ्चित्स्वव्यभिचारेण व्यभिचारोन्नायकमात्रस्य तु लक्ष्यत्वे यत्साधनव्यत्ययव्यापकत्वं तद्व्यक्तौ व्यभिचारोन्नायकं वाच्यमित्याहुः।

नन्वस्तु पारिभाषिकमुपाधित्वं तथापि साध्याव्यभिचारानुमा-
पकतया दोषत्वाभावेन तदुद्भावने पर्य्यनुयोज्योपेक्षणं स्यादित्यत
आह किञ्चेति अभावान्तरस्य तदानीं ज्ञायमानस्य तथात्व
तत्त्वावगत्यनुपयोगिदोषभावस्य तदुद्भावने नार्थान्तरमिति
भावः । अत यद्यपि साध्योपाध्यावगमनन्तर तत्साधकस्यैव
साधनोपाध्यावगमनन्तरं तद्दोषस्य व्यभिचारादेराकाङ्क्षितत्वात्
तमनुद्भाव्य साधानस्साधकस्य शुद्धसाध्यव्यापकस्योपाधेरुद्भ
वन एवाप्राप्तकालत्वं कैव कथा परम्परया तत्साधकस्याप
च्छिन्नसाध्यव्यापकस्य अन्यथा तत्साधकपरम्परायाः अपि प्र
थममुपन्यासे तथात्वं न स्यात् न च निग्रहस्थानत्वेन विशेष
प्रतिज्ञाहान्यादिस्तो हेत्वाभासानां अधिकत्वं तस्य तथात्वायो-
गात् न च विभाजकवाक्यस्थले हेत्वाभासांश्चेति चकारेणानु
क्तसमुच्चयपरेण साक्षात्परम्परया वानुमिति दोषाद्भावकस्य
संग्रहः तथा सति व्यभिचारस्यैवाश्रयासिद्ध्यादेरुद्भावकस्य
तदुभयोद्भावकपरम्परायाश्च तथात्वापातात् तथाप्राप्तकाल
त्वमाभासादयत्रापि प्रथममुपाध्युपन्यासे कथकसम्प्रदायानु-
रोधादेव कर्त्तव्य तादृशसम्प्रदायमननुरुन्धानस्य तदुद्भावक
पराभवत्व प्रपञ्चनिवारणीयतापत्ते तस्मात्प्रथमं शुद्धसाध्य
व्यभिचार एवोद्भाव्यस्तत्र कथन्तायां तद्धेतुत्वेन शुद्धसाध्य
व्यापकोपाधिव्यभिचार विशेषणाव्यभिचारित्वे सति विशिष्ट
साध्यव्यापकस्योपाधेर्विशिष्टसाध्यस्य वा व्यभिचारः तत्र
च विशिष्टे विशिष्टसाध्यव्यापकोपाधिव्यभिचार इति यद्यपि

च व्यभिचारादेरिव तद्व्याप्यवत्त्वादेरपि ज्ञानं व्याप्त्यादिग्रहप्रतिबन्धकं तथाच साध्यव्यभिचारव्याप्योपाधिव्यभिचारवानयमिति वोद्भावनीयमिति साध्यव्यापकत्वानिश्चयात् उपाधित्वौपयिकतदनिश्चयात् अनुकूलतर्कादिना तादृश-व्यापकत्वनिश्चये तु बाधोन्नीतवह्निवत्येव निश्चितोपाधिः । न च स्वव्याघातकत्वोन्नायकमुपाधिः तद्धि न सर्व्वानुमान-साधारण्यं अनुकूलतर्क्कादिनिश्चितव्याप्तिके हेतौ तदभावात् नापि तद्व्यभिचारेण व्यभिचारानुमानेऽपि पचेतरान्तरस्यो-पाधित्वसम्भवः अनुकूलतर्क्कादिना तस्य साध्यव्यापकत्वनिश्चये व्यापकव्यभिचारिणि व्याप्यव्यभिचारावश्यम्भावेन तद्योगात् अतएव पचेतरस्योपाधित्वे सर्व्वत्रैव तादृशोपाधिसम्भवेनानुमा-नमात्रविलोपे व्यभिचारानुमापकत्वगर्भस्योपाधित्वस्य व्या-घात इति परास्तम् कथकसम्प्रदायानुरोधात् बाधानुन्नीतः पचेतरोनोपाधित्वेन कथायामुद्भाव्य इति तु वदन्ति । पचमात्रेति । यद्यपि पर्व्वतावयवरूपादेरपि व्यावर्त्तकं तत्तथापि तस्य व्यावृत्तिर्नोपाधितायामुपयुज्यते अपि तु पचस्यैवेति तन्मात्रव्यावर्त्तकत्वमुक्तम् इदञ्चानुपाधितायां न वीजं परिभाषामात्रत्वात् किन्त्वनुकूलतर्क्काभावेन तादृश-साध्यव्यापकत्वानिश्चय इति द्रष्टव्यम् अतएव व्यापकता-ग्राहकप्रमाणसम्भवादेव । आर्द्रेन्धनेति । अथात्र स्वत-न्त्रान्वयव्यतिरेकाभ्यामार्द्रेन्धनत्वादिनैव कारणत्वं न पुनरा-र्द्रेन्धनप्रभववह्नित्वेनेति चेत्किञ्चातः न हि कारणतावच्छेद-

कमेव व्यापकतावच्छेदक तादृशाभावप्रतियोगितानवच्छेद
कमेव तत्त्वात् तदवच्छिन्नप्रतियोगिताकाभावस्य चातिरि-
क्ततया तदवृत्तित्वेन साध्यव्यभिचारसाधने वैयर्थ्याभावात्
सत्यपि चार्द्रेन्धने तत्संयुक्ते च वह्नौ दाहप्रतिबन्धकमत्त्वे
धूमानुत्पादात् कृतस्तत्कारणाभावस्य वह्नेर्विशेषरूपेण कार-
णत्वकल्पनयैवोपपत्तावक्लृप्ततत्कारणभावानां दाहप्रतिबन्धक
भावानां तत्कारणत्वकल्पनानौचित्यात् एकस्यामार्द्रेन्धनव्यक्तौ
प्रतिबन्धकायां तत्रैव व्यक्त्यन्तराद्धूमोत्पादात् तत्तदिन्धनजन्यधूम
प्रति तत्तदभावानां कारणत्वस्य वाच्यत्वेऽतिगौरवात्
[illegible] चार्द्रेन्धने तत्प्रभवे चार्णोयसि वह्नौ सत्यपि वह्न्य
न्तरे विद्यमानेऽप्यार्द्रेन्धनप्रभवमहावह्नेरनुत्पाददशायां प्रकृ
ष्टधूमानुत्पादादार्द्रेन्धनप्रभववह्नित्वेन कारणत्वमित्यपि व
क्तुमशक्यत्वात्। तदुत्कर्षेणेति चार्द्रेन्धनप्रभववह्निसामान्य विना
धूमसामान्यस्य प्रकृष्टतादृशवह्निं विना प्रकृष्टधूमस्यानुत्पाद
नियमादार्द्रेन्धनप्रभववह्नेरेव धूमोपधायकत्व तत्रार्द्रेन्धनप्र
भववह्नित्व कारणतावच्छेदकमर्थंद्वयसम्पन्न नान्तरीयकमेव
वास्तु फलतो न कश्चिद्विशेष इति भाव । अनन्ययेति
तादृशान्वयव्यतिरेकाभ्यामुक्तरूपस्य तद्वतो द्रव्यस्यैव वा
कारणत्वम् उभयथापि व्यापकत्वमुक्तरूपत्वेन तत्त्व पुनरुप
वर्णितमेव । घटोऽभ्यन्तनेति ध्वंसप्रागभावानधिकरणकालस्य
प्रतियोग्यधिकरणत्वनियमात् न च प्रागभावस्य ध्वंसप्रति
योगिध्वंस इव तत्र सोऽपि प्रतियोगिनो ध्वंस इति वाच्यम्

अप्रामाणिकध्वंसतत्कारणधाराकल्पनातो ध्वंसानन्तत्व-
कल्पनाया एवोचितत्वादिति भावः। कार्य्यकारणयोरेव
कार्य्यकारणभावग्राहकप्रमाणक्रोडीकृतयोरेव। पक्षेतरस्ये-
त्यादि नंनु सन्दिग्धोपाध्यन्तरवत्पक्षेतरोऽपि व्यभिचारशङ्का-
मादधानः केन वारणीयः स्वव्याघातकत्वञ्च निराकृतमेव
अथात्र कश्चिदुपाधिर्भविष्यतीति शङ्का शङ्कापिशाचीत्वात्
यथा न व्यभिचारशङ्काधायिका तथा पक्षेतरस्योपाधित्वश-
ङ्कापि तदाहितापि व्यभिचारशङ्का पक्षे व्यभिचारशङ्केव न
प्रतिबन्धिका अन्यथा निरुपाधिकसहचारभङ्गप्रसङ्गमात्रबल-
प्रवृत्तानामनुमानानां विलयप्रसङ्गादिति चेन्न सन्दिग्धो-
पाध्यन्तरसाधारणव्यभिचारशङ्काधानप्रयोजकरूपवता पक्षेत-
रेण तदाधाने प्रयोजनक्षतेः प्रतिबन्धकत्वासम्भवात् व्यभि-
चारज्ञानत्वेन च प्रतिबन्धकतायां कारणविशेषजन्यत्वाजन्य-
त्वादिक न निविशते गौरवात् मानाभावाच्च कथमन्यथा
करवह्निसंयोगः सर्वः संयोगो वा प्रत्यक्षसंयोगधर्म्मातिरि-
क्तधर्म्मसमवायी समवायित्वादित्यादितो न शक्त्यादिसिद्धिः
निरुपाधित्वेऽपि अप्रयोजकत्वादिति चेन्न निरुपाधित्वस्यैव
प्रयोजकत्वात् तथात्वेऽपि चाप्रयोजकत्वे निरुपाधित्वाभि-
मतानामितरेषामपि तथात्वात् अत्र च कुत्र पक्षातिरिक्ते
व्यभिचारशङ्का कश्चायं व्यामोहो यद्व्याप्तिग्राहकदृढतर-
प्रमाणविरहिणां निरुपाधित्वमिति यतस्तत्र तत्रान्ततः
पक्षसपक्षैकदेशवृत्तिधर्म्मावच्छिन्नसाध्यव्यापकानां सपक्षैक-

देशवृत्तिधर्माणामुपाधित्वं सम्भाव्यते इत्यत्र यथा नास्ति प्रसङ्गस्तथा तत्र तत्र वक्ष्याम इति सत्यम् कथकसम्प्रदाया नुरोधात् कथायां सन्दिग्धोपाधित्वेन पक्षेतरोनोद्भाव्य इत्येवम्परो ग्रन्थ इत्याहु'। सोपाधावेकत्रेत्यादि उपलक्षण मेतत् व्यभिचारिण्युपाधेरवश्यम्भावमात्रे तात्पर्यम् उप जीव्योपजीवकभावो हि न कार्य्यकारणभावोऽसम्भवात् व्याप्यव्यापकभावस्त्वकिञ्चित्कर एव विशेषतस्तु ज्ञायमान दूषकतायाम् एकमविज्ञायाप्यन्यतरज्ञानाच्च न ज्ञाप्यज्ञापक भाव । न चानुकूलतर्कविरहादेव व्याप्तेरग्रहे ज्ञातमुपा- धिज्ञानेन विनाप्यनुकूलतर्के व्यभिचाराग्रहे व्याप्तिग्रह- सम्भवादिति भाव । यत्राहत्येति यत्र पक्ष इति पूरणात् पक्षनिष्ठसाध्यव्याप्त्युन्नायकव्याहत्तिप्रतियोगित्वमर्थ सत्प्र तिपक्षोन्नायकत्वस्यैव दूषकतावीजं तच्च चाप्रयोजकत्वात् साधनाव्यापकत्व मोक्ष साधनस्य सोपाधित्वव्युत्पादनायैव केवल यस्य साधनस्येति यत्र साधनस्येत्यनन्तरमधिकरण इति पूरणात् साधनपक्षनिष्ठसाध्यव्याप्त्युन्नायकव्याहत्ति प्रतियोगित्वमर्थ तथा च यद्व्यभिचारित्वेनेत्यादेरुपवर्णितार्थं निष्कर्षं एवाय शुद्धस्य साधनावच्छिन्नस्य च साध्यस्य व्यापकानामुपाधीनां पक्षे क्वचित् साधनवति वा साध्याभाव स्यैकमुन्नयनप्रकारमाह सर्वेत्यादि साधनवत्त्वेन ज्ञायमाने पक्षे साध्यसाधनसम्बन्धाभाव सिध्यन् पक्षधर्मतावलात्साध्या भावमादायैव पर्य्यवस्यति । ननु शुद्धसाध्याभावोन्नायक

स्यार्द्रेन्धनवत्त्वादेः कथं साध्यसाधनसम्बन्धाभावोन्नायकत्वमत आह आर्द्रेन्धनेति अतएवेति साध्याभावसत्त्वे साध्यसाधनसम्बन्धाभावस्यावश्यकत्वात्तदुन्नायकत्वमक्ष्तमिति भावः। द्रव्यत्वे इति द्रव्यत्वस्य हेतुत्वाभिप्रायेण अयञ्च प्रायशः सम्भवतीत्यभिहितो वस्तुतः प्रकारभेदेऽपि न क्षतिः तथाच शुद्धसाध्यव्यापकोपाधिस्थले शुद्धसाध्याभावः अवच्छिन्न तद्व्यापकस्थले त्ववच्छेदकवत्यवच्छिन्नसाध्याभावोऽवच्छेदकवत्त्वविशेषितेन चोपाधिविरहेण शुद्धसाध्याभावः साधनीयः अतएव गगनादौ स्पर्शवत्त्वेन प्रमेयत्वेन च प्रत्यक्षत्वे साध्ये वह्निद्रव्यत्वावच्छिन्नसाध्यव्यापकस्योद्भूतरूपस्य तादृशसाध्याभावोन्नयनहेतुत्वमिति। पक्षे यद्व्यावृत्त्या यस्य साधनस्य सम्बन्धि यत्साधनविशिष्टं साध्यं निवर्त्तते इत्यर्थस्तु यथाश्रुतग्रन्थस्वरससिद्धः तत्र दूषकताबीजं यदि सत्प्रतिपक्षोन्नायकत्वं तदा साधनानुप्रवेशो व्यर्थः जलं द्रव्यं गन्धवत्त्वादित्यादौ पृथिवीत्वादावतिव्याप्तिश्च अथासिद्ध्युन्नायकत्व तदा साध्यानुप्रवेशो निरर्थकः जलं गन्धवत् द्रव्यत्वादित्यादौ पृथिवीत्वादावति प्रसङ्गश्च अथ यथासम्भवमसिद्धेः सत्प्रतिपक्षस्य चोन्नायकत्व तदा वायुः स्नेहवान् गन्धवत्त्वादित्यादौ जलत्वपृथिवीत्वादावव्याप्तिः साधनविशिष्टसाध्याप्रसिद्धेः साध्यसाधनवत्त्वप्रकारकबोधविरोधिबुद्धिकाभावोन्नायकत्वमर्थः विरुद्धे चैकैकाभावबुद्धिरुभयवत्ताबोधम् विरुद्धस्थले तु भ्रमादिरूपतथाविधबोधप्रसिद्ध्या समन्वय इत्यपि वदन्ति यत्तु

साध्याश्रित्वे सति साधनाश्रयनिर्ष्ठात्यन्ताभावप्रतियोगिकस्य साध्यसाधने
ऽनुगमय तदभावज्ञापकत्व याच्यमिति तत्र यत्र भिन्नभिन्न-
सम्बन्धेन साध्यसाधनभावस्तत्र सद्धेतुके हेतुतासम्पादकेन
सम्बन्धेन साध्यस्य साध्यतासम्पादकस्य च द्वयोरन्यवापि च
यथाकथञ्चित्सम्बन्धेनोभयस्याभावोन्नायकेऽतिव्याप्ते किञ्च सा
दृशधर्मशून्यत्वेन सदावस्तरेण वा तदभावज्ञापकत्वम
भिमतम् साध्य साध्यसाधनान्यतरवति तदभावात् नान्त्व
भूमिन पर्वते वह्नौ साध्ये महानसीयवह्नित्वावच्छिन्नाभावो
ज्ञायकमहानसमादावतिव्याप्ते । अथ पक्षाश्रितत्वे सति
ये साधनवदृत्तयसाध्यशून्यत्वेन पक्षसाधनयज्ञापिति समा-
विशेष्यत्वेन वा हायनुगतीकृत्य तत्र साध्यव्यावर्त्तकत्वमर्थ
मात्र तत्र यदि सत्प्रतिपक्षव्यभिचारयोरन्यतरमात्रोन्नाय
कत्व दूषकतावीज तदा द्वयोरनुगमनमफलम् । अथ
यथासङ्ख्यमुभयोन्नायकत्व तदा सद्धेतुके सत्प्रतिपक्षो
न्नायकेऽव्याप्ति यद्यपि च पक्षतावच्छेदके साधने च न
वर्त्तते यत्तच्छून्यत्व पक्षतावच्छेदकसाधने इति प्रतीति
विशेष्यस्य चाश्रये साध्यव्यावर्त्तकत्वमर्थमात्र तत्रापि कि
येन सम्बन्धेन हेतुता तेन अथ येन पक्षतावच्छेदक पक्षे
वर्त्तते तेन उत येन केनचित्तादृशधर्माश्रये साध्यव्यावर्त्तकत्व
मभिमत नाद्य जन्य वह्निमद्भूमादित्यादौ जन्यपक्षकवह्निसा
ध्यके संयोगसम्बन्धेन साधने धूमादौ वह्निसमवायादावव्याप्ते
पक्षतावच्छेदकस्य संयोगेनावृत्ते संयोगेन धूमवतस्य वह्नि

सत्त्वनियमात् न द्वितीयः घटो जातिमान् मेयत्वादित्यादौ समवायित्वादाव्याप्तेः वह्निमत्पर्वतपक्षके पर्वतो वह्निमान् धूमादित्यत्र धूमावयवे वह्निव्यावर्त्तके वह्निसामग्र्यादावतिव्याप्तेश्च अतएव नेतरोऽपीत्यादि स्वयमूहनीयमिति कृत पल्लवितेन। आपाद्याप्रसिद्धेः आपाद्यस्य वह्निव्यापकत्वे सति धूमाव्यापकत्वस्याप्रसिद्धेः। अनुमितीति अस्मदुक्तं व्यभिचारोन्नायकत्वं तदुन्नयनस्वरूपयोग्यत्वं तद्व्याप्तिपक्षधर्म्मतारूपं पर्य्यवसितसाध्यव्यापकत्वादिकञ्चानुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमेवेति भावः। ननु सामान्यलक्षणमितरव्यावृत्त्यौपयिकं विशेषलक्षणन्तु दूषकतायामुपयुज्यत इत्यत आह विशेषेति यथाश्रुतेऽवच्छिन्नसाध्यव्यापकोपाध्यव्याप्त्या यत्किञ्चिद्धर्म्मावच्छिन्नसाध्यव्यापकत्वमेव वक्तव्यं तथाच वह्निना धूमस्य धूमेन वह्नेर्वा साधने पक्षेतरस्य तद्रूपज्ञानादनुमितिप्रतिबन्धापत्तिरित्यर्थः व्यवहारौपयिकत्वे च तत्रोपाधिव्यवहारापत्तिः पर्य्यवसितेऽत्याद्यभिधाने चास्मन्नयप्रवेश इति भावः व्यवहारौपयिकं स्वव्यभिचारेण साध्यव्यभिचारोन्नायकत्वं लक्षणन्तु तत्तत्साध्यसमानाधिकरणत्वे सति तत्तत्साधनाव्यापकत्वं साध्यसाधनभेदाद्भिन्नमेव वस्तुतो व्यभिचारिणः साधनस्यैवानुप्रवेशाच्च नातिप्रसङ्ग न च रूपेण गुरुत्वे साध्ये पृथिवीत्वाभावादेरुपाधितापत्तिः गुरुत्वव्यभिचारि रूपव्यक्तेस्तद्व्याप्यत्वात् तदव्याप्यरूपव्यक्तेश्च गुरुत्वाव्यभिचारादिति दूषणतौपयिकन्तु यथासम्भवमननुगतमेवेति मत-

मिद परे परिष्कुर्वन्ति तत्र माधीय' तथा हि साध्यसाधन व्यक्तिस्वरूपगर्भ सोपाधित्वमपि तु साध्यतावच्छेदकसाधन तावच्छेदकधर्मगर्भं तत्तद्रूपत्वेन सकलगुणव्यक्तिषु सोपा-धेरपि द्रव्यत्वस्य गुणत्वेन सकलगुणेष्वेव निरुपाधित्वात् गुणत्वेन गुणे साध्ये सत्तात्वेन रूपेण सोपाधेरपि सत्ताया गुणकर्मान्यत्वविशिष्टसत्तात्वेन निरुपाधित्वात् तथाच तद्रू पावच्छिन्ने साध्ये तद्रूपावच्छिन्ने साधने च क उपाधि रित्यत्र तद्रूपावच्छिन्नसाध्यसमानाधिकरणत्वे सति तद्र पावच्छिन्नसाधनाव्यापकत्वमनुगत लक्षण वाच्य नतु तद्रूपा वच्छिन्नतत्तत्साधनव्यक्त्यव्यापकत्वमनुगमात् तथाच गुणत्व त्वावच्छिन्नसमानाधिकरणस्य रूपत्वावच्छिन्नाव्यापकस्य पृ थिवीत्वाभावादेरुपाधित्वं दुर्वार व्यभिचारित्वेन साधन विशेषणस्तमदृशितमेवेति सङ्क्षेप'। उपाधिलक्षणे साधना व्यापकत्वं न विशेषणं दूषकतायामनुपयोगात् अव्याप्ति कत्वाचेति। सत्प्रतिपक्षोत्थापकत्वेनोपाधेर्दूषकतावादिना मभिप्राय प्रकाशयति। केचित्त्विति साध्यतावच्छेदकाव च्छिन्न साध्यस्य सोपाधि पर्र प्रत्युक्ताप्य साध्याविशिष्ट त्वात् पक्षे साधनस्य निश्चयेऽनुमानस्य वैयर्थ्यात् अनिश्चये च तस्यायोगात्। सन्दिग्धोपाधित्वेनापि न तदुद्भावनमित्याह अनुमिनोति हेतौ साध्यव्यभिचार' सन्दिग्धश्चेत् तत स न्दिग्धोपाधिना असन्दिग्धश्चेत्कथ तस्य सन्दिग्धोपाधित्व मिति तु तत्त्वम्। हेतुव्यभिचारेति व्याप्यसशयस्य व्यापक-

संशयहेतुत्वादितिभावः न च तत्र मानाभावः कोटिस्मरणादित एव तदुपपत्तेः क्वचित्तदनुविधानस्यापि व्याप्यतदभावयोर्व्यापकतदभावसाहचर्य्यस्य गृहीतत्वेन तत्स्मरण एवोपक्षीणत्वात् तदग्रहे तु तत्संशयाद्व्यापकसंशयस्याप्यभावादिति वाच्यं महानसे हुताशनो न जलह्रदे इति स्मरतां पर्वतादिकमपि पश्यतां धूमादिसंशयभावाभावाभ्यां हुताशनसंशयभावाभावदर्शनात्तस्यापि तद्धेतुत्वात् अतएवोत्कटकोटिकाद्व्याप्यस्य संशयाद्व्यापकस्याप्युत्कटकोटिकः संशयः कारणोत्कर्षेणैव कार्य्योत्कर्षात् समानेत्यादि सूत्रन्तूपलक्षणपरं तत्रस्थश्चकारो वा अनुक्तसमुच्चयार्थ इति वदन्ति । कोटिद्वयसहचरितधर्म्मवत्तया धर्म्मिज्ञानं हेतुः धर्म्मस्य चैकत्वं ज्ञानस्य च निश्चयत्वं नोपयुज्यते गौरवात् अवगाहते च लिङ्गसन्देहो लैङ्गिकतदभावसहचरितौ लिङ्गतदभावौ धर्म्मिणि तथा च साधारणधर्म्म एव तस्यान्तर्भाव इति तु नव्याः लिङ्गतदभावयोः प्रत्येकमेकैककोटिसाधारण्येऽपि मिलितयोरसाधारणत्वं सत्प्रतिपक्षस्थले विरुद्धयोरिव हेत्वोरिति तु टीकाकारानुयायिनः । इत्थञ्च साधनाव्यापकत्वसन्देहे साध्यव्यापकव्यभिचारसन्देहात् साध्यव्यभिचारसन्देहो हेतौ स्फुट एव साध्यव्यापकत्वसन्देहे तु साधनाव्यापकव्याप्यत्वसन्देहात्साध्ये साधनाव्यापकत्वसन्देहो बोध्यः । उपाधेः साध्यव्यापकत्वसन्देहेनाहितात्साधने साध्यव्यापकव्यभिचारसन्देहात्साध्यव्यभिचारसन्देहः इत्यमेव च दल-

इये संग्रहस्थले व्यभिचारसंशयश्चोक्तिसम्भव इत्यपि वदन्ति ।
उभयेति एकांशेऽपरस्य एकविशिष्टापरसाध्यतायान्तु एकैक
स्योपाधित्वमिति तु तत्त्वम् । ईश्वरेति वस्तुतः सर्वेत्रापि
तन्मात्रग्रहदशायामुपाधिसन्देहेन व्यभिचारसन्देह इति
भावः । सन्दिग्धेति न चानैकान्तिकत्वसन्देह प्रतिबन्धको
न तु तज्ज्ञानमिति तद्यं तदुद्भावनमफलमिति वाच्यम्
अनैकान्तिकत्वभयात् मम व्याप्तिपक्षो मा भूदित्यभि
प्रायेण वादी हेतुदोषत्वेनासाधकतासाधकतया जिज्ञासा
दिद्वारा परम्परया सन्देहोपयोगित्वेन च तदुद्भावनस्य
साम्प्रदायिकत्वात् ।

उपाधित्वस्य संशये निश्चये च जायमान यज्ज्ञानमनु
मिति विरुणद्धि तदेवास्य दूषकताबीजमित्यभिप्रायेणाह स
न्दिग्धेति तद्व्यतिरेकस्य कचिद्व्याप्यत्वेन कचिच्च पक्षधर्मत्वेन
सन्दिग्धत्वात् साध्येऽस्तीति मनु साध्येऽवतीर्णे तत एव हेतोरसा
धकत्वात् छतमुपाधिना न चासाधारण्य पक्षस्यैव सपक्षत्वात्
अनवतीर्णे तु नोपाधिः पक्षेतरान्तरवत् साध्यव्यापकताया
एवाग्रहात् अनुकूलतर्कादिना कथञ्चित्तद्ग्रहे च नासा
धारण्य व्यतिरेकितयान्वयव्याप्त्यग्रहस्य सत्प्रतिपक्षरूपतया च
सत्प्रतिपक्षान्तरस्याकिञ्चित्करत्वादित्यरुचेराह पक्षहत्तिरिति
पक्षे तद्ग्रहदशायां तदभावग्रहासम्भवादिति भावः । व्याप्ति
विरहरूपतां निरस्य व्याप्तिज्ञानाभावद्वारकतां निरस्यति
नापीति अनौपाधिकत्वज्ञानस्य औपाधिकत्वज्ञानाभावस्य

कारणविघटकतया कारणाभावरूपतादृशज्ञानविषयतया अनौपाधिकत्वज्ञानस्य कारणत्वं नान्वयव्यतिरेकसिद्धम् परन्तु सोपाधित्वज्ञानस्य प्रतिबन्धकताया विना कारणीभूतज्ञानविघटनमसम्भवित्वेन कल्पनीयं सैव त्वसिद्धेति दूषणतात्पर्य्याद्यथाश्रुतमेव साधीय इत्यपि वदन्ति। व्याप्यत्वासिद्धेर्व्याप्यत्वाज्ञानेऽन्तर्भावस्तद्द्वारा दूषकत्वं भिन्नधर्म्मिकत्वं परिहरन्नाह न चेति। नहीति विरोधिविषयकत्वाभावेन साक्षात्प्रतिबन्धकत्वासम्भवादिति भावः। साध्यव्याप्यव्यभिचारित्वेन साध्यव्यभिचारित्वमित्युभयत्रैव बहुव्रीहिः तस्मादित्यादेरदूषणं वेति शेषः दूषकताबीजचिन्तनमिति निश्चयदशामधिकृत्य यन्निश्चयद्वारोपाधित्वनिश्चयस्य दूषकत्वं तत्संशयद्वारा तत्संशयस्यापि तथात्वमिति भावः। व्यभिचारज्ञानद्वारेति मानसे व्यभिचारनिश्चये उपाधिज्ञानं विशेषदर्शनरूपत्वेनोपयुज्यते व्यभिचारानुमानं पुनरग्रे वक्ष्यति। व्याप्तीति साध्यसम्बन्धितावच्छेदकरूपविरहः साधनतावच्छेदके साध्यसम्बन्धितानवच्छेदकरूपत्वपर्य्यवसन्नः साध्यवदन्यावृत्तित्वविशिष्टसाध्यवद्वृत्तित्वविरहो वोन्नेयः नतु स्वसमानाधिकरणात्यन्ताभावप्रतियोगिसाध्यकत्वं स्वत्वस्याननुगतस्याभावेन तत्तत्साधनत्वपर्य्यवसाने साध्यप्रसिद्धिमात्रेणैव कृतार्थत्वात् साध्यव्यापकोपाधिव्यभिचारित्वेन हेतौ साध्यव्यभिचारित्वं साधनाव्यापकोपाधिव्याप्यत्वेन साध्ये साधनाव्यापकत्वमनुमेयमिति तु नव्याः। व्यति-

रेकमिति साधने व्याप्तिविरहस्य व्यभिचारस्य चोपगमे उपाधि साधनाभाववद्वृत्तित्व व्यभिचारस्फुटतादयायासुपाध्यनुसर णापतादिकरणे इत्तो साध्यव्यभिचारित्व तदीयधर्मे साध्य साधनव्यापकत्वयद । उपाधिमाये ति तेनापि व्यभिचारा नुमाने तथापि तथाविधोपाधिमत्त्वपादिति भाव वस्तुतस्तु व्यापकव्यभिचारिणी व्याप्यव्यभिचारित्वे व्याप्यव्यापकभाव- व्याघततापत्या इत्तो साध्यव्याप्यत्वेन साधनाभाववद्वृत्तित्वस्य साध्यव्यापकत्वाज्ञोपाधित्वमिति तत्त्वम् । यद्वेति व्याप्य- व्याभावसाधनाभिप्रायेण साधनाव्याप्यत्वस्योपाधित्वे च नैष दोष । साधनेति यथाश्रुताभिप्रायेण प्रतियोगिव्यधिकर णसाधनाभाववद्वृत्तित्वस्य साधनवदन्यवृत्तित्वस्य चोक्तौ तथा त्वासम्भवात् एवञ्च सत्प्रतिपक्षे निश्चितोपाधिवत्सन्दिग्धोपाधि रुद्राय । न च तत्कत्वस्य व्यभिचारिसन्देहस्य प्रतिहेतु- समागादेव सिद्धे किं तेनेति वाच्य परस्परप्रतिबन्धेनैवानु- मित्यनुत्पादे तत्र व्यभिचारसन्देहस्यावश्यमुत्पत्तौ मामा भावात् उपाधिसन्देहादिगित्थमेव व्यभिचारसन्देहेन तुल्य मन्तत्वाभावात् न चातुल्यबलेन सत्प्रतिपक्षो व्यभिचारादि- गङ्काधान वा स्वरसत सन्दिग्धव्यभिचारादिनापि तथात्व प्रसङ्गादिति । अत्र च कश्चिदुपाधेस्तुल्यबलत्वे सत्प्रतिपक्षो त्थापकतया तर्कादिसाचिव्याद्व्यभिचारत्वे च साधोपापकत थापि दूषकत्वं व्याप्त्यादिप्रतिसन्धाने तदुत्थयस्य ,ततोऽनु मिति प्रतिरोधस्य च दुर्वारत्वात् परन्तु सार्वत्रिकत्व न

तस्येति ध्येयम् । असाधारणविपर्य्यय इति इदं सत्प्रति-पक्षोन्नायकत्वमभिप्रेत्य । यद्यपि व्यतिरेकिणा सत्प्रतिपक्षत्वे सत्प्रतिपक्षे सत्प्रतिपक्षान्तरस्यादोषत्वान्नासाधारण्यं दोषाय तथापि सत्प्रतिपक्षोन्नयनौपयिकसाध्यव्यापकत्व-ग्राहकप्रमाणाभावे तात्पर्य्यम् । तदयं निष्कर्षः यत्र यद्दोषोन्नायकतया दूषणत्वमुपाधेस्तत्र तदुन्नायनौपयिकरूपवैकल्य-मेवाभासत्वे प्रयोजकम् एवञ्च यत्र स्थापनायां पक्षताव-च्छेदकसामानाधिकरण्येन साध्यसिद्धिरुद्देश्या तत्र पक्षा-व्यापकविपर्य्ययस्याभासत्व तद्विरहेण पक्षैकदेशे सत्प्रति-पक्षेऽप्येकदेशान्तरे साध्यसिद्धेरप्रत्यूहत्वात् यत्र तु पक्षताव-च्छेदकावच्छेदेन तथा तत्र तादृशस्योपाधित्वमेव एकदेशे प्रतिपक्षस्यापि तादृशसिद्धिविरोधित्वात् साध्यविपर्य्ययस्या-सत्त्वमनुपाधित्वे प्रयोजकं न त्वज्ञातमज्ञातस्यापि तस्य व्याप-कव्यतिरेकेण सिद्धिसम्भवात् । अथ सिद्धसाध्यविपर्य्ययत्वेन चाभासत्व व्यभिचारोन्नायकतया दूषकत्वपक्षे विनापि साध्यप्रसिद्धिं प्रत्येकपदार्थप्रसिद्धेरेव घटो नाभिधेय इत्यादि प्रतिज्ञापत्ते व्युत्पादयिष्यते च तत्र प्रतिज्ञाविरह. व्यापका-भावेनाप्रसिद्धेरेव व्याप्याभावस्य सिद्धम्युपगमात् पूर्वसाधन-व्यतिरेकत्वन्तु नोपाधित्वेन नाप्यनुपाधित्वेन नियत वह्निना धूमस्य स्थापनायां प्रतिहेतावार्द्रेन्धनाभावे वह्न्यभावस्योपा-धितापा धूमाभावस्य चार्द्रेन्धनाभावेन स्थापनायां प्रतिहेतौ वह्न्यावार्द्रेन्धनस्यानुपाधितायाश्च प्रसङ्गात् परन्तु पूर्वसाधन-

व्यतिरेकस्य प्रतिरुहितावुपाधित्वेनोद्भावने सत्प्रतिपक्षमात्रसु च्छिन्ने सर्वत्रैव तत्सम्भवात् आभासत्वेऽपि व्यापनाश विशेषापरक्षदशायामेव सत्प्रतिपक्षोपन्यासात् वस्तुत साध्या व्यापकस्यापि पूर्वसाधनव्यतिरेकस्य तदानीं तत्त्वेनापक्षा दुपन्यासासम्भवात् अतो यत्नतस्तरानुकूलतर्कं विना पूर्व साधनव्यतिरेको नोपाधित्वेनोद्भाव्य इति कथकसमयवशा देवासावुपाधित्वेन नोपन्यस्यत इति। यथाकृत्स्नेति कादाचित्कत्वेन सकर्तृकत्वव्यापनायामन्यत्वे प्रतिहेता विपर्यय।

अनुमिति मनपेक्षकार्यानुकूलतासङ्गत्या पक्षधर्मतां निरूपयितुमाह व्याप्तेति। सन्दिग्धेति। यत्र साध्यस्य यादृशसम्बन्धावगाहिनिर्णयनिवर्त्यो य संशयस्तत्र स तादृशसम्बन्धेन साध्यानुमितौ पक्षतेत्यर्थं तेन न पक्षसाध्य विशेष्यकसंशयानसुगमो न वा सम्बन्धान्तरेण सन्देहेऽपि निर्णीतसम्बन्धेन पक्षत्वम् न वा तत प्रभृतिषु समवायेनाका कागादिसाधने तदेकत्वम्। मन्नययोग्यतां निरस्यति नापीति साधकबाधकमाने सिद्धिबाधौ केवलान्वयिनि च पक्षमित्वाभावप्रतियोगित्वधीरेव सुलभोऽबाध । ननु तत्रापि पुनरनुमित्सा तत परामर्शानन्तर स्मरणात्मकाद्धा परामर्शा दनुमीतिष्टसाधनताविषयकादनुमित्सा ततोऽनुमितिरिति फलबलात्कल्पनीयमित्यत आह सिषाधयिषेति तथानुमिति जनिकेच्छैव पक्षता सा च क्वचित्स्वनिष्ठैव सर्वत्रेश्वरनिष्ठैव

सुलभेति वाच्यं तस्यानित्यत्वेन सिद्धौ सत्यामपि पक्षता प्रसङ्गात् न च तस्यास्तदानीं न तज्जनकत्वं तद्धि न तद्योग्यता अनपायात् न च तदुपधानम् अनुमितेः पूर्वं तदभावात् न च तत्सामग्रीसमवधानं कारणमात्रस्य पक्षता-कुक्षिनिक्षेपप्रसङ्गाच्छेषवैयर्थ्यात् तदानीं सामग्रीविरहप्रयोजकव्यतिरेकप्रतियोगिनः कारणस्य वक्तव्यत्वापाताच्च। सिषाधयिषेति यत्रानुमित्यानन्तरं साध्यतद्व्याप्यवत्त्वविशिष्ट-पक्षस्मरणम् अनुमितीष्टसाधनताविषयकतादृशस्मरणाद्वा अनुमित्या अनुमित्यापूर्वकालोत्पन्नविशेषणस्मरणाद्वा अनुमित्याकालोत्पन्नेन्द्रिय-सन्निकर्षसहितात्साध्यतद्व्याप्यविशिष्ट-पक्षप्रत्यक्षं तदनन्तरञ्चानुमितिस्तत्र पक्षतासम्पत्तये सहकृतान्तं साधकमानविशेषणम्। सिषाधयिषा च तत्साध्य-विशिष्टतत्पक्षविषयत्वप्रकारिका अनुमितिविषयिणीच्छा यत्किञ्चिद्गोचरं ज्ञानं जायतामितीच्छायामपि सिद्धिसत्त्वेऽनुमित्यनुत्पादात् अनुमितित्वाप्रकारिकायामपि प्रत्यक्षा-द्यतिरिक्तं पर्वते वह्निज्ञानं जायतामितीच्छायां प्रत्यक्षाद्य-नन्तरमनुमित्युत्पादाच्च यादृशयादृशेच्छासत्त्वे सिद्धौ सत्या मनुमितिस्तत्तदिच्छाभावसमुदायस्य विशेषणत्वादिच्छाया अननुगमेऽपि न क्षतिः धूमेनानुमिनुयामितिच्छायामालोक-परामर्शादसत्यामपि सिद्धौ यदि नानुमितिस्तदान्यमात्र-लिङ्गकानुमितीच्छा कामिनीजिज्ञासादिवत् पृथक् प्रति-बन्धिका यदि च तत्रानुमितिस्तदा सिद्धिरूत्वे तत्रानुमिते-

धारणाय तल्लिङ्गिकानुमितीच्छा तदन्यमात्रलिङ्गकानुमिती च्छातिरिक्तानुमितीच्छा या वाच्या लिङ्गविशेषेणापि च नियम्यित पक्षत्व तल्लिङ्गकानुमितौ सिद्धिकालीना तल्लि- ङ्गकानुमितीच्छा विरहविशिष्टान्यलिङ्गकानुमितीच्छैव या प्रतिबन्धिका सध्रकमानं साध्यत्वनियय पाषाणमयत्वा दिना पर्वते तेजस्त्वादिना च वह्नौ सिद्धावपि पर्वतत्वेन तत्र वह्नित्वेन च तस्यानुमितेर्धर्मित्वसाध्यत्वयोरवच्छेदकावनु प्रवेशनीयौ यदि च पर्वतत्वसामानाधिकरण्येनैकत्र साध्य सिद्धावपि विनानुमित्सामन्यत्र तादृशानुमितिरनुभविकी तदा धर्मिविशेषोऽपि निवेश्यो नान्यथा पक्षतावच्छेदकस्य सामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमिति दर्शनात् पक्षतावच्छेदकावच्छेदेनानुमिति प्रति तदवच्छेदेन सिद्धेस्तत्सामानाधिकरण्यमात्रेणानुमिति प्रति तु सिद्धि मात्रस्य विरोधित्वम् इत्यच लिङ्गभेदन्यायोऽनुसरणीय साध्यविशेष्यकसिद्ध्यनन्तर पक्षविशेष्यकानुमिते' प्रामाणिकत्वे तां प्रति पक्षविशेष्यिकैव सिद्धिर्विरोधिनी एवञ्च पक्षविशेष्यक सिद्ध्यनन्तरमपि साध्यविशेष्यिकानुमितिर्जायते तुल्यन्यायात् समानाकारायाः सिद्धेः प्रतिबन्धकत्वे पर्यवसानात् तादृशा नुमितिं प्रति सिद्धिमात्रं विरोधिसाध्यप्रसिद्धिरेव वा अतएव प्रसिद्धसाध्यकस्थले पक्षविशेष्यिकैवानुमितिरनुभूयत इति अथ च व्याप्तिस्मरणादिना पूर्व्वानुमित्सानाशे परामर्शकाले च सिद्धिसत्त्वेऽनुमित्सान्तरोत्पत्त्यैवानुमितिस्तथैव कारणीभूतस्य

विशिष्टाभावस्य सम्पत्तिरित्युपाध्यायाः । अन्ये तु द्वित्रिक्षणा-न्तरितायामप्यनुमित्सायामनुमितिदर्शनात् अनुमित्सायो-ग्यता वाच्या सा च न स्वोत्पत्त्यनन्तरं स्वविषयसिद्ध्यनु-त्पादः अनुमित्सानन्तरमन्तरानुमित्यनुत्पादे दिवसादि-विलम्बेनेन्द्रियादिना निर्णीतेऽपि साध्ये लिङ्गपरामर्शादनु-मितिप्रसङ्गात् किन्त्वनुमित्सानन्तरं लिङ्गदर्शनादिक्रमेण यावता कालेनोत्सर्गतः परामर्शो जायते तावानेव कालः फलबलेन तथा कल्पनात् अथवानुमित्सोत्पत्त्यनन्तरमनुमि-त्सानाशेऽपि सिद्धौ सत्यां यावत्कालमध्येऽनुमितिर्जायते तावानेव कालोऽनुमित्सयोपलक्षितः यदि च सिद्ध्यनन्तरं तन्नाशेऽपि द्वित्रिक्षणमध्ये विनानुमित्सामनुमित्यनुत्पादोऽनु-भवसिद्धस्तदा सिद्ध्यापि तावानेव समय उपलक्षणीयः विशिष्यलक्षणनियमस्त्ववहितैः करणीय इति वदन्ति । अत्र च यत्र साध्यनिर्णयेच्छानन्तरं पूर्व्वोक्तन्यायेन साध्यतद्व्याप्य-विशिष्टपक्षस्य प्रत्यक्षं स्मरणं वा यत्र वा साध्यतद्व्याप्यधर्म्म-तादृशव्याप्यधर्म्मान्तरविशिष्टपक्षस्य तत्पक्षकसाध्यतद्व्याप्यव-त्त्वानुमित्योरिष्टसाधनतायाश्चैकं स्मरणं ततस्तयोरनुमित्सा ततः साध्यतद्व्याप्यवत्त्वानुमितिस्तत्र तदनन्तरमनुमिति-प्रसङ्गः योग्यताविवक्षणे तु सुतरामेवेति तदिच्छाविषय-सिद्ध्यनुपहितत्वं तद्विशेषणं पक्षसाध्यभेदेन च पक्षताया भेदात् पृथक् पृथगेव कार्य्यकारणभावः तथाच यत्र सिद्ध्यनन्तरं कदाप्यनुमितिर्न जाता तत्र सिद्ध्यभावमात्र

तदुपहित तत्सामग्री वा नाद्यः चक्षुरादिमत्त्वे विनानुमितीच्छामनुमित्यभावप्रसङ्गात् न द्वितीयः सिद्धेः पूर्वं तदुपहितत्वाभावेन प्रत्यक्षसामग्रीसत्त्वेऽप्यनुमित्यापत्ते. अनुमानातिरिक्तेत्यस्य वैयर्थ्याच्च न तृतीयः अनुमितिसामग्र्यभावत्वेन प्रत्यक्षकारणत्वम् अनुमित्साविरहविशिष्टप्रत्यक्षसामग्र्यभावत्वेन चानुमितिकारणत्वमित्यन्योऽन्याश्रयात् स्थाणुत्वाभावव्याप्यदर्शनक्षणे प्रतियोग्यारोपविरहेणाभावप्रत्यक्षसामग्रीविरहात् पक्षतासत्त्वे स्थाणुत्वारोपक्षणे तदभावानुमित्यापत्तेरित्यपि कश्चित् वस्तुतस्तु स्वतन्त्रान्वयव्यतिरेकशालित्वान्नियमेन प्रथममुपस्थितत्वाल्लाघवाच्च प्रत्येकमेव तथात्वमन्यथा बाधादेरप्यतथैवान्तर्भावप्रसङ्गात् न चानुमित्साविरहस्य प्रत्येकं विशेषणत्वे गौरवं शाब्दसिद्धौ सत्यामशाब्दं ज्ञानं जायतामितीच्छायामनुमितेरुत्पादात् सिद्धावनुमितिविषयेच्छाविरहस्य प्रत्यक्षसामग्रीसत्त्वे च तादृशेच्छायामनुमित्यनुत्पादात् साधकमाने अनुमितित्वादिप्रकारकेच्छाविरहस्य पृथगेव विशेषणतायास्त्वयापि वाच्यत्वात् स्वनिवर्त्तकप्रत्यक्षादिसामग्रीसमवहितान्यत्वादिना च तादृशेच्छयोरनुगमेऽतीव गौरवम् अन्यतरत्वघटकयोरन्योऽन्याभावयोर्मिथोविशेषणविशेष्यभावे विनिगमकाभावश्च आत्मनिष्ठस्य समवायेन सिद्धेरभावः भिन्नभिन्नेन च सम्बन्धेन तत्तदसाधारणकारणरूपायास्तत्सामग्र्याः मणिविशिष्टस्य वह्नेरिवेतरेतरविशिष्टस्य मनोयोगादेः प्रतिबन्धकत्वायोगात्

तथा च कथमनुगतरूपेण तयोरभाव कारणम् एव सिद्धे सिषाधयिषाविरहेण वैशिष्टामेककालावच्छेदेनैकात्मवृत्तित्व प्रत्यक्षादिकारणवत् मनोयोगादेस्तन्यादनुमितिसामग्रीविरो धाभावस्य हेतुत्वेऽपि लाघवात् सिद्ध्यभाव एव पक्षव्यवहार निमित्तम् एतदेवाभिसन्धाय प्रकृतिनिमित्तमुक्तमिति वक्ष्यति तस्मादुपस्थितसिद्धौच्छाविरहविशिष्टसिद्ध्यभावापे चया बाधाभावस्य लघुत्वेऽपि सिद्धसाधनस्थलपक्षव्यवहार विरहेण तादृशसिद्ध्यभावस्यावश्यकत्वे बाधाभावो न निवि शते गौरवात् विशिष्टसिद्ध्यभावस्य चात्मनिष्ठस्यैवानुमितिहेतु त्वेऽपि तस्य परम्परासम्बन्धादेव पर्वतादौ पक्षव्यवहार इति ध्येयम् एकस्य पुंसोऽनुमित्सासत्त्वेऽपि अन्यस्य तद्विर हेण प्रत्यक्षादिसामग्रीसत्त्वेऽनुमित्यनुत्पादात् तत्पुरुषी यानुमितिं प्रति तत्तत्पुरुषीयानुमित्साविरहकालीनतत्त त्पुरुषीयसिद्धिसामग्र्योर्विशेषविरहेऽनन्यगतिकत्वेन हेतुरू पेतत्र इति वदन्ति । अथ सिद्ध्युत्तरानुमितौ सिषाधयिषा हेतुरस्तु नचैव मण्यादिस्थलीयदाहं प्रत्युत्तेजकस्य हेतुत्वा पत्ति उत्तेजकानामननुगतत्वात् तावदभावविशिष्टमण्याद्य भावस्य चानुगतत्वादिति चेदिहापि दर्शितोऽननुगम सिषा धयिषाया सिद्ध्युत्तरानुमितित्वस्याननुगतानतिप्रसक्त दुर्वचं सिषिद्धिषितिकालीना स्वेतरसिद्धिकालीना चानुमितिं प्रति हेतुत्वकल्पने च विनापि सिषाधयिषां सिद्धिनाशकालेऽनु मित्युत्पादोदुर्वार एकस्य च पुंस सिषिद्धिसत्त्वेऽन्यस्य सिषा

धयिषाशून्यस्यानुमित्यनुत्पादप्रसङ्गः तत्तत्पुरुषीयतादृशा-
नुमितिं प्रति सिषाधयिषाया हेतुत्वेऽनन्तकार्य्यकारणभाव-
प्रसङ्गः अपि च सिद्धौ सत्यां विनापि सिषाधयिषां सामान्य-
सामग्रीतोऽनुमितिसामान्योत्पत्तिप्रसङ्गात् न हीदृशविशेष-
सामग्रीं विना सामान्यसामग्र्या अनुमितिजनकत्वं नास्ति
न चान्यत्रापि तद्विशेषसामग्र्यन्तरमस्तीति तत्कल्पने चाति-
गौरवम् इह जायमाना सा सिद्ध्युत्तरैव स्यात् सा च न
जायते कारणाभावादिति चेत् समाजनिष्ठानुमितिसामा-
न्यन्तु स्यादेव कार्य्योत्पादविरहस्य विना कारणाभावमस-
म्भवात् करणव्यापारत्वेनावश्यककारणभावस्य परामर्शस्य
कारणतावच्छेदिका पक्षता न कारणमिति तु भ्रमः प्रति-
बन्धकान्तराभाववदन्वयव्यतिरेकशालित्वेन हेतुत्वात् अ-
न्यथा यथासम्भवनिमित्तकारणस्य समवायिकारणत्वाद्यव-
च्छेदकत्वप्रसङ्गात् अथानुमितिसाधारणसिद्धेः प्रतिबन्ध-
कत्वे तदभावस्य मण्याद्यभाववत् प्रतिबन्धकाभावत्वेन
कार्य्यकालवृत्तेरेव हेतुत्वात् अनुमितिकाले च तदसम्भवात्
सा नोत्पद्येतेति चेन्न यस्य मण्याद्यभावादेः कार्य्यसमकाल-
तयान्वयव्यतिरेकित्वं तस्यैव तथात्वेन हेतुत्वं नतु सर्वस्य
गौरवात् अन्यथा समवायिकारणस्य कार्य्यसहभूतस्यैव हेतु-
त्वात् कारणमात्रस्य तथात्वप्रसक्तौ प्राभाकरा एव विजये-
रन्निति। प्राभाकरास्तु विनाप्यनुमित्सां क्वचित् परामर्शा-
नुमितिप्रवाहस्याविरलतन्नस्यानुपविकत्वात् कालभेदकल्प-

नायाञ्च मानाभावात् मानाभावाश्च पक्षता नानुमिति हेतु परार्थानुमाने तु सिद्धसाधनमर्यादारविधया दृषण मित्याहु ।

नवणोपोद्घातेन विशिष्टज्ञानस्य कारणत्वं व्यवस्थापयति पक्षेत्यादि । व्याप्तिस्मरणेति स्मरणत्वमविवक्षितम् अव्याप कत्वात् लाघवात् । प्रथमोपस्थितत्वलाघवात् । कल्पना-लाघवमाह परामर्शेति परामर्शहेतुत्वादिनाप्यनुमित पूर्वं तादृशज्ञानमवश्य मन्तव्य तथाचातिरिक्तधर्मिण स्तत्राभन्ययाभिद्धत्वमियतपूर्ववर्त्तित्वयोश्च कल्पनामपेक्ष्य उ भयवादिसिद्धनियतपूर्ववर्त्तिनोऽनन्यथासिद्धत्वमात्रकल्पनाल घोयसीति । ननु धूमत्वावच्छेदेन व्याप्तेरालोकत्वेन च पक्ष धर्मताया ग्रहेऽप्यनुमिति स्यादियत आह एवमिति यद्ध र्मावच्छेदेन व्याप्तिज्ञानं तेनैव रूपेण पक्षधर्मताज्ञानं हेतु रिति नातिप्रसङ्ग ज्ञानद्वयादिति द्वित्वमविवक्षितं लाघ-वात् अवच्छेदकलाघवात् भावप्रधानत्वात् व्याप्यतावच्छे दकप्रकारकव्याप्तिज्ञानस्य हेतुत्वे व्याप्तिज्ञानहेतुताया भाव प्रकत्वात् । क्वचिदुपजीव्यत्वादिति पाठ उपजीव्यत्वञ्च व्याप्ति ज्ञान विना यद्धर्मावच्छेदेन व्याप्तिज्ञानं तत्प्रकारकपक्षधर्म ताज्ञानस्यासम्भवात् एवञ्च सिद्धे व्याप्तिज्ञाने हेतावतिप्रसङ्ग-भङ्गाय पक्षधर्मताविषयत्वमवच्छेदक कल्प्यते लाघवात् नतु कारणान्तरं गौरवादिति भाव । सिद्धस्य व्याप्तिज्ञानस्य न पक्ष धर्मताविषयत्वमित्याशयेनाह तस्येति । यद्वा व्याप्यत्वज्ञान

मिति व्याप्यत्वप्रकारकं पक्षधर्म्मताज्ञानमित्यर्थः। ननु विशिष्टज्ञानान्यथानुपपत्त्याज्ञानद्वयस्यावश्यं वाच्यतया तस्यैव हेतुत्वं युक्तं तदिदमुक्तमावश्यकत्वादित्यत आह उपजीव्यत्वादिति विशिष्टज्ञानान्यथानुपपत्त्या तत्कल्पने विशिष्टज्ञानस्योपजीव्यत्वादित्यर्थः। स्वसम्वेदनसिद्धमेव ज्ञानद्वय आवश्यकत्वञ्च तस्योभयवादिसिद्धमित्याशयेनाह तस्येति। असिद्धिं परिजिहीर्षुराशङ्कते अथेति अत्र पक्षवृत्तिः हेतुरिति लाघवादिति शेषः। अनुमितिसामग्र्या इति स्मृतिहेतुतावादिनां नव्यानां नये दूषणमिदं नतु संस्कारकारणतावादिनां प्राचामिति। अथेत्यादि अत्र यत्र प्रथमं पक्षाग्रहे गृहीतधूमे स्मृतव्याप्तिवैशिष्ट्यभानसनन्तरञ्च गृहीते पक्षे तादृशविशिष्टधीस्तत्रेत्यपि द्रष्टव्यम्। प्रथमत इति विशिष्टज्ञानात् पूर्वमनुमितिसामग्रीविरहप्रदर्शनाय। एवञ्च सिद्धे पूर्ववर्त्तिनि विशिष्टज्ञाने तस्यैव तत्त्वेन हेतुत्वं गुरुधर्म्मद्वयावच्छेदेनान्यथासिद्धत्वकल्पनामपेक्ष्य लघ्वेकरूपावच्छेदेन नियमान्यथा सिद्धिकल्पनाया एव न्याय्यत्वात् गृह्यमाणव्याप्यवच्छेदकताकधर्म्मप्रकारकपक्षधर्म्मताज्ञानत्वेन पक्षधर्म्मताग्रहप्रकारीभवद्धर्म्मावच्छिन्नव्याप्तिज्ञानत्वेन वैकरूप्येण कारणत्वे चातिगौरवात् विनिगमनाविरहाच्च तवापि न नियतपूर्ववर्त्तित्वं कल्प्यमित्याह यत्र चेति। तेन विनेति तथा च व्यभिचारात्कारणत्वं बाधितमितिभावः। स्वतो व्यभिचारं निरस्यति अस्मदुक्तेति। अनवस्थानादिति। न च

धूमालम्बनसन्निकर्षे सत्यस्मिन्धूमस्य वह्निव्याप्यत्वमिति निष्ठविशेष्यक परामर्शात्वस्मनुमितिसम्भव धूममात्रसन्नि कर्षेऽपि तत्र यन्नानुमानात् सत्यस्मिन्त्विव्हत्वमवैशिष्ट्या नकविरहात् समाधारणमिति शरीरादिषुष्टाम धामाकादि पारणाय प्रमाणान्तरमारूढागेति वाच्य तदपि प्रमाणा न्तर भयाक्षेव प्रत्यक्षादिप्रमाकरणत्वेन च विभागान् तथा पात इत्यपि कश्चित् । यद्वा समाधारणमसमञ्जसं तथा च यज्जातीयप्रमायां समोऽन्यकरणेनासमवहित सत् यदसि न्निषयकप्रमोत्पादक यज्जातीयप्रमासामग्रीघटितं वा यत्प्र मोत्पादक तत्तदिजातीयप्रमाकरणिगियेव व्याप्ति तत्र नि- दायां विलक्षणमनायां विलक्षणे च सस्कारणे कल्पनोपि न्याय ग्यफलत्वादाधकाभावाश तर्हि तथात्व पर्यवस्यतीति । संशय न्वर्यै च न विशिष्टानुभवरूपो येनोपनयादिवशाद्विधिपया नभयजनकं स्मृतनिक्षेन ममता न्यायवशाट प्रमेय तदभावा दिवशात् प्रमापि जन्यितव्येत्याशङ्क्ष्येत किन्तु धर्मिणाम काटिस्मरणादिरूपो धर्मिज्ञानं पुनरनुभवरूप यथामङ्गल मनाटे स्मरणस्य सस्कारादित्याशयेनाह संशयेति । व्या- प्यत्वानुमानादिति धूमत्वादौ वह्न्यादिव्याप्यत्व जा नतो धूमत्वादिना तद्वत्त्वनिश्चयदशायामन्यदात्मसगो पपाद्येति । अतीन्द्रियादौ लिङ्गे व्याप्यत्वप्रकारकज्ञान स्यासम्भवेऽप्यनुमितेः सर्वानुभवसिद्धतया तस्य कारणत्वे बाधित पनिगेपादुर्गमपि व्याप्यत्वावच्छेदकप्रकारकज्ञानस्य हेतुत्वे

सिद्धे प्राग्व्याप्यवत्तावोधस्थलेऽपि तत्कल्पने कारणं विना कार्य्योत्पत्तेरसम्भवात् तेन च विना तत्रानुमितेरसिद्धत्वान्न तस्यापि हेतुताबाधः तत्रातीन्द्रियलिङ्गादौ सर्व्वानुभवसिद्धाया अप्यनुमितेः सर्वथैवापलाप' मम तु क्वचित्कालविलम्बादिमात्रकल्पनमित्याशयवानाह अतएवेति तुल्यमित्यभ्युपगमवादः यत्र यदवच्छिन्ने यथाहि तदभावेन तदभावव्याप्यतया गृहीतेन वा विशिष्टेन तत्संशयः तथा यदवच्छेदेन तद्व्यावर्त्तकधर्म्मदर्शनं तद्विशिष्टेऽपि अनुभवबलाद्यावर्त्तकञ्च तदभावो यदवच्छेदेन वा तदभावोऽवगतो यो वा तदभावव्याप्यत्वेन गृहीतः यथा स्थाणुत्वाभावस्य पुरुषत्वावच्छेदेन ग्रहे पुरुषत्वस्य स्थाणुत्वाभाव व्याप्यत्वेन गृहीतस्य करादेर्वा इदन्त्वावच्छेदेन ग्रहे पुरुषोऽयं स्थाणुर्नवेति न संशयः तदभावादिवच्च तद्दन्योऽन्याभावादिस्तादात्म्येन संशये च तदन्योऽन्याभावादिरपि द्रष्टव्यः एवं न तद्भ्रमोऽपि विशेषदर्शनस्य विपरीतज्ञानमात्रविरोधित्वादित्यग्रे व्यक्तीभविष्यति। नन्वित्यादि इदं नीलत्वेन प्रतीयमान भावोऽभावो वा भावत्वाभावत्वयोस्तत्त्वयोरित्यर्थः लिङ्गत्वाभावादप्रसिद्धत्वेन तत्त्वासम्भवात् भावत्वाभावत्वेत्यादिक केवलान्वय्यनुमानमतिरिक्तञ्चाभावमभ्युपेत्य केवलान्वयिनः साध्यस्य धर्म्ममात्रमेव व्याप्यमिति तु द्रष्टव्यम्। एवमिति लिङ्गं व्याप्यत्वे साध्ये लिङ्गतावच्छेदकं वा वह्नौ। यद्व्यतिरेकेति यत्संशयव्यतिरेकनिश्चयावित्यत्र व्याख्याततत्त्वमेतत् यद्वा

व्यतिरेकनिषये कार्य्यानुत्पत्तौ तद्यतिरेक...
कारणतामविरद तन्नियमस्यैव कारणत्व पुन...
भिप्रायकमिदम् अतएव कुप्तनियतपूर्वभावत्...
प्रतिभाव एवानुमिति हेतुरित्यभिप्रेत्याह देत्यादि...
सामान्यतो विशेषदर्शनात् सामान्यतो भ्रमो न...
विशेषतस्तु स्यादित्येत्यभिप्रायिकामाशङ्का निरस्यति ...
प्रस्तु वेत्यभ्युपगमवाद । नचेत्यादि प्रभेदज्ञानस्य...
भेदधरी न प्रतिबन्धको भवितुमर्हतीत्यर्थ । प्रभेदेति ...
चानथाभूतस्यापि प्रतिबन्धकत्वमनायत्या वक्तव्यमिति ...
प्रतथाभूतस्य सन्दिग्धत्ते व्यभिचारमाह तथापीति ...
प्रणाभरदाने चामर्योजकत्वमिति भाव । गोत्वे ...
प्रवत्तावच्छेदकत्वमविशेषितं विशेषित वा ...
मधुरत्वेति मधुरत्वव्याप्यो धर्मो जातिरखण्डोपाधिर्वेत्यन्ते
न विशेष । गौरितिज्ञाने गोत्वप्रकारकत्व विशेषणाय
स्याह अन्यथेति । व्यक्ते प्रकारत्वेऽपि लिङ्गतावच्छेद...
प्रभवादाह गवेतरेति गोत्वस्याताप्रवेशायासामाय...
यथा साध्य गवेतरासमवेतत्वादिकमेवोपादेय ...
व्यभिचारवारणाय समवायेन सम्बन्धेन हेतुत्वस्याव...
विनाभावादिसाधारण्येऽप्यदोषात् व्यतिरेकेऽपि ...
सम्बन्धान्तरेण च गोत्वाभावस्यापि व्यभिचारितया गवेतरा
समवेतत्व तत्त्वेन समवायसम्बन्धेनाभावस्यैव गमकत्वात् ।

लिङ्ग लिङ्गतावच्छेदक तथाच न व्यभिचार ...

न तेन व्यभिचारवारणम्। नह्वीति धर्मान्यान्यत्वमिति दृष्टान्तार्थं न चैकधर्मस्यावच्छेदकत्वापेक्षया धर्मद्वयस्य तत्त्व एव गौरवमिति वाच्य तादृशैकधर्मघटकानेकभेदादिघटकतया धर्मद्वयस्यैव प्रथमोपस्थितत्वेन चावच्छेदकत्वौचित्यात् अन्यथा वह्न्यादीनामपि व्याप्यतया तावदन्यतमत्वस्यैवावच्छेदकत्वं स्यात्। अन्वयेति विशेषदर्शनं हि विपरीतज्ञानविरोधितया प्रत्यक्ष उपयुज्यते तत्त्वञ्चान्यतरत्वदर्शनस्यापि व्यावर्त्तकधर्मदर्शनत्वेनाक्षतम् अत्र च तदन्यान्यत्वस्यातिरिक्तत्वे धूमत्वत्वादेस्तद्वृत्तित्वात् धूमत्वादिरूपत्वेऽपि च धूमत्वत्वादेरप्रवेशाल्लिङ्गत्वेऽपि न वैयर्थ्यमित्यपि द्रष्टव्यम् एवञ्चान्यतरत्वस्य व्याप्यनवच्छेदकत्वे स्थिते तदवच्छेदेन तद्ग्रहोपगमे तवाप्यन्यथाख्याति स्वीकारप्रसङ्गः। अस्तु वा गुरुरपि धर्मोऽवच्छेदकस्तथापि शुद्धव्याप्तिप्रकारकज्ञानस्थले व्यभिचारान्न तस्य हेतुत्वमित्याह किञ्चेति। वह्नीत्यादि व्याप्तेर्व्याप्यनवच्छेदकत्वादिति भावः। मानाभावादिति वस्तुतो विशेषव्याप्यवच्छिन्ना महाव्याप्तिरतिरिच्यताम् किं तेन न हि वस्तुतो व्याप्यवच्छेदकप्रकारक पक्षधर्मताज्ञानं हेतुरतिप्रसङ्गात् परन्तु यदवच्छेदेन व्याप्तिर्गृह्यते तत्प्रकारकम्। न च तदानीं व्याप्यवच्छेदेन व्याप्तिर्गृह्यते न च तद्ग्रहेऽनुमितिरपलपनीया मानाभावात् कल्प्यत्वाविशेषे लघुरूपावच्छिन्नस्यैव नियतपूर्ववर्त्तितायाः कल्पयितुं युक्तत्वात् एतेन व्याप्तिग्रहविषयधर्मिमात्रवृत्तिधर्मप्रकारकं पक्ष-

र्मताज्ञान हेतुरित्यपास्त सामान्यलक्षणानङ्गीकारे धूम
वादेरपि तथात्वायोगात् वह्निव्याप्य सर्वं प्रमेय धूमवान्
र्वत इति ज्ञानादप्यनुमितिप्रसङ्गाच्च व्याप्तिसमानाधिकरण
त्वेन साध्यधर्मभासोऽपि च सा धूमव्यक्तिर्वह्निव्याप्येति ज्ञान
वह्निसाधनप्रमाणप्रसङ्गो वह्निव्याप्यवानिति ज्ञानामा
वच्च एतएव व्याप्यत्वभानेऽपि प्रकारतया यस्तादृशो धर्मो
भासते तत्प्रकारक पक्षधर्मताज्ञान हेतु वह्निव्याप्यवानि
त्यत्र च वह्निव्याप्यत्वमेव तथा धूमवानित्यादौ च धूमत्वादिक
धूमसमानाधिकरणेत्यादिव्याप्तिज्ञाने तस्यापि प्रकारत्वा
दिति परास्तम् । धूमसमानाधिकरणवह्निव्याप्य सर्वं प्रमेय
धूमवांश्चायं प्रमेयत्वव्याप्य सर्वमभिधेयं समानाधिकरण
वांश्चायमित्यादि ज्ञानादप्यनुमित्यापत्तेः । न च धूमत्वादे-
रतिरिक्तवृत्तित्वपक्षे स एव प्रतिबन्धकस्तद्रूपेणानुमितावि
ष्टापत्तिरिति वाच्यम् एवम्विधेष्टापत्त्यैव सर्वत्र प्रतीकारे विशे
षणानुसरणवैयर्थ्यात्, व्यभिचाराद्यग्रहपक्षधर्मताज्ञानयोरेव
हेतुत्वस्य सूपपत्वात् किञ्च पुरुषान्तरस्य तस्यैव वा काला
न्तरे वर्त्तमान व्याप्तिपक्षमादायातिप्रसङ्गस्य भङ्गाय स्वस-
मानकालीनस्वसमानाधिकरणव्याप्तिपक्षविषयधर्म्मिमात्रवृत्ति
धर्मप्रकारक पक्षधर्मताज्ञान वाच्यं तथा च स्वत्वस्या
ननुगतत्वात्कारणतावच्छेदकस्य तत्तद्व्यक्तिमात्रपर्य्यवसायित्वे
मिथो व्यभिचार तत्तत्पक्षधर्मताज्ञानत्वेनैव हेतुत्व सम्भ
वेऽधिकवैयर्थ्यं च एतेन दृश्यमाणव्याप्यवच्छेदकताकेत्या

द्युपदर्शितप्रकारद्वयमपि प्रत्युक्तं वेदितव्यं एवं यद्धर्मावच्छेदेन व्याप्तिज्ञानं तद्धर्मप्रकारकं पक्षधर्मताज्ञानं हेतुरित्यपि परास्तम् । तद्धर्मविश्रान्तमूर्त्तिकत्वेनाप्यननुगतत्वाच्च यत्रेच्छा तत्साधनताज्ञानस्येच्छाहेतुत्वेऽपि समानमिति चेत् सत्यं प्रतिवच्यते हि तत्र लघुगुरुरूपाभ्यां युगपदुपस्थितौ लघुरूपावच्छेदेनैवकारणत्वं कल्प्यते लाघवात् नियमादेरेकतररूपावच्छेदेनाप्युपपत्तेरित्याशयवानाह अपि चेति । ननु स्वसमानाधिकरणाभावे इत्यादिव्याप्तौ स्वपदार्थस्यैकस्याभावेन धूमादिकमेव विशिष्य उपादेयं तत्र च धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नवह्निसमानाधिकरणेन्धनवानयमिति ज्ञानादप्यनुमितिप्रसङ्गेन तादृशवह्निसमानाधिकरणधूमत्वं व्याप्तिस्तत्प्रकारकमेव च पक्षधर्मताज्ञानमननुगतमपि हेतुरिति वक्तव्यं तथा च यद्धर्मविशिष्टसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके गृह्यते तत्प्रकारकपक्षधर्मताज्ञानत्वेनैव हेतुत्वम् अयं वह्निव्याप्यवान् धूमो वह्निव्याप्योऽयं धूमवान् वह्निधूमव्यापकोऽयं धूमवानित्यादिसकलवित्तिव्यापकत्वात् न तूपदर्शितव्याप्तिप्रकारकज्ञानत्वेनाव्यापकत्वात् किञ्चान्यथाख्यातिवादिभिर्धूमादिसमानाधिकरणात्यन्ताभावाप्रतियोगिगगनसमानाधिकरणधूमादिमानयमिति-ज्ञानादनुमित्यङ्गीकारादखण्ड-व्याप्तेश्चाप्रसिद्ध-तया प्रकारकत्वासम्भवात् साध्ये साधनव्यापकत्वग्राहकमधिकर-

णार्द्धो च साध्यीयव्याप्यत्वगादि पक्षे च सादृश्यसाधनवत्त्वाय
गादि यज्ज्ञान तत्त्वेन कारणत्वबाध्य तथा च साधवा
सादृश्यव्याप्यत्वपक्षधर्म्मतावगाहित्वयोरेव कारणतावच्छेदक
त्वमस्त्विति गुरुरेधेव व्यापकमप्यपि व्याप्यत्वोमिलितोर्वा
परमतिरिच्यते यथा च सामानाधिकरण्यज्ञानस्य हेतुत्वेऽपि
न तन्निमाथा वक्ष्यते इति चेन्न तज्ज्ञानाव्याप्यतावच्छेद
कतावैत्यादिप्रकारद्वयोक्तदूषणप्रसंगात् पक्षतावच्छेदकाभाववद्वृ
त्तित्वधर्मवानयमित्यादिज्ञानादप्यनुमित्युदयाच्च व्यभिचार
ज्ञानविरोधिज्ञानविषयत्वेनैव व्याप्तीनामनुगमात् । नन्वत्र
कारणे कार्य्यमेव प्रमाणं तत्र कार्य्यकारणभावग्रहे सति
स्यात् सएव तु न सम्भवति गौरवज्ञानेन प्रतिबन्धादित्यत
आह कारणताग्रहेति कारणतानिश्चयं विना तत्फलस्य
धर्म्मान्तरनिर्णयस्याभावेन तद्घटितगौरवज्ञाननिर्णयादित्यर्थः
सम्भाव्यते तावदिह धर्म्मान्तरकल्पनं विना कारणत्वस्यैवा
ग्रहनिर्वाहकत्वादिति चेत् सम्भाव्यतां न तु तत्प्रतिबन्धक
सामान्यतः कार्य्यकारणभावग्रहस्य प्रायशोऽभिमतप्रसङ्गात्
तत्र तत्र स्व प्रनियतपूर्ववर्त्तितावच्छेदकरूपान्तरविरहेणा-
गत्या गौरवमप्यास्थीयते इति चेदिहापि तद्विरहस्याम
हदावेदितत्वादिति हृतं पल्लवितेनेति । व्यभिचारनिर्णयेन
कारणत्वग्रहासम्भव निरस्यति न चेति । अनुमानयोरिति
अनुमितैकसाध्यविशिष्टे साध्यान्तरानुमित्या सहचारग्रहोप-
गमेऽपि नियमांशग्रहासम्भवादिति भाव । नियतव्यापा

रेति एकसम्बन्धिज्ञानाधीनसम्बन्ध्यन्तरस्मरणादितः कचि-द्विशिष्टज्ञानोत्पत्तावपि नियतत्वेन न तस्य व्यापारत्वं य जनयित्वैव यस्य यज्जनकत्व तस्यैव तत्र तद्व्यापारत्वादित्यर्थः। वस्तुतस्तु तदुपनयव्यक्त्यादेस्तत्प्रमाव्यक्तिं प्रति कारणत्वेऽपि न क्षतिः प्रमावैजात्यस्यैवात्र प्रमाणान्तरनिमित्तत्वात् न चात्रापि प्रमावैजात्यमनुपलम्भबाधितत्वात् माना-भावाच्च उपनयस्य च विशिष्टज्ञाने विशेषणज्ञानत्वेन प्रत्यक्षे च सन्निकर्षविधयोपयोगितया जात्यव्यवस्थापकत्वात् अतएव वाह्यान्तरप्रत्यभिज्ञासादृश्याभावादिप्रत्यक्षाणां तत्तात्प्रति-योग्यादिविषयत्वमन्यथा जातिसङ्करप्रसङ्गात् ज्ञानद्वय-कल्पने च स्थैर्य्यमात्रमुच्छिद्येतव्यवस्थापितञ्च विशिष्टज्ञानस्य व्यवहारहेतुत्वम्। न च प्रमाणान्तरासहकृतोपनयजन्यता-वच्छेदकतया वैजात्यसिद्धि' इतरासहकृतत्वेनाजनकत्वात् असिद्धेश्च उपनयात्मकसन्निकर्षवशेन मनसा प्रत्यक्षजनन-स्यैवोपगमात्। पृथगिति न चैव धारावाहिकोच्छेद' इतर-मात्राविशेषणत्वेनोपस्थितेरेव तन्त्रत्वात् कोटिस्मरणस्य स-शयेन तस्य च व्याप्तिस्मरणादिना नाशात् विशेषदर्शनकाले च संशयायोगादाह न चेति। गौरवादिति न चैवमभाव-विशेषणत्वेनोपस्थितस्यापि भावस्य ग्रहापत्तिरभावग्राहक-सामग्र्या बलवत्याः प्रतिबन्धात् अभावाविशेषणत्वेनोपस्थि-तिस्तन्त्रमित्यपि कश्चित् वस्तुतः स्वतन्त्रविशेषणज्ञानस्य वि-शिष्टधीहेतुत्वेऽनुमित्यर्थमेव त्वयापि तत्स्वीकरणीयं न हि

वैशिष्ट्यावगाहि प्रत्यक्षं तथात्वे मानाभावात्। तर्कित्वादि
स्तुतौ यत्र क्वचिदपि गृहीतस्य धर्मिणि साधारणधर्मदर्श
नात् तत्तस्य संशयादिसाधारणो विशिष्टधीरित्यास्तु विशेषा
न्यकोटिद्वयसहचरितधर्मादर्शनात् कोटिद्वयस्मरणे संशयोऽ
न्यथा त्वेककोटिनिश्चय इति एतेन धूमत्वादिना पक्षधर्म
तामिमनुमाय वह्न्याद्यनुमितिरिति परास्तम् धूमत्वाद्यनुप
स्थित्या धूमत्वावच्छिन्नव्याप्तिस्मृत्यभावे दृष्टानुमिति
प्रसङ्गात् एतेन धर्मांशावच्छेदेन यस्य गृहीतमुपनयवशात्
तद्धर्मविशिष्ट एव तद्धर्मिणि धूमवत्त्वावच्छेदेन च वह्निमत्त्व
पक्षाद्धूमवानेव वह्निमानिति बुद्धिः स्यात् न तु पर्वतो
वह्निमानित्यपि परास्तं मानाभावात् धर्म्यंशावच्छेदेन
गृहीतस्य सौरभादेः पुरोवर्त्तिनि चन्दनत्वादिदर्शनादिना
सुरभि इत्यादिबुद्धौ व्यभिचाराच्च यदि धर्म्यवच्छेदकत्व
वैशिष्ट्यमपि तत्र भासत इति नियमोऽपि तत्र प्रामाणिक
स्तदा धूमवानयं पर्वतो वह्निमानित्येव धीरस्तु न हि लिङ्गो
पधानभाने बाधकमस्त्यसाधकत्वविरहात्। हेतुसाध्येति सम्ब
न्धिद्वयनिरूप्यपदार्थप्रत्यक्षं प्रति सम्बन्धिद्वयप्रत्यक्षस्य हेतु
ताया संयोगादिस्थले त्वयैव क्लृप्तत्वात् तदभावेऽपि सा
ध्यघटितमूर्त्तिकव्याप्तिप्रत्यक्षस्य साध्यप्रत्यक्षसामग्रीं विना
सम्भवादिति भावः। विशेषणेत्यादि विशेषणविशेष्यसम्बन्ध
स्तदंशे प्रमात्वे लौकिकत्वे वा विशेषदर्शनस्य विपरीतज्ञान
प्रतिबन्धकतया क्वचित् क्वचिद्व्यभिचरितधर्मदर्शनात्तेन विशेषण

स्मारकतया विशेषणस्य च ज्ञानसत्त्वेऽप्यतिरिक्तसन्निकर्ष-स्तदंशे लौकिकतायामुपयुज्यते। एकैव ह्येति वस्तुतो व्या-प्तिभेदेऽपि न चतिः सामान्यतो व्याप्तित्वेन गृहीतानां सकलव्याप्तीनां तथैव स्मरणसम्भवात् वह्नेरसन्निकर्षादिति। ननूपनयात्मकसन्निकर्षेणैव नयनेन निरूप्यतां हुताशनो न हि वह्निरिन्द्रियेण द्रव्यसाधेयतया तद्वत्त्वस्य वा ग्रहे तत्स-योगो हेतुः दण्डी पुरुषो नास्तीत्यादौ व्यभिचारात् कथमन्यथा पक्षधर्मे वह्निमत्त्वगर्भिता व्याप्तिरेव गृह्यते न चाधेयतया मुख्यविशेष्ये साक्षात् द्रव्यग्रहे तत्संयोगो हेतुः अभेदारोपे च नाधेयतया रजतादिकं प्रकारो दण्डाद्यात्मकतत्तावगाहि-प्रत्यभिज्ञायाञ्च तत्तावदभेदो भासत इति न दण्डादेः साक्षा-त्प्रकारतेति वाच्यं मानाभावात् धूमवान् वह्निमानिति सामान्यलक्षणया ग्रहे व्यभिचारात् तत्तासंसर्गस्यापि प्रत्य-भिज्ञायां भानसम्भवात् प्रकृतेऽपि वह्निमदभेदग्रहणेव कृतार्थ-त्वाच्च एतेन तत्ताकारानुपनीततादृशद्रव्यग्रहे स हेतुरिति निरस्तं चैत्रपदवाच्योऽयमित्यादिवत् दण्डग्रयमासीद्दयं दण्डी-त्यादिग्रहस्यानुभविकत्वात् तत्तात्वस्यातिरिक्तस्याभावात् त-च्छब्दप्रयोगजननाभावस्य च निमित्तान्तरविरहप्रयुक्तस्य जन्य-तानवच्छेदकत्वात् तज्जननयोग्यतायाः प्रकृतेऽपीष्टत्वात् अतएव तदिन्द्रियग्राह्यविद्यमानद्रव्यस्य तेन ग्रहे तत्संयोगो हेतुरिति परास्तम् नयनादिनारजतादेरभावग्रहाभेदारो-पादौ व्यभिचाराच्च अथैवं व्यवहितदण्डे पुंसि न कथं

मायनोऽस्त्वीति नियम इति चेत् क्वचित्तत्सहचरितधर्मा
दर्शनात् तदस्मरणात् क्वचिच्च साधारणधर्मदर्शनादिना
संशयस्यैव जननात् सति च विशेषदर्शनादावपि तत्त्वात्
युक्तं चैतत् कथमन्यथा दण्डी न वेत्यादिकः संशयः न हि
नासौ तद्विशिष्टबुद्धिः न तन्निश्चय इति चेत् किं तेन उक्तं
हि संशयत्वं निश्चयत्वञ्च न जन्यतावच्छेदकमिति अस्तु वा
तथा तथापि विशेषस्यादर्शनात् संशयस्येव तद्दर्शनान्निश्चय
स्यापि सम्भवात् मा भूद्वा मायनादिरेव ज्ञातागमनादिनिर्णयो
मानसस्तु स्यात् तत्र तादृशनियमस्याश्रयस्य बाधितत्वादिति ।
उच्यते । अस्ति तावदनुमिनोमीत्यनुव्यवसायसाक्षिको
ज्ञानविशेषो यत्र कारणमन्वयव्यतिरेकाभ्यां व्याप्यपरामर्श
मानसप्रत्यक्षविशेषोऽसाविति चेत् कुतोऽस्य प्रत्यक्षत्वमनुभव
त्वादिति चेत् किमेतदनुभवत्वमन्यत् प्रत्यक्षत्वात् स्मृत्यन्य
ज्ञानत्वमिति चेन्न अप्रयोजकत्वात् अनुमितौ साक्षात्कारि
त्वप्रसङ्गाच्च तद्धटकलौकिकसन्निकर्षादिजन्यत्वविरहाच्च
तथैव चेदानुमितौ तस्यापि सम्भवात् वह्निमनुमिनोमि
न तु साक्षात्करोमीत्यबाधितसाक्षात्कारत्वाभावप्रत्ययाच्च अ
गत्या तु सौरभं न पश्यामीत्यादावन्यथात्वकल्पनं सामान्य
लक्षणानङ्गीकर्तृमते चाप्रसिद्धवह्न्यादिव्यक्तिकानुमितौ न
प्रत्यक्षत्वसम्भावनापि सन्निकर्षासम्भवात् एतेन शाब्दादिकं
व्याख्यातं व्यवस्थापयिष्यते तावदप्रसिद्धाभावसाध्यकानु
मितिर्न च साक्षात्कारिणी तदोपनयस्यासम्भवात् एवञ्च

त्वादिना क्वचिच्च साध्येन्द्रियसन्निकर्षात् परामर्शेऽपि न चतिः पक्षसाध्यसम्बन्धस्याग्रहात् ग्रहेऽप्यनुमित्साया अनुमितिसम्भवात्। व्यभिचारादिति न च यत्र यदुभयवैशिष्ट्यावगाहि ज्ञानं कारणं तत्र तदेकतरोपसर्जनस्यान्यतरस्य जन्यज्ञाने प्राधान्येन न भानमिति वाच्यं मानाभावात् अत्र चेदमस्वरसवीजं पक्षधर्म्मसमानाधिकरणाभावप्रतियोगित्वेनाभावज्ञानं वह्न्यादावभ्रान्तमसम्भविताद्दृशप्रतियोगित्वप्रतियोगिताकाभावावगाहि चातिप्रसक्तं पक्षधर्म्मधूमसमानाधिकरणाभावप्रतियोगित्वेन च तज्ज्ञानं न व्यापकं येन रूपेण पक्षधर्म्मताग्रहस्तद्रूपावच्छिन्नव्यापकताज्ञानञ्च मीमांसकमतनिरासेनैव निरस्तमिति स्वर्गकामो यजेतेत्यादावन्वयबोधं शब्दमणिदीधितौ विवेचयिष्यामः।

परिचायकत्वं परिचेयव्यावर्त्तकत्वं तच्च नोपलक्षणतयेत्याह परिचेय इति। विशेषणतया तत्त्वे पुनराह तथा-चेति। अवच्छेदकतामात्रेण चान्यथासिद्धावाह अन्यथेति। अपिचेत्यादि या यद्विशेषणसमानकालीनत्वेन तादृशी बुद्धिः सा ज्ञायमानतद्विशेषणजन्येति। सामान्यव्याप्तौ पक्षधर्मतासम्पत्तये धूमविशेषणिकेत्यादि ताद्रूप्यस्यानुभविकत्वप्रदर्शनाय च धूमवानित्यादिज्ञायमानेति च तज्ज्ञानस्यापि जनकत्वलाभाय साध्यविशिष्टानुमितेः साध्याजन्यत्वाद्विशेषणसमानकालतयेति धूमकालीनवह्निमान् धूमध्वंसादित्यनुमितेः मजधून्यत्वात् विशिष्येति विशिष्ये विशेषणभावापन्नं

यत्समानकालीनत्वेन धर्मान्तरवैशिष्ट्यावगाहीत्यर्थः तदानीं धूमवान् पर्वतो धूमकालीनवह्निमान् धूमध्वंसवत्त्वादित्यादौ च विशेषणे विशेषणतापन्नस्यैव धूमस्य समानकालत्वं वह्नौ भासते नतु विशेष्ये ऽपातापन्नस्य अनुभवसिद्धोऽयं विशिष्टवैशिष्ट्ययुद्धीनां विशेषणताविशेष विशेषण धर्म्मितावच्छेदकं विशेष्यच विधेयम् तथाच विधेयतावच्छेदकावच्छिन्न यद्धर्म्मविशिष्टे तत्समानकालीनत्वेमावगाहते या अनुमिती बुद्धि सा तद्धर्म्मजन्येति पर्य्यवसितोऽर्थः धूमकालीनवह्निमानित्यादौ च विधेयतावच्छेदकधूमकालीनवह्नित्वावच्छिन्न न धूमकालीनत्वेन भासते परन्तु वह्नित्वावच्छिन्न धूमवानय धूमकालीनवह्निमान् पर्वतो वह्निमानालोकादित्यादौ च न धूमवत्त्वविशिष्टे धूमकालीनवह्निमत्त्वं भासते किन्तु तादृश विशिष्टपक्षतावच्छेदकवति वह्निमत्त्वं सम्बन्धमर्य्यादया यत्स मानकालीनत्वमवगाहत इत्यपि यदन्ति। अथवा विशिष्टत्य व्याहतत्त्वं तच तत्समानकालीनत्वग्रहाजन्यत्वं विशेषणविशेष्यपदे च धर्म्मद्वयमात्रोपदर्शके तथाचैकस्मिन् धर्म्मे यद्धर्म्मसमानकालत्वग्रहाजन्या या अनुमिती तद्धर्म्मसमानकालीनत्वबुद्धि सा ज्ञायमानतद्धर्म्मजन्येत्यर्थः एव न क्वापि व्यभिचारशङ्का साध्यस्य पक्षतावच्छेदकसमानकालीनत्व क्वापि नानुमितिविषयो मानाभावात्। नवीनमते तु कालादेः पक्षतावच्छेदकत्वे तदवच्छिन्नत्वं साध्यस्य भासत इत्यन्यदेतत् दण्डी पुरुषो गच्छतीत्यादिशाब्दधीवारणाय

अशाब्देति तुल्यन्यायतयोपनीतभानवारणाय तदन्यत्वमपि वाच्यमित्यपि वदन्ति एतन्नये चातीतत्वाग्रहेऽप्यतीतादि-लिङ्गज्ञानान्नानुमितिरिति नातीतलिङ्गकालीनत्वावगाह्य-नुमितौ व्यभिचारः कालोऽत्र वर्त्तमानो विवक्षितः तद्वै-शिष्ट्यांशे च प्रमात्वं वाच्यं वर्त्तमानत्वं वा तादृशधर्म्मविशे-षणमित्यपि कश्चित्। केचित्तु विशेषणं विशेष्यतावच्छेदक तथाच वर्त्तमानविशेष्यतावच्छेदकसमानकालीनतया धर्म्मा-न्तरवैशिष्ट्यावगाह्यशाब्दज्ञानत्वादित्यर्थः सतत्र पक्षतावच्छे-दकस्य हेतुत्वमिष्टमेव समानकालीनत्वानुसरणन्तु तादृप्य-विषयत्वे प्रतिज्ञायमानविशेष्यतावच्छेदकजन्यत्वस्य प्रयोजका-त्वसूचनायेत्याहु.। परामर्शएवेति न च कारणतावच्छे-दकस्य तस्य न व्यापारता परामृश्यमाणत्वेन परामर्शाजनना-दिति वाच्यं व्यापारं प्रति रूपान्तरेण हेतुत्वेऽपि फलम्प्रति तादूप्येण हेतुतायां विरोधाभावात् लिङ्गत्वेनैवानुमिति-हेतुतापरामर्शस्तु व्यापारमात्रमित्यपि केचित्। परामर्शा-विषयस्येति विनिगमनाविरहो विशेषणत्व वा तस्य हेतुत्व वीज नचेदमज्ञायमानेऽस्तीति भावः न च विशिष्टस्य कार-णत्वं स्खलत् प्रमाणं विशेषणतावच्छेदकावच्छेदेनापि तत्परिच्छिनत्ति तथाचापरामृश्यमाणस्यापि लिङ्गत्वेन हेतु-त्वमविरुद्धमिति वाच्यं यतो हि लिङ्गत्वं न साध्यव्याप्यत्वा-दिकं तदप्रसिद्धावपि गगनाद्यनुमानात् नापि परामर्शवि-षयतावच्छेदकमात्रं तथा सति वस्तुमात्रस्य वानुमिति-

हेतुतापत्ते नचेष्ट प्रामाणिक तथान्वयव्यतिरेकादिविरहात् अन्यथेच्छाशाब्दबोधादिक प्रतीष्टसाधनत्वाकाङ्क्षादिकुक्षि-निक्षिप्तस्य जगतएव हेतुतापत्ते न च वास्तवो विनिगमना विरहोऽपि प्रमेयत्वादिना ज्ञातादपि लिङ्गादनुमित्यापत्ते व्याप्तिपक्षधर्म्मत्वेन ज्ञानमानत्वोर्मो च लाघवात्ताद्दगज्ञान त्वेनैव हेतुत्वात्। किञ्च कालान्तरीयतादृगज्ञानविषयादपि लिङ्गादनुमितिप्रसङ्ग: कारणतावच्छेदकायत्नोदकारणमत्त्व स्यैव कार्य्योत्पत्तिनियामकत्वात्तत्तु तद्विशिष्टसत्त्वस्यैव गौरवात् इतोऽपि च प्रतिबन्धकाभावादीनां न कारणतावच्छेदकत्व परामर्शविशिष्टसत्त्वस्य चात्र प्रयोजकत्वाभिधाने लाघवादा वश्यकत्वाच्च परामर्शस्यैव तथात्व तत्र च नातिप्रसङ्गगन्धोऽपि। अथैव संयुक्तेन्द्रियादीन्द्रियसंयोगादौ कारणतायामपीदमेव विनिगमक स्यादिति चेत्स्यादेव यदि न स्यातामिन्द्रियादे स्वतन्त्रान्वयव्यतिरेकौ स्याच्च व्यापारेण व्यापारिणोऽन्यथ धानम् न चानुमितिमात्रे सौ लिङ्गस्य न चातोन्द्रियस्यापि तस्य परामर्शो व्यापार इति। अपि च येनैव परामृश्य मानाल्लिङ्गादपरामृश्यमानोऽपि मेयस्यानुमित्यापत्ति तत्तत्पु रुषीयानुमिति प्रति तत्तत्पुरुषपरामृश्यमानलिङ्गत्वेन हेतुत्वे चानन्तकार्य्यकारणभावप्रसङ्ग इच्छाकृतिसुखदु:खस्मरणवि-शिष्टज्ञानशाब्दबोधादिषु ज्ञानेच्छाधर्म्माधर्म्मनिर्णयविशेषण •भानपदार्थज्ञानादीनामिवानुमितौ परामर्शस्यापि कार्य्यसत्त्वा सत्त्वा हेतुत्वात्तातिप्रसङ्गप्रसङ्गोपीति कृतं पल्लवितेन। एवा

न्योऽन्याभावविशिष्टापरान्योऽन्याभावादिर्वर्त्तमान एव सर्वत्र हेतुः सम्भवतीत्यत आह यदि चेति। किन्तु तत्प्रागभाव इति तस्य च विरोधिकालावच्छेदेन व्याप्यत्वग्रहान्न तत्का-लीनसाध्यसिद्धिरिति भावः। अपिचेत्याद्यभ्युपगमवादः नियतसामानाधिकरण्यरूपाया व्याप्तेः प्रागभावादौ दुरुप-पादत्वात् धूमप्रागभावत्वादिकं नावच्छेदकमिति चेत् किन्ततः न चैतदपि व्याप्तेरवच्छिन्नत्वनियमात् परिशेषेण तस्यैव तथात्वात् अन्यथा धूमादिवृत्तिव्याप्तीनामपि धूम-त्वादिकमवच्छेदकं न स्यात्। अथ स्वव्यापकसमानाधिकरणं व्याप्यं व्यापकत्वञ्च तद्धर्मविशिष्टसमानाधिकरणाभावप्रति-योगित्वाद्यवच्छिन्नप्रतियोगिताकाभाववत्त्वादिकं स च वि-शेषणं धर्मो व्याप्यवच्छेदकः न च धूमप्रागभावसमानाधि-करणाभावप्रतियोगितात्वादिकं प्रतियोगितावच्छेदकं गौरवा-दपि तु धूमसमानाधिकरणाभावप्रतियोगितात्वादिकमेव लाघवात् एवञ्च न धूमप्रागभावो व्याप्यो न वा तत्त्वं व्या-प्यवच्छेदकम् अतएव प्रमेयधूमत्वादिकमपि नावच्छेदक-मिति चेत् गतं तर्हि जातिसमनियतोपाधिगुणादीनां व्या-प्यत्वेन लाघवेन गोत्वादिनिष्ठाभावप्रतियोगितात्वादेरव-च्छेदकत्वात् नतु सास्नास्नेहादिसन्निष्ठाभावप्रतियोगिता-त्वादेर्गौरवात् प्रस्थितञ्च गोत्वादिवृत्तिधर्माणामवच्छेदक-त्वेन आपतितञ्च ते नीलधूमत्वादेर्व्याप्यवच्छेदकत्वेन नील-धूमसमानाधिकरणाभावप्रतियोगित्वाद्यभावस्यातिरिक्तत्वात्

प्रमेयधूमत्वादिना वह्न्याद्यव्यापकत्वार्थमिव स्वेत्यादिना व्याप्यत्वार्थमपि स्वगुरुसाधारणस्वावच्छेदकत्वस्योपादानं कृतमाधुदास इति । तथाचेति सर्वत्र क्, सामान्यकारणस्य विशेषरूपेण हेतुत्वे यत्र कार्य्यकारणतावच्छेदकमपेक्ष्य न गौरवम् अन्यथा विशेषकारणकलापविस्मयप्रसङ्गादिति भावः । धूमकालीनेत्यादि सामानाधिकरण्ये कालविशेषस्यापि सम्बन्धघटकतया प्रविष्टत्वादित्यर्थः । यदा चेति कालिकदैशिकव्याप्तिद्वयज्ञानात्कालदेशयोः साध्य सिध्यद्यति बाधके लाघवादेकमेव सिध्यतीत्यपि वदन्ति । पक्षतावच्छेदकेति पक्षतावच्छेदककालाद्यवच्छिन्नमित्यर्थः । किन्तु व्याप्तीति न च स्मरणात्मकपरामर्शस्थले तदसम्भव तत्र व्याप्तिविशिष्टानुभवस्य संस्कारद्वारा परामर्शहेतुत्वात् फलाजनकव्यापारस्य फलजनकव्यापारजनकत्वे विरोधाभावात् । न च विशिष्टपरामर्शत्वेन न कारणत्वं व्याप्तिज्ञानत्वेन च न तद्विशिष्टस्मृतिहेतुत्वं न वा विशिष्टस्मृतित्वेनानुमितिहेतुत्वमिति वाच्यम् व्याप्तिविषयकज्ञानत्वस्मृतित्वाभ्यां विशिष्टविषयकत्वत्वाभ्यां वा हेतुहेतुमद्भावेऽपि व्यापारव्यापारिभावाविरोधात् न हि द्वारद्वारिणोः फलजनकत्वं येन रूपेण तेन रूपेण तयोर्मिथो हेतुहेतुमद्भावेऽपि नियमो मानाभावात् इन्द्रियतत्त्वयौगपद्यज्ञानपदार्थोपस्थित्यादिषु प्रत्यक्षशाब्दादिकरणव्यापारेषु व्यभिचाराच्च नचैव धारावाहिकस्थले पूर्वपूर्वेषां विशेषणज्ञानानामुत्तरोत्तरसंस्कारा शिष्ट-

प्रत्यक्षं प्रति करणत्वापत्तिः यं जनयित्वैव यस्य यज्जनकत्वं तस्यैव तत्र व्यापारत्वात् । यत्तु तथानियमेऽपि न क्षतिर्विशिष्टस्मृतेरपि व्याप्तिविशिष्टज्ञानतया विशेषणव्याप्तिविषयकेण पूर्वानुभवेन संस्कारेण वा जननाद्व्याप्तिविषयत्वेनैव करणत्वादिति तन्न जन्यत्वविशेषितेन संशयसाधारणेन व्याप्तिविशिष्टज्ञानत्वेन तज्जन्यत्वात् नित्यसाधारणेन च व्याप्ति विशिष्टवैशिष्ट्यावगाहिपक्षनिश्चयत्वेनानुमितिहेतुत्वात् यदि च विशिष्टव्याप्तेः प्रथममनुपस्थितावपि विशिष्ये विशेषणं तत्रापि विशेषणमितिरीत्या परामर्शादनुमितिस्तदा नियतपूर्वोपस्थितिकपदार्थोपस्थितेरेव करणत्वं वाच्यम् । यत्तु परामर्शजनकत्वेन तत्तद्विशेषणज्ञानानां करणत्वमिति तन्न अन्यम्प्रति पूर्ववर्त्तित्वं गृहीत्वैव तथात्वग्रहेणान्यथासिद्धत्वात् न च तत्र फलाननुगुणमन्यं प्रतीति वाच्यं गौरवात् न चैवं भ्रमिजनकत्वलक्षणं दृढ़त्वमपि दण्डे घटजनकतावच्छेदकं न स्यादिष्टत्वात् दण्डत्वेनैव तथात्वात् क्वचिद्घटानुत्पादो भ्रमिरूपद्वारविरहात् क्षुद्रचक्रभ्रमिजननसमर्थान्महाचक्रसमवहिताद्दण्डाद्घटानुत्पत्तौ तत्प्रयोजकताया आवश्यकत्वात् भ्रमिविशिष्टत्वेन च जनकत्वे चक्रादीनामपि पृथक्कारणत्वं न स्यान्नस्याच्च घटार्थितया दण्डे निष्कम्पा प्रवृत्तिः प्रथमं भ्रमेरुपधानानिश्चयात् अस्तु वा भ्रमिप्रयोजकोऽवयवसंयोगविशेषादिरेव तथा प्रथमोपस्थितत्वादावश्यकत्वाच्च अन्यथा घटजनकत्वेनैव भ्रमिजनकतां किमिति

न रोचये । अतएव मांयर्णवेणवादिदण्डेष्वनुगतदण्डत्वयि रहेऽपि न क्षति । किञ्चैवं प्रवृत्ति प्रतीष्टसाधनताज्ञानजन कत्वेन शब्दादीनां शाब्दबोध प्रति च तज्जनकाकाङ्क्षादिज्ञा नजनकत्वेनानुभावसंस्कारसत्तविशेषणज्ञानादीनां कार्या न्तर प्रति च तज्जनकतत्स्वन्तायकारणानां तत्तत्पदार्थकार णत्वेन हेतुत्वप्रसङ्गः तज्जनकत्वेन हेतुत्वे तत्त्वेनैव हेतुत्व प्रत्र नोपस्थितत्वादायश्यकत्वाच्चाघवाच्चेति चेत् किमिदं प्रकृते पाणिपिहितम् इदं पुनरिहायधेयं विशिष्टविषयकत्वेन कार णत्वे केवलविशेषणादिविषयत्वेन न हेतुत्व तदवच्छिन्नकार्य्य जनकतावच्छेदकान्तराव्यापकरूपेणैव तदवच्छिन्न प्रति जनकत्वात् दर्शयिष्यते हि तथान्यथा सिद्धत्वमन्यथावटत्वा- द्यवच्छिन्न प्रति कपालतत्संयोगादीना जन्यत्वविशेषितेन गुरुत्वेन या द्रव्यत्वगुणत्वादिना विशिष्टवैशिष्ट्यबोध प्रति च विशेषणतावच्छेदकविषयत्वेन हेतुत्वप्रसङ्गात् अनुमितिशाब्द बोधचिकीर्षादिकं प्रति च परामर्शाकाङ्क्षाकृतिसाध्यत्वादि ज्ञानविषयविशिष्टाविशिष्टतत्तत्पदार्थविषयत्वेन हेतुत्वे च नन्तकार्य्यकारणभावप्रसङ्गाच्च न चात्र करणान्तरासम्भावा दगत्या परामर्शजनकज्ञानस्य तथात्व कल्प्यते चिकीर्षां प्रत्यपि कृतिसाध्यताज्ञानजनकज्ञानस्य तथात्वापत्ते तज्ज नन एव करणमिति चेत् तथापि तदेवास्तु मनोऽसाधारण करणकज्ञानत्वेन मानसत्वापत्तिरिति चेच्चिकीर्षादिसाधा- रणतत्करणकत्वस्यैव ज्ञानत्वविशेषितस्यापि तथा प्रयोजक-

त्वात् किं तर्हि मानसत्वे प्रयोजकमिति चेत् किन्नाम प्रयोजक कारणञ्चेन्न किञ्चित् कार्य्यञ्चेत्तत्प्रत्यक्षं व्यापकञ्चेत्प्रमेयत्वादि व्याप्यञ्चेत्तत्सामग्रीजन्यत्वादि तदवच्छिन्नोत्पत्तिनियामकञ्चेत्तत्सामग्री करणाभेदे कथं कार्य्यवैजात्यमिति चेत् सामग्रीवैलक्षण्यात् यथा मनःकरणकानामेव चिकीर्षा सुखादीनां यथावाग्निकरणकानां पाकजानां कथं तर्हि प्रमाणविभाग इति चेत् करणविशेषकक्रियावैजात्यविशेषादिति विभाव्यताम्। अपरे तु व्याप्तिज्ञानत्वेन विशिष्टपरामर्शत्वेन वा नानुमिति मात्रं प्रति हेतुता साध्यादिभेदेन व्याप्तेर्भेदात् किन्तु पक्षज्ञानत्वेनाभावज्ञानत्वेन ज्ञानत्वेन वा पक्षोऽपि धर्म्मिमात्रं पक्षताया अप्यननुगमात् तत्तपक्षतावच्छेदकविशिष्टवह्न्यनुमितिं प्रति तत्तद्विशिष्टे वह्निव्याप्यवत्तापरामर्शत्वेन हेतुतायां आवश्यकत्वे वह्न्यनुमितिमात्रं प्रत्यपि न तादृशपरामर्शत्वेन हेतुता गौरवात् किन्तु वह्निव्याप्तिज्ञानत्वेन लाघवात् वस्तुतो वह्निज्ञानत्वेनैव तथा अतिलाघवात् एवं वह्न्यभावानुमितिं प्रत्यपि एतेनानुमित्यन्तरं व्याख्यातमिति वदन्ति। कृत पल्लवितेनेति।

केवलान्वयीत्यादि केवलान्वयिसाध्यकादीत्यर्थः। तत्र तेषु मध्ये असिद्धिपक्षम् अत्यन्ताभावाप्रतियोगिसाध्यक केवलान्वयि एवमगृहीतान्वयव्यतिरेकिसाध्यकं केवलव्यतिरेकिगृहीतान्वयव्यतिरेकिसाध्यकमन्वयव्यतिरेकि व्याप्तिग्राहकसहचाराभेदाद्भेदे त्वन्वयसहचारमात्रगृहीतव्याप्तिकत्वं

केवलान्वयिनि तत्र प्रकृतव्याप्तिघटकाभावविषयसद्भावत्व व्यापकाभावसद्भावत्वकत्व तादृशसद्भावत्वव्यापकप्रकृत व्याप्ति घटकसद्भावत्वकत्व वा व्यतिरेकव्याप्तिभेदाद्वैते तु प्रकृतहेतुकप्रकृतसाध्यानुमिति हेतुज्ञानविषयव्याप्तिव्याप कप्रकृतसाध्यव्याप्यत्वकत्व तत्त्वम् जल निर्गन्ध पृथिवीत्व व्यापकाभावप्रतियोगिमत्त्वादित्यादौ हेतुतावच्छेदिका च व्याप्तिर्न प्रकृतसाध्यानुमित्यौपयिकी तद्विशिष्टपक्षधर्मताज्ञा नेऽपि व्याप्यत्वबोध विना निर्गन्धत्वानुमित्यनुदयादिति मा व्याप्ति वह्न्यभाववान् वह्निव्यापकाभावप्रतियोगिमत्त्वादित्या दावन्वयव्याप्तेरवच्छेदिका व्यतिरेकव्याप्तिर्न तु सैवेति नाप्र सङ्ग पतएवेतरव्यापकाभावप्रतियोगित्वे नाभावप्रतियोगित्वे न वा यद्विषयज्ञान न प्रकृतसाध्यानुमितिहेतुमात्केवलान्वयीत्यपि वदन्ति एव केवलव्यतिरेकित्यादिकमपि निर्वाच्यम् । अभिधे यत्व शब्दशक्यत्व विपक्षव्याघातो विपक्षात्वासिद्धिः । ननु व्याप्यत्वमन्योऽन्याभावप्रतियोगितावच्छेदकत्व तच्च लघु गुरुसाधारण गगनादिनिष्ठान्योऽन्याभावप्रतियोगितावच्छे दकचेति न व्यभिचार इत्यत आह । एवमिति । नन्वभाव प्रतियोगित्वादिकमभावादिव्यक्तिभेदान्नानैव अननुगतव्यवहा रस्तु कथञ्चिद्विशेषणतावच्छेदकधर्मानुगमादेवेत्व सत्त्वा प्रसिद्धा लक्षणासम्भव इत्याशङ्कते ननु त्यादि । यत्र तौल्या दभ्युपगमवाद' वस्तुतो भूतत्वादिविशेषे समये च तस्य वर्त्तमा- नत्वाराकाशाभावतुल्यत्वाच । अभावाभावस्येति सावधारणं

भावत्वात् यदाहुराचार्य्याः स्वाभावविरहात्मत्वं वस्तुनः प्रतियोगितेति प्रतियोग्यं वेति प्रागभावादेरत्यन्ताभावाभावरूपत्वनयेऽपि न क्षतिः तन्मतेऽत्यन्ताभावस्यापि तदभावरूपतया तस्यापि प्रतियोगित्वात् । असाधारण इति प्रतियोगितावच्छेदक इति तु तत्त्वम् अथान्योऽन्यात्यन्ताभावसाधारणः प्रतियोगितावच्छेदकसम्बन्ध एवाभावाभावः स च कचित्तादात्म्यं कचिच्च संयोगादिरिति चेत् यद्वत्त्वे हि ज्ञाते यद्वत्त्वं न प्रतीयते तदभाववत्त्वञ्च व्यवह्रियते तस्यैव तदभावात्मकत्वमुपेयते प्रतियोगितदभाववत्त्वबुद्धोश्च मिथस्तथात्वमानुभविकं न च तत्सम्बन्धवत्त्वञ्च तद्विषयः सम्बन्धसम्बन्धवत्त्वावुद्धिवत् कचित्सम्बन्धवुद्धिर्विशेषदर्शनतयोपयुज्यते न च स्वतो साना-भावात् अथ सम्बन्धान्तरावच्छिन्नाभाववति सम्बन्धान्तरेण प्रतियोगिनो वृत्तेर्न तदभावविरोधित्वमिति चेत् प्रतियोगितावच्छेदकसम्बन्धस्याभाववति सम्बन्धान्तरेण वृत्तेर्न तथात्वम् सम्बन्धविशेषेण च विरोधित्वं तुल्यमेव अनतिप्रसक्तये च स्वप्रतियोगितावच्छेदकसम्बन्धत्वेनाभावत्वकल्पने कानुगमसम्भावनापीति व्यधिकरणसम्बन्धस्यापि प्रतियोगितावच्छेदकत्वात्तद्व्यत्यन्ताभावविलयप्रसङ्गो भवतां तदभावविलोपप्रसङ्गो वेति । लक्षणम्परिष्कुरुते वृत्तिमदित्यादि आकाशस्य तदभावाभावत्वमित्यभ्युपगममात्रं भाववति तदभावासत्त्वप्रतीत्या हि भावस्य स्वाभावाभावत्वं कल्प्यते न चेह तथा अभावप्रतियोगित्वं स्वरूपसम्बन्ध एवेत्युक्तमधस्तात् अभाव-

प्रतियोगित्वस्याप्रयोजकम् एवञ्च यत्सम्बन्धावच्छिन्नप्रतियोगि-ताकाभावाप्रतियोगित्वं यस्य तस्य तेन सम्बन्धेन केवलान्व यित्वमिति सूचयितु वृत्तिमदिति अतएव ज्ञानस्य ज्ञान त्वस्य च समवायेन ज्ञानविषयत्वादेव व्यधिकरणसमवाया दिना सम्बन्धेनाभावप्रतियोगित्वेऽपि विषयतया परम्परा सम्बन्धेन स्वरूपसम्बन्धेन च केवलान्वयित्वं संयोगाद्यभा वोपसग्रहाय च प्रतियोग्यसमानाधिकरणत्वेनाभावो विशेष्य त्वाकाशाभावोऽपि च यथा प्रतियोग्यसमानाधिकरणस्तथोक्त मधस्तात् वृत्तिमत्तस्तादृशाभावाप्रतियोगित्वमितियाव व्या पवृत्तित्वार्थक वृत्तिमत्पदमभावविशेषणमित्यपि कश्चित् ता दात्म्येनाभिधेयस्य केवलान्वयित्वसम्पत्तये व्याप्तिपदस्थिमसमा-लोचनीयम् । प्रमाजातीयेति तथाच तादृशभावप्रतियोगिता नवच्छेदकधर्मवत्त्वमर्थं इत्यत्र प्रतियोगितावच्छेदकावच्छिन्न स्यासामानाधिकरण्यमेवाभावविशेषणं तेन द्रव्यगुणभेदयोर्हि त्वादिना न केवलान्वयित्वम् । नचैव विरुद्धयोर्धर्मयोर्द्वित्वेन केवलान्वयित्वापत्तिः तदवच्छिन्नाधिकरणाप्रसिद्ध्या तदव च्छिन्नाभावे प्रतियोग्यसामानाधिकरण्यस्यासम्भवादिति वाच्य तादृशधर्मावच्छिन्नस्य यत्किञ्चिदधिकरणवृत्तिताया विवक्षितत्वात् क्वचिदपि तादृशोभयवत्त्वाप्रतीतेस्तस्यास्तथा त्वात् । सन्दिग्धसाध्यवत्त्वं पक्षत्वमित्याशयेनाशङ्कते तथापीति अभिधेयत्वसाध्यस्य घटवृत्तित्वसाध्यस्य साध्यसिद्धिविरोधी सा ध्यसिद्धिमिवार्थं विशेषणविशेष्यभावभेदेऽपि विरोधिविषय

तामात्रेण प्रतिबन्धकत्वमनुभवबलादास्थीयते नहीदं साध्यवदत्र वा साध्यमित्येकतरनिश्चयेऽत्र साध्यं न वा इदं साध्यवन्न वेति अन्यतरः सन्देह इति। पक्षनिष्ठेत्यादि पक्षनिष्ठाभावप्रतियोगित्वज्ञानविरोधिज्ञानस्य साध्यसाधकत्वेन कथञ्चित्साध्यसिद्ध्यनुगुणत्वेन पक्षनिष्ठाभावप्रतियोगित्वज्ञानाभावस्य वा साध्यस्य साधकत्वेन तदभावस्य तस्य साध्ये पक्षनिष्ठाभावप्रतियोगित्वज्ञानस्य मध्ये पक्षनिष्ठाभावप्रतियोगित्वावगाहिज्ञानत्वेन साध्यविशिष्टपक्षज्ञानविरोधित्वेन वा रूपेणाभावस्य योग्यतात्वात् व्यतिरेकः विपक्षे हेतोरभावः व्यतिरेकव्याप्तौ साध्याभावहेत्वभावयोर्यौ व्यतिरेकौ साध्यहेतुतयोर्व्याप्तौ। अत्र वदन्ति साध्याभाववदवृत्तित्वमेव व्याप्ति-ऐक्यवात् प्रायशः साधनभेदेऽप्यभेदाच्च यत्सम्बन्धावच्छिन्नसाध्याभाववति हेतोरवृत्तित्वं गृह्यते तेन सम्बन्धेन संसिद्धिः फलं साध्याभाववति येन सम्बन्धेन हेतोरवृत्तित्वं गृह्यते तेन सम्बन्धेन पक्षधर्मताधी कारणमिति नातिप्रसङ्गः आकाशादेस्तथात्वेऽपि पक्षधर्मताज्ञानविरहान्नानुमितिः निविशतां वा तत्र साध्यसामानाधिकरण्यं वृत्तिमत्त्वं वा अथ साध्याभाववदवृत्तित्वं तद्वृत्तिभिन्नत्वादिरूपं व्यभिचारज्ञानविरोधिज्ञानविषयत्वेनानुगमनीयं तच्च व्यापकसामानाधिकरण्यसाधारणमिति चेत् स्यादेवं यदि व्यापकताज्ञानं व्यभिचारबुद्धिं विरुन्ध्यात् नचैव वह्न्यभाववद्वृत्तिर्धूम इति ज्ञाने हि वह्नित्वं स्वरूपेण प्रतियोगित्वं

तदवच्छेदकत्वं च सम्बन्धमर्यादया भासते धूमसमा नाधिकरणाभावप्रतियोगितानवच्छेदकं वह्निस्यमित्यत्र च वह्नित्वेन वह्निर्त्वे प्रतियोगितात्वविशिष्टतदवच्छेदकत्वस्य विशिष्टाभाव इति विषयविरोधविरहात् विशिष्टस्य वह्नित्वस्यावच्छेदकत्वेन प्रकारतानुसरणे च सुतरां मणि सम्बादिन्यायेन च प्रतिबन्धकतायां मानाभावात् व्यापकता ज्ञानादेवानुमितिरिति च नानुभविक न वा यात्रिक ज्ञान त्वादिना ज्ञानत्वादेर्व्यापकतावच्छेदकत्वपक्षे ज्ञानादि मानित्यनुमितेरयोगात् अन्यथा जातित्वेनानुभयत्वव्यापक गुणत्वव्याप्यजातिमत्वादिना वा तथात्वपक्षेऽपि तत्प्रसङ्गात् एतेन केवलान्वयिसाध्यकचणानमेवानुमिति रितुक्तमपि परास्तम् । सर्वत्रैवानुभवसिद्धानुमिति आवे धूमादिदर्शना नन्तर जायमाने व्यतिरेकव्यतिरेकवह्न्यादिनानेकत्वाभाव प्रमेयवान् घटान्वितत्व मेयत्वान्वयित्वेन कथंचित्-त्वसिधर्मव्यापकत्वेन वानुमेय न तु शिवत्वादिरूपतदनु मितिरानुभविकी एव साध्याभावव्यापकाभावप्रतियोगित्व मपि नानुमित्यौपयिक गौरवात् व्यभिचारज्ञानाविरोधित्वाच्च वह्न्यभावसमानाधिकरणाभावप्रतियोगी धूमाभावइति ज्ञान धूमाभावाभावत्वेन तत्र वह्न्यभावसामानाधिकरण्यबुद्धि कदाचिदिष्टत्वात् न तु धूमत्वेन भिन्नप्रकारकत्वात् व्यति रेकव्याप्तिग्रहाधीना च धीर्नानुमितिस्तत्त्वेनानुभवात् कारणाभावात् सामग्रीभेदकल्पनायाश्चानुभवैकाधीनत्वात्

किन्तु विजातीयातत्करणमपि प्रमाणान्तरमर्थापत्तिरेवं क्लृप्तप्रमाणद्वयसमाहारसमशीलञ्च युगपदन्वयव्यतिरेकिधर्मद्वयप्रतिसन्धानम् अथ निर्णीते विना सिद्धीच्छामर्थापत्तेरनुत्पादात् पक्षताजन्यत्वात् साप्यनुमितिर्लाघवेन पक्षताजन्यत्वस्यैवानुमितित्वे प्रयोजकत्वात्। नचैवं पक्षताप्रत्यक्षस्यापि तथात्वापत्तिरिच्छासत्त्वेऽपि कालान्तरे प्रदेशान्तरे वा तद्विरहसत्त्वेनैककालीनत्वाद्यतीन्द्रिय घटितप्रतियोगित्वेन तस्या अतीन्द्रियत्वादिति चेन्न अनुमितावेव पक्षतायाहेतुत्वस्य निरस्तत्वात् साध्यादिभेदेनाननुगतत्वात् तज्जन्यत्वस्याप्रयोजकत्वाच्च प्रयोजकत्वञ्च न जनकत्वमसम्भवात् न व्याप्यत्वं मानाभावादित्यादेरसकृदावेदितत्वाच्च एतेन व्याप्तिज्ञानादिजन्यत्वमनुमितित्वे प्रयोजकमित्यपि परास्तम्। साध्याभावव्यापकाभावप्रतियोगिधर्मत्वेन साध्यव्याप्यत्वानुमानात् प्रसिद्धसाध्यकैवानुमितिरित्यपि केचित्। अथ वह्न्याद्यभाववति धूमादेः समवायेन तन्त्वाद्यभाववति च पटादेः संयोगेन वर्त्तमानत्वात् साध्याभाववति संयोगेन समवायादिना वर्त्तमानत्वस्य विशिष्यैवाभावो वाच्यः तथाच जलं जातिमत् गुणवत्त्वात् गुणवच्च घटादेरित्यादिकं विलीयेत जातिगुणाभाववतोः समवेतत्वसंयोगित्वयोरप्रसिद्धेरिति चेदुपदर्शयेनमपि केवलान्वयिनः सरणिं स्वीकुरु वा स्वाधिकरणावृत्तिसाध्याभावादिकत्वमेव व्याप्तिं स्वत्वाननुगमस्य प्रागेव स्वइस्तितत्वादिति एतेन नीलेतररूपवान् नीलासमवेतत्वे

सति गोत्वादित्यादिकं विलीनेन विशेष्यस्य व्यभिचारित्वात्
विशिष्टस्य चाननिरिक्तत्वादिति परामर्श साध्याभावस्य वि
शिष्टहेत्वधिकरणाद्वृत्तित्वात् परम्परासम्बन्धेन विशेषणवि
शेष्यसम्बन्धस्यैव वा तत्र हेतुत्वादिति। व्याप्तिग्रह इति
साधारणेपि तत्र कृतनाम्वयिन्यभावात् व्याप्यव्याप्यत्व तद्
वद्न्यावृत्तित्वादिरूपमन्नत साध्यत्व प्रसिद्धम्। निरुपा-
धीति उपाधिज्ञानाहितव्यभिचारनिरासाय पृथिवीत्वमिति
पृथिवीत्वमितरभेदव्याप्यमित्यत्र हि पृथिवीत्वत्वविशिष्टे
पृथिवीत्वे इतरभेदसामानाधिकरण्य भासते पृथिवीतर
भिन्नेत्यत्र शुद्धपृथिवीत्वविशिष्टे तदवच्छेदेनेतरभेद इति न
सिद्धसाधनमित्यर्थः सर्वेति च पृथिवीत्वस्यावच्छेदकत्वस्फोर-
णाय अत्र च पृथिवीत्वत्व पृथिवीतरासमवेतत्वमात्र न तु
पृथिवीवृत्तित्वघटितमित्यतोऽपि नोपनयवैयर्थ्यम्। अथा
न्वयव्याप्तिघटकतावत्पदार्थोपस्थित्यादिक विना न तद्ग्रह
सम्भवस्तत्सत्त्वे च तत एव व्याप्तिग्रहसम्भवे व्यतिरेकसहचार
ज्ञानस्य हेतुत्वे मानाभाव न च व्यभिचारशङ्काविघटकत्वे
नैवान्वय व्यतिरेकसहचारग्रहयोरुपयोगित्व तद्ग्रहेऽपि
शङ्कातादवस्थ्यात् अधिकरणविशेषे च दृष्टिवृत्ती साध्य
वत्त्वसाधनाभाववत्त्वयोरन्यतरग्रहस्यैव तत्त्वात् व्यतिरेक
व्याप्त्युपन्यासेऽर्थान्तरादितादवस्थ्यात्। यत्तु सहचारमात्र
लाभायैव सर्वत्रोदाहरणोपन्यास इति तन्न अर्थान्तरायापत्ते
र्दुर्वारत्वात् यच्छब्दादिवैयर्थ्याच्च व्युत्पादयिष्यते च तस्य

व्याप्तिबोधकत्वम। नचान्वयिन इव व्यतिरेकिणोऽप्युदाहरणात् स्वरससिद्धान्वयव्याप्तिधीरानुभविकी येन तदर्थमपि प्रकारान्तरमास्थेयमत आह यद्वेति। साध्याभावेति नन्विच्छादौ साध्ये आत्मत्वादेर्व्यतिरेकित्वं न स्यात् स्याच्च संयोगादेरात्मत्वे तथात्वमिति चेन्न। साध्यतावच्छेदकावच्छिन्नसाधनासमानाधिकरणत्वेन साध्याभावस्य साधनतावच्छेदकावच्छिन्न साधनासमानाधिकरणत्वेन च साधनाभावस्य विशेषितत्वात् संयोगाभावे साध्ये विभागाभावः केवलान्वयी प्रतियोगिवैयधिकरण्यावच्छिन्ने च तत्र स तादृशो व्यतिरेक्यपि व्याप्यव्यापकभावश्च साध्याभावत्वसाधनाभावत्वाभ्यां बोध्यस्तेन न व्यभिचारिण्यतिप्रसङ्गः साध्याभावत्वादिकञ्च वैज्ञानिकं न तु वास्तवं तेन मेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिभ्रमादनुमानम्। व्यापकीयत्वेनाभावस्य ज्ञानाद्व्याप्यीयत्वेनाभावस्य सिद्धिं पुनरप्रसिद्धसाध्यकसाधारणीमाह व्यापकाभावेनेत्यादि अभावो अभाववत्त्वनिश्चयो अवश्यम्भावश्चासति प्रतिबन्धके अत्र च यद्रूपावच्छिन्नं प्रति व्यापकता गृह्यते तद्रूपावच्छिन्नीयत्वेनाभावसिद्धिः फलं येन रूपेण व्यापकता गृह्यते तद्रूपावच्छिन्नीयत्वेन व्यापकत्वविशिष्टतत्तद्रूपावच्छिन्नीयत्वेन चाभाववत्ताज्ञानं हेतुरिति मन्तव्यं व्यापकप्रतियोगिकस्याभावस्यातिप्रसक्तत्वात् व्यापकत्वावच्छिन्नप्रतियोगिताकस्य च सम्बन्धविशेषावच्छिन्नस्य सम्भवतोऽप्यसार्वत्रिकत्वात् कारणानुगमः परम्परिचिन्तनीयः एवञ्च वह्नि-

धूमव्यापकीवह्न्यभाववानयमिति ज्ञानाद्धूमव्यापकवह्न्यभाववानयमिति ज्ञानाद्वा निर्धूमोऽयमितिधीरिति धूमव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववानयमिति ज्ञानादित्यपि कश्चित्। व्याप्तिज्ञानस्येति अत्र व्याप्तिपदेनान्वयव्यतिरेकव्यापकतान्यतरनियतविषयताकोऽर्थोऽभिमत पक्षस्य पक्षतावच्छेदकस्य वा ज्ञानमनुमितिमात्रे हेतुरित्यपि वदन्ति। अन्वयीति अन्वयिनि तादृशरूपेण वह्नित्यादिना व्यतिरेकिणि तु इतरप्रतियोगिकत्वेन वह्न्यभावादिनिषेधतया सिद्धिरित्यनुभवसिद्ध कार्य्यगतो विशेष कारणविशेषजन्यतावच्छेदक अतएव तत्र तत्र सर्वत्र व्यतिरेकिणि तस्मात्तथेत्येव निगमनशरीरम् अन्वयिना वह्न्यभावेन धूमाभावसिद्धौ धूमाभावस्य प्रकार व्यतिरेकिणि तु तत्सिद्धौ प्रत्यय इव प्रतियोगितया धूम प्रकार इति वदन्ति इत्यञ्च क्वचिदो धूमाभाववान्न वा पर्वतो वह्निमान् नवेत्यादिजिज्ञासायां विप्रतिपत्त्यादेश्याया साध्यतावच्छेदकरूपेण साध्यवत्त्वप्रतीतेरनुपयोगिनो व्यतिरेक्युदाहरणादे कथमवतार इति विभावनीयम्। केचित्तु अन्वयव्याप्तिज्ञानान्तरत्वादिकमेवानन्यगतिकतया जन्यतावच्छेदकमित्याह । अन्ततरत्वेन तादृशपरामर्शयो कारणत्वमित्यपि कश्चित्।

उपनिर्तानुपूर्वीक प्रतिज्ञादिपञ्चकसमुदायस्य न्यायस्य प्रतिज्ञात्वादिकं पुनरुदासीनवाक्यवारकन्यायान्तर्गतत्वगर्भमेवोपादेयमिति मान्योऽन्याश्रय साध्यादिविशेषमिय

न्वितायश्च प्रतिज्ञादयो वाच्या इति न भिन्नसाध्यादिकप्रतिज्ञादिसमुदायेऽतिव्याप्तिः व्याप्यादेरिव साध्याद्यननुगमादननुगमो न्यायादेरोऽत एव एतेन प्रतिज्ञानिगमनयोरुदाहरणावयवान्तरयोश्च न सम्भूयैकार्थप्रतिपादकत्वं प्रागेव तु पञ्चानामवयवानां परन्तु प्रतिज्ञाहेत्वोः कथञ्चिदुपनयनिगमनयोरेकवाक्यताव्यवहारस्तु विशिष्टैकार्थप्रतिपत्तिपरतामात्रेण तादृशपरामर्शप्रयोजकत्वञ्च यदि तद्विषयतत्पदार्थसार्थोपस्थापकतया तदोदाहरणोपनययोरेव तत्पर्य्यवस्यति अथ तदानुकूल्यमात्रेण तदा को वह्निमान् पर्वतो वह्निमान् कुतो धूमवत्त्वादित्यादेरपि तथात्वमित्यादिकं समाहितम्। अवयवत्वन्तु न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वं प्रतिज्ञाद्यघटकत्वे सति उभयघटकभामद्वयाघटितत्वं वा वक्तव्यम् उभयञ्च प्रतिज्ञाहेतुहेतूदाहरणे उदाहरणोपनयावुपनयनिगमने इति विशिष्य वक्तव्यमिति प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थविषयकज्ञानपञ्चकान्यतमज्ञानजनकवाक्यत्वं तत्त्वमित्यपि केचित्। तस्यैवेति तथाच तादृशजातौ साधकाभाव इति भावः। बाधकमप्याह अन्यथेति न्यायजन्यज्ञाने पञ्चावयवजन्यत्वात् पञ्चद्वित्यादिजन्ये द्वित्र्याद्या एकैक जन्ये चैकैकाजातय इति सङ्कर इत्यर्थः तत्र तत्र भिन्नभिन्नजातिकल्पने सुतरां मानाभावादिति भावः। केचित्तु यदि चानुगतं कारणमन्तरेणापि तादृशजातिमत्त्वसम्भवस्तदा कदाचित् प्रतिज्ञादिजन्येऽपि हेत्वा-

दिजनप्रदर्शितेत्यादिग्रन्थे च प्रतिज्ञादिजन्यहानेत्यर्थः न्यादिति महर इत्यर्थे एवं मर्वेषां मर्वशातीयत्समेकधा नौचान वा न्यादित्यपि द्रष्टव्यमित्याहुः । साध्यविशि प्रतिज्ञेति पृथग् साध्यं विधेयधर्मविशिष्टो धर्मी तथा च पक्षतावच्छेदकपर्वतत्वादिविशिष्टे साध्यतावच्छेदकवह्नित्वा दिविशिष्टवैशिष्ट्यज्ञानजनको न्यायावयव इति पर्यवसितार्थं उदाहरणाय साध्यतावच्छेदकविशिष्टज्ञान न पक्षतावच्छेदकविशिष्टे उपनयाच पक्षतावच्छेदकविशिष्टे न साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानमिति तयोर्व्युदास । किञ्चित्यादि प्रकृतन्यायावयवभिन्नतयापरिवारणाय सत्यनाप्रकृतन्यायावयवत्वपर्यवसितार्थयाम् । वह्नेरेति प्रकृते त्वर्थ वह्निसाधकन्यायोपनयस्य वह्निव्याप्यधूमसाध्यकानुमित्यन्यूनानतिरिक्तविषयकशाब्दजनकस्य वारणाय प्रकृत एव तथाच यादृगसाध्यकन्यायावयवत्व तादृगसाध्यकानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्व पर्यवसितार्थं । धूमादालोकवान् पर्वतो वह्निमान् धूमादित्यादावनतिरिक्तविषयकज्ञानजनकस्य हेतोर्वारणाय अन्यूनेति निगमनवारणाय अनतिरिक्तेति यद्यपि निगमने माध्यायपक्षबोधक पदं न श्रूयते तथापि न्यूनताभङ्गायोपनयस्थायमादिपदस्यानुपङ्गात्तथा बोधम् इत्यमेव च प्रसज्ञामतिप्रसक्ति निगमनन्तेत्यादिना निराकरिष्यति तदर्थ निगमनमन्यूनानतिरिक्तविषयकज्ञानजनकं मन्न परा

मर्शहेतुर्येन निरुक्तन्यायावयवत्वरूपं प्रतिज्ञात्वं तदपि व्याप्नुयात् अवाधितत्वादेस्तद्घीधौपयिकविशिष्टहेतुसम्बन्धस्य बोधकतया तस्यातिरिक्तविषयकज्ञानजनकत्वादिति। यत्तु पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादित्यातौ यन्न पृथिवीतरेभ्यो भिद्यते न तत् पृथिवीत्युदाहरणवारणाय तदिति तत्तुच्छम् तेन पृथिव्यामितरभेदस्याविषयीकरणात् तात्पर्य्यभ्रमेण तादृशबोधजनकत्वस्यातिप्रसक्तत्वात् न च तावताप्युदाहरणस्य तथात्वसम्भवो यन्नेत्यादेरनन्वयात् यदि च निगमनेनायमादिपदं निविशते वाक्यैकवाक्यतयैव विशिष्टलाभादिति विभाव्यते तदा हेतौ साध्यसामानाधिकरण्यभाने सामान्यतः पक्षेऽपि साध्यवत्त्वभानात् पक्षे हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतुमत्ताबोधकस्योपनयस्य यत्र च पक्षसाध्ययोस्तादूप्येण दृष्टान्तत्वहेतुत्वाभ्यामुपन्यासस्तादृशसिषाधयिषया च न्यायप्रयोगस्तत्रोदाहरणोपनययोर्यत्र वा पर्वतत्वाद्यवच्छेदेन साध्यसिद्धेरुद्देश्यतायामितरपर्वतत्वादिना दृष्टान्तस्योपन्यासस्तत्रोदाहरणस्य सत्यन्तस्य चावयवाघटकन्यायान्तर्गतत्वपरतया हेत्वन्तस्यायमादिनिगमनान्तभागस्य वारणाय तत् यद्यपि सर्वमभिधेयं प्रमेयमित्यादावतिरिक्ताप्रसिद्धिर्न च कोप्यप्रसिद्धा प्रमेयं न वेति विप्रतिपत्तेः संशयस्य चायोगान्न तादृशी प्रतिज्ञा प्रकृतानुमितिविषयतासमव्याप्तविषयताकत्वं प्रकृतानुमितिप्रकारतासमव्याप्तप्रकारताकत्वं वा वक्तव्यमिति वाच्यम् सकला-

भिधेयहत्तिधर्म्मवत्त्वकत्ताभिधेयमिच्चात्यन्ताभावाप्रतियोग्या-
काशाभाववदा इद द्रव्यमित्यादौ विशिष्टपक्षबोधके उपनये:
सिध्याति तथापि प्रकृतपक्षे प्रकृतसाध्यवैशिष्टविषयत्व
तदन्यूनविषयत्व प्रकृतपक्षम्यर्थपक्षकप्रतिज्ञादिकत्वे तु पक्षे
प्रकृत्यर्थस्य वैशिष्ट्यबोधको हेतुर्न तु प्रकृतसाध्यस्य तादृश
विषयताविलक्षणविषयताशून्यत्व प्रकृतहेतुकप्रकृतसाध्यसि-
द्धौपयिकव्याप्तिविषयकत्व वा तदनतिरिक्तविषयत्व वह्नि-
व्याप्यलोफवत्त्वधर्म्मो पर्वतो वह्निमान् धूमादिन्धनव्याप्य-
धूमवान् पर्वतो वह्निमान धूमादित्यादौ तस्या' सम्भवाय
प्रकृतहेतुसाध्ययोरुपादान वह्निव्याप्यधूमवान् पर्वतो वह्नि-
मान् धूमात् सत्तादिव्याप्यद्रव्यत्ववदिद सत्तादिमद्द्रव्यत्वा
दित्यादिषु न प्रयोग विशिष्टपक्षोपन्यापकादेव तादृश
व्याप्तिमतोसाधकाद्वाविरहेणोदाहरणतुल्यानात् अन्यथा
तिप्रसङ्गात् अतएव नैकदोभयव्याप्त्युपन्यासोऽपि यदि च नैव
पक्षति अय गौरित्यादेरेव प्रतिज्ञाया ययोपयश्चितविशिष्ट
ज्ञानजनकत्व तादात्म्येन गो साध्यत्वात् गोत्वत्याद्यनुपस्थित्या
गोत्वादे साध्यत्वानुपपत्ते पदार्थतावच्छेदकजातौ हेत्वर्था
न्वयायोगाच्च वह्निमानित्यादौ पुनरनुमितौ पक्षे साध्यस्य
सङ्ग संयोगात्मक सम्बन्धो भासते यथैव वह्निव्याप्यधूमवा
नित्याद्युपनयप्रसङ्गमात् शाब्दभाने तु वह्निमतोऽभेद एव
भेदे साध्ये भिद्यते भिन्नमित्यादावपि वैलक्षण्यमिति सूक्ष्म
मीक्षते तदा यादृशपक्षसाधिका पक्षे तादृशयादृग्विशिष्टार्थं

न्नस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नगमकतौपयिकं यद्-
व्याप्तिविषयत्वं तच्छून्यत्वमर्थः तच्च हेतौ साध्यव्याप्यताव-
गाहित्वम् हेतुभूताभावप्रतियोगितावच्छेदकावच्छिन्ने साध्या-
भावव्यापकतावगाहित्वञ्च द्रव्यत्वव्याप्यसंयोगवद्वृत्तिधर्मवानयं
द्रव्यत्ववान् गुणात् गुणव्याप्यरूपवानयं स्पर्शवान् रूपादि-
त्यादौ प्रतिज्ञासंग्रहायावच्छेदकद्वयोपादानम् अन्यूना-
नतिरिक्तपदमिति च मूलमुद्देश्यानुमित्यन्यूनानतिरिक्तवि-
षयभागपरं हेतुत्वमभिधेयं मेयत्वादित्यादौ पञ्चम्यर्थपञ्चक-
हेतुवारणाय पञ्चम्यन्तान्यत्वस्य हेत्वन्यत्वस्य वावश्यं वाच्य-
त्वात् संख्यातिरिक्तसुबर्थस्य प्रातिपदिकार्थे विशेष्यत्वेनैवा-
न्वयात् प्रातिपदिकार्थयोः क्रियाप्रातिपदिकार्थयोश्च भेदेन
साक्षादन्वयस्याव्युत्पत्तेर्वक्ष्यमाणत्वात् चैत्रस्येदं न मैत्रस्य
मैत्रस्येदं न चैत्रस्य द्वयोरिदं नेदमेकस्यापीत्यादौ चैत्रादि-
सम्बन्धाभावबोधस्य विना विभक्त्यर्थविशेष्यतामनुपपत्तेः
चैत्रो न पचतीत्यादौ तिङर्थस्येव विनाप्यनुयोगिनि सप्तमीं
सुबर्थस्याप्यभावान्वयात् हेतुविषयकज्ञानजनकत्वव्याप्याव-
यवतावच्छेदकरूपशून्यत्वे सत्युदाहरणान्यन्यायावयवत्व त-
त्त्वम् तादृशञ्चावच्छेदक हेतुत्वादिकमिति केचित्। हेत्व-
भिधानेति जिज्ञासाजनकत्व तद्योग्यतावाक्यत्वं न्यायावय-
वत्वम्। लिङ्गेत्यादि लिङ्गाविषयेति पूर्वोपदर्शितार्थकम्
अभावहेतुकव्यतिरेक्युदाहरणवारणाय लिङ्गीति लिङ्गिसाध्यं
तद्विषयकं तद्विशेष्यकं तेनेदं जलं निःस्नेहत्वप्रकारकप्रमा-

विषयत्वशून्यत्वात् इदं द्रव्यं जलान्यत्वप्रकारकप्रमाविषयत्व शून्यत्वादित्यादौ यत्र भ्रम तदितरैतत्वप्रकारकप्रमाविषय त्वाद्युदाहरणे नातिप्रसङ्ग । लिङ्गाविषयेत्यस्य पूर्वोक्त व्याप्यत्वाविषयार्थकत्वे हेत्वारणाय लिङ्गेति लिङ्गवि षयत्वञ्च प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्व विषयतावच्छिन्नभावेन साध्य तेन वह्निमान् वह्निमत्त्वीयत्वात् अथ हेतुरिदं वा हेतुत्व तत्त्वेन प्रतीयमानत्वादित्यादौ हेतौ नातिप्रसङ्ग लिङ्गविषयकज्ञानजनकत्वनियतलिङ्ग विषयकज्ञानजनकत्वनियतावच्छेदकरूपवत्त्व तत्त्व मित्यादिकं तादृशावच्छेदकरूपान्तरापरिचये दुर्ग्रहत्वा दनुपादेयम् । अनुमितीत्यादि जनकान्त न्यायावयवार्थक निगमनवारणाय साध्याविषयेत्यादि साध्याविषयत्वञ्च प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयतावच्छि न्नभावेन पूर्वापरघटितसाध्यपरम्परासाधारणप्रकृतपक्षविशेषण त्वेन वा तेन पूर्वापरघटितहेतौ साध्याप्ति इदं न दण्डाज्ञात दण्डसंयोगाजन्यद्रव्यत्वात् अयं न धूमवदालोकवान् आर्द्रे न्धनशून्यत्वादित्यादौ व्यतिरेकिण्युदाहरणस्य हेतुत्वपक्षक साध्यान्वितसार्थबोधपदानामिन उपनयस्य च वारणाय हेतुविभक्तिमदिति तदर्थञ्च प्रकृतसाध्यान्वयबोधसमर्थोप स्थितिजनकत्वं [illegible] इति सम्प्रदायायातम् । यदि च पर्वतो पर्वतभिन्नत्वप्रकारकज्ञानस्य विशेष्यतया अभावस्य साध्यत्वे हेतुत्वञ्च विपार्थविवक्षा च न्यायप्रयोगस्तत यथा

तादृशज्ञानाभावादुत्पन्नं ज्ञानमिति दृष्टान्तशालिनि व्यति-रेक्युदाहरणेऽतिव्याप्तिरित्युच्यते तदावयवान्तरोपस्थितार्था-न्वितस्वार्थबोधकविभक्तिमत्त्वं वक्तव्यम् उदाहरणान्यत्वेन वा विशेषणीयम्। केचित्तु साध्यविषयकधीजनकत्वानियतहेतु-विभक्तिमत्त्वनियतावयवतावच्छेदकरूपवत्व ममुदितलक्ष-णार्थ इत्याहुस्तच्चिन्त्यम्। हेतुत्वप्रतिपादकेति विभ-क्त्यर्थः हेतुत्वविशेष्यकान्वयबोधजनकन्यायावयवत्वमित्यर्थः हेतुत्वं प्रमेयमित्यादिप्रतिज्ञावारणाय विभक्त्यर्थेति तस्मा-दितरेभ्यो भिद्यते इत्यादि निगमनवारणाय हेतुत्वेति विशे-ष्येति च। घटो दण्डाद्वह्निधूमादित्यादिका तु न प्रतिज्ञा तद्वृत्तेरतदात्मनश्च तद्धर्मव्यापकत्वायोगात् सम्प्रदाय-विरोधाच्च तेन तत्रत्यनिगमने नातिव्याप्तिरिति भावः। उदाहरणेति क्वचिज्जिज्ञासानुत्पादेऽपि तद्योग्यतासत्त्वा-न्नाव्याप्तिः अनुक्तोदाहरणस्थलेऽपि तादृशयोग्यतासत्त्वान्न्या-यावयवेति उदाहरणत्वञ्चेह न न्यायगर्भं वैयर्थ्यात्। साध्याविषयेत्यादि अयं न दण्डाद्दण्डसयोगाजन्यद्रव्यत्वा-दित्यादौ प्रतिज्ञानिगमनयोर्वारणाय साध्याविषयेत्यादि-व्याख्यातार्थकमुपनयविशेषवारणाय हेतुपञ्चम्यन्तेति। हे-त्विति हेतुत्वबोधकार्थकं हेतुपञ्चम्योर्वैकल्पिकमुपादेयम् उप-नयस्य चान्तेऽनुसन्धीयमाना प्रथमैवान्तः एवं दण्डादित्यादेः स्वपरस्यापि दृष्टान्तस्य पञ्चम्यन्तत्वेऽन्वयायोगात् कस्यचि-द्व्यतिरेकिण उदाहरणस्य पञ्चम्यन्तत्वसम्भवे तु तद्वारणं

पूर्ववच्च सार्ववद्वागम्य हेतुपञ्चम्यन्तस्य बोध्यम् तेन निर
र्थकतन्निमित्तपञ्चमीसमास इत्यादौ साध्यासिद्धिः पञ्चम्यादेस्त
न्निमित्तार्थवादिनां नये तु नानुपपत्तिगन्धोऽपि। केचित्तु
हेतुपञ्चम्यन्तस्य हेतुत्वप्रतिपादकपदगाम्भिन्न पूर्वमसाध्या
विषयकज्ञानजनकत्वञ्च इतरनैरपेक्ष्येण प्रकृतपक्षत्वविशिष्ट
साध्यविषयकज्ञानाजनकत्वं साध्यत्वेऽत्र न विवक्षितं वैयर्थ्या
दित्याहुः। पञ्चम्यन्तेति अनुमितिपरवाक्यस्थम् अवयवस
न्दर्भादौ पञ्चमी साधनिकी इत्यादिभवत इत्यादौ साध
र्म्येनाबाधितत्वे अवधिमत्त्वे वा प्रकृतत्वात् दृष्टनिष्ठमवधित्व
मिव विभागनिष्ठमवधिमत्त्वमपि सम्बन्धविशेषः न चाति
रिक्तोऽनतिरिक्तो वेत्यन्यदेतत् तत्सम्बन्धापत्तेः च व्यवहार
प्रतिभ्रमात् वृक्षादपैति पतति इत्यादौ साधवादिभागे
प्रतिसञ्जनकत्वञ्च क्रियाया सम्बन्धमर्यादया भासत
इत्यपि वदन्ति। अतो निगमेऽतिव्याप्तिरतः पञ्चम्यन्तेति
तस्मादित्यत्र च तत्पदे न लक्षणा गत्यैव तादृगज्ञानोप
स्थितिसम्भवात् पर्वतो वह्निमान् वह्निसाधनीमान् वा
तस्मादित्यादिकन्तु न न्यायप्रयोग सम्प्रदायविरोधात् इति
वदन्ति। यत्तु केवलान्वयानुरोधात् वह्निमानित्यादावपि ज्ञान
साधनमितिसमपञ्चम्या ज्ञापकत्वे साध्यत्वे वा लक्षणयैवोपपत्तौ
तत्र च लक्षणायां मानाभावादतएवोक्तम् आहत्यै सैव
प्रतिज्ञेति अतएव व्याचष्टे यतो द्रव्यं गुणाः कर्मेत्यत्र
हेतुत्व यथाप्रमितसुत्पादकत्व ज्ञापकत्वञ्चेति अतएव लोके

वोपनयत्वम् अवयवार्थविशेष्यकस्वार्थबोधजनकन्यायावयवत्वं निगमनत्व हेत्वर्थस्य प्रतिज्ञार्थे न विशेषणत्वेनान्वेति किन्तु तदेकदेशार्थे इत्युक्तप्रायम्।

एतावता प्रबन्धेन सपरिकरं हेतुं निरूप्य तत्प्रसङ्गात् तत्त्वनिर्णयादिरूपतत्कार्य्यकारित्वाच्च तदाभासनिरूपणं प्रतिजानीते अथेति अनुमितीति यथाश्रुतमिदं हेतुदोषाणां लक्षणं तद्वत्त्वञ्च दुष्टहेतूनां तदभिप्रायेणैव उपधेयसङ्करेऽपी-त्यादि वक्ष्यति तत्रानुमितिपदम् अनुमितिनिष्ठकार्य्यतानिरूपकसम्बन्धित्वेनानुमिति तत्कारणज्ञानपरं साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारानुमितिपरं वा तेनैकत्र हेतौ व्यभिचारादिग्रहेऽप्यन्यस्य परामर्शादनुमित्युत्पादेन व्यभिचाराद्यास्यादिज्ञानेनान्यथासिद्धत्वाच्च व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽपि न क्षतिरिति वदन्ति। पर्वतो निर्वह्निर्धूमो वह्नेरभिधेयत्वं वा मेयत्वस्य व्यभिचारीत्यादिभ्रमादनुमितिप्रतिबन्धादाह यथार्थेति ननु प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्यादेरपि प्रत्येकं हेत्वाभासतापत्तिः। अथ विशिष्टविषयज्ञानं प्रतिबन्धकं तद्घटकञ्च न विशिष्टमिति चेत्तर्हि यथार्थेति व्यर्थं भ्रमविषयविशिष्टस्याप्रसिद्धत्वादित्यनुशयेनाह यदिति। केचित्तु दुष्टावनामे हेतुमात्रतानि लक्षणानि तत्र तृतीयमिव प्रथममपि ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमभ्युपेत्य तदर्थञ्च तादृशाभावप्रतियोगिनो ये व्यभिचारादयस्तत्प्रकारकयथार्थ-

ज्ञानविषयत्वमपि च तत्त्वमित्यस्य तद्दत्त्वमित्यर्थं आपाद्यैव वा दुष्टहेतुलक्षणत्वमिति प्राञ्चः । लिङ्गमविवक्षितं यदपि यत्त्वेन यादृशविशिष्टविषयत्वेन तेनानुमितिप्रतिबन्धकपक्ष विशेष्यकभ्रमविषये साध्याभावादौ मल्लत्वादिनिष्ठे नाति प्रसङ्गः अवच्छेदकत्वे ज्ञानातिरिक्तष्ठत्वेन विशिष्टस्या सत्त्वेऽपि भ्रमात् प्रतिबन्धेऽपि न क्षतिः विशेषणीयञ्च तादृशविशिष्टान्तराघटितत्वेन तेन प्रमेयत्वादिविशिष्टे स-व्यभिचारादौ नातिप्रसङ्गः एवञ्च पक्षतावच्छेदकादिविरह विशिष्टः पक्षः पक्षनिष्ठस्तद्विरहो वा साध्याभाववद्वृत्ति साधनं साधनवद्वृत्तिसाध्याभावो वा हेतुदोषः येन केनापि सम्बन्धेन तदाय प्रकृतो हेतुर्दुष्टः यादृशधर्म्मिणि यादृश धर्म्मवत्ताज्ञानमनुमितिप्रतिबन्धकं तस्य धर्म्मिणस्तादृश धर्म्मवत्वं हेतुदोष इत्यपि कश्चित् । अथ पर्वतत्वेन पक्षत्वे वह्नित्वेन साध्यत्वे विशिष्टधूमत्वेन च हेतुत्वे पर्वतादि काञ्चनमयत्वविरहो ह्रदस्य वह्निधूमशून्यत्वं पर्वतस्य महान सीयवह्निधूमविरहित्वं मेयत्वस्य केवलधूमस्य वा वह्निव्यभि चारो विशिष्टस्य धूमस्य वा पर्वतीयवह्निव्यभिचारो न दोषः न वा तत्सम्बन्धेन तत्र तस्य हेतोर्दुष्टत्वम् अतस्तद्रूपावच्छिन्न तत्पक्षकतद्रूपावच्छिन्न तत्साध्यकतद्रूपावच्छिन्नतद्धेतु कानुमितिप्रतिबन्धकत्वं वाच्यं तथाच निर्वह्निः पर्वतो वह्निमान् पर्वतावृत्तिवह्निमान् वा तद्व्यभिचारिणि पर्वता-वृत्तिर्वा धर्म्मादित्यादौ न कोऽपि हेत्वाभासः स्यात् तादृशा

नुमितेरप्रसिद्धत्वादिति । अत्र वदन्ति यद्विषयनिश्चयस्य विरोधिविषयताप्रयुक्तास्तदुत्तरम् अनुमितौ अनाहार्य्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्ट-हेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वं हेतुदोषत्वं पक्षतावच्छेदकवैशिष्ट्यादिकञ्च वैज्ञानिकं न तु वास्तवं ग्राह्यं व्याप्तिश्चानुयतो व्यतिरेकतश्च वाच्या तादृशावगाहित्वप्रसिद्धिराहार्य्यज्ञान एवाभ्युपेतव्यानन्यगतिकत्वात् एवञ्च वस्तुमात्रनिश्चयादनन्तरं निर्वह्नित्वाविशिष्टे वह्नेरग्रहेऽपि न क्षतिस्तस्य विरोध्यविषयकत्वात् एवं साध्यनिश्चयोत्तरं तस्यानुमितावपि मानसज्ञानाविरोधित्वाच्च तादृशि पक्षे तादृशसाध्यवैशिष्ट्यस्य तादृशसाध्यनिरूपितव्याप्तिविशिष्टतादृशहेतुवैशिष्ट्यस्य चावगाहिनी ज्ञानस्य यद्विषयं ज्ञानं विरोधिविषयकं तत्त्वं तादृशज्ञानविरोधित्वं वा हेतुदोषत्वं ज्ञानविरोधित्वञ्च तद्विषयविषयकग्रहविरोधिग्रहविषयत्वम् एवंविधैव रीतिरुत्तरत्र सर्वत्र सव्यभिचारलक्षणादावनुसर्त्तव्या इत्यपि केचित् । केचित्तु यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः सम्भवन्ति तावदन्यान्यत्वनेकमात्रदोषस्थले च तत्त्वमेव हेत्वाभासत्वं स चातिरिक्त एवान्योऽन्याभाव इति न वैयर्थ्यं पञ्चविधभेदोक्तिस्तु तत्सम्भवस्थलाभिप्रायेण व्यभिचारादेः साध्यादिभेदनियन्त्रितत्वात्

शब्दाभेदमात्रस्य चाकिञ्चित्करत्वादिति भावः । स्यादेतत्
शब्दोऽनित्यः शब्दत्वात् इत्यत्रासाधारण्येऽप्यस्ति सर्वसाध्य
वत्त्वाभावे भ्रमासम्भवात् एव शब्दोऽनित्यः कृतकत्वात् इत्यत्र
सत्प्रतिपक्षे नित्यवृत्त्याप्यद्रव्यद्रव्यत्वादावपि पक्षस्य तद्वत्ता
विरहादित्याशङ्का तयोरन्यत्वेन निराकुरुते दशाविशेष
इति । हेत्वो सद्दोषौ असाधारण पक्षमात्रवृत्ति सन्
प्रतिपक्षौ विरोधिपरामर्शो यस्य स तथा तयोर्दशाविशेषे
हेतौ सर्वसाध्यवद्व्यावृत्तत्वस्य पक्षे साध्याभावव्याप्यवत्त्वस्य च
भ्रमदशायामाभासत्वात् अनुमित्यजनकत्वात्तद्दुष्टत्वाद्
साध्यवद्व्यावृत्तत्वादिषु च प्रतिबन्धकत्व परमायाति न तु
तद्विषयस्य दोषत्वम् असत्त्वात् अन्यथा साध्यभ्रमेणानुमि
त्यनुदयात् तत्रापि दोषत्वं स्यात् कोटि साध्याभावतद्
व्याप्यवत्ता भ्रमयोरनुमितिविरोधित्वे विशेषः निर्युक्तिकस्तु
प्रवादो न श्रद्धेयः यत्तु ज्ञानस्य यदनुमितिप्रतिबन्धकताव
च्छेदकं तद्वत्त्वं तत्प्रकारकप्रमाविषयत्वञ्च लक्षणार्थः तच्च
द्विविधं विषयरूपं साधारण्यादिबाधे च प्रमितसाध्याभाव
वान् पक्षः तद्विषयत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वात्
अविषयरूपञ्च विरोधिसामग्रीकालीनत्वादिकं तद्वत्त्वञ्च
ज्ञानस्यैव तद्विषयस्य हेतोरपीति तत्र तद्वत्त्वं हि हेतोर्ना
भेदेन बाधे तदभावात् अतएव भास्यतया वह्निव्यभिचारि-
द्रव्यत्वादिमति धूमेऽतिप्रसङ्गश्च साध्याभाववत्पक्षस्यैव
साध्याभाववद्वृत्तिहेतोर्ज्ञानस्य प्रतिबन्धकत्वात् साधारण्यादि

विषयकत्वस्य ज्ञाननिष्ठस्यैव प्रतिबन्धकतावच्छेदकत्वात् सत्तादिसाध्यके ज्ञानेऽतिप्रसङ्गाच्च यथाकथञ्चित्तद्वत्त्वस्य चातिप्रसञ्जकत्वात् विरोधिसामग्रीसमवहितोऽपि च लिङ्गपरामर्शो न स्वसाध्यकानुमितेः प्रतिबन्धको मणिसमवहितो वह्निरिव दाहस्य अथ यद्धर्मविशिष्टज्ञाने सत्यवश्यमनुमितिप्रतिबन्धः तदेवात्र प्रतिबन्धकतावच्छेदकमुक्तं भवति च प्रतिबन्धकीभूतविरोधिसामग्रीकालीनत्वादिविशिष्टे परामर्शे तथा इति चेत् न वैजात्यादिसाधारणकारणघटिता सामग्री कार्यप्रतिबन्धिका विशेषतस्त्वत्र तत्सत्त्वे कार्योत्पादस्य दुर्वारत्वात् किन्तु विरोधिपरामर्शस्तथा यदि च तत्सत्त्वेऽपि तत्साध्ये बाधावताराग्नानुमितिप्रतिबन्धः प्रामाणिकस्तदा अप्रामाण्यग्रहाभावस्येव तदभावस्यापि वैशिष्ट्यन्तत्र निवेश्यतां यथा च भ्रमप्रमासाधारणविरोधिपरामर्शसत्त्वे नानुमितिस्तथा तथाविधबाधादिग्रहेऽपीत्यतिप्रसङ्गः। नचातीतादौ लिङ्गे विरोधिपरामर्शकालीनत्वमपि यदपि तद्विषयत्वेन ज्ञानस्य अनुमितिप्रतिबन्धकत्वं तद्वत्त्वमेव वाच्यं सत्प्रतिपक्षे च विरोधिव्याप्त्यादिकमेव तथा तद्वत्त्वमपि हेतौ स्वज्ञानरूपसम्बन्धेन तस्य समूहालम्बनरूपतया हेतुद्वयविषयत्वादिति तदपि तुच्छं साध्याभाववत्पक्षविषयत्वेन तादृशपक्षज्ञानप्रमात्वविषयत्वेन वा ज्ञानस्य प्रतिबन्धकत्व तस्य च साध्यवत्यपि पक्षे सम्भवादतिव्याप्तेः विशिष्टविषयत्वेन प्रतिबन्धकत्वं विशिष्टञ्च तत्राप्रसिद्धमिति चेत्तर्हि किं

सर्वत्र सत्प्रतिपक्षे साध्याभावव्याप्यवान् पक्ष प्रसिद्ध यथाकथञ्चित् सम्बन्धेन तद्वत्त्वस्यातिप्रसक्त धूमादेरपि ज्ञान रूपेण तदाश्रयाश्रयत्वादिना वा सम्बन्धेन व्यभिचारादि मत्त्वात् यादृशसम्बन्धावगाहित्वेन ज्ञानस्य प्रतिबन्धकत्व तेन तद्वत्त्वञ्च न सर्वत्र सत्प्रतिपक्षिते हेतावस्ति च क्वचित् सङ्कुचितायिति स्तत पक्षवितेन।

यद्यपीति स्याणुत्वाभावस्य तद्याप्यकरादेश निश्चये स्याणुत्वमत्यक्षशाब्दयोरनुदयात्। मत्रैव नरशिर कपालं शुचि प्राण्यङ्गत्वादित्यादिनाप्यागमप्रतिरोध स्यात् तत्रानु कूलतर्काभावेन प्रनयपरागमविरोधेन च व्याप्तिनिश्चय स्यानुमितेयानुत्पत्तेरिति भाव यद्वेत्याद्यभ्युपगमाच प्रत्यक्ष प्रत्यागुमानिकबाधादिनिश्चयस्याप्रतिबन्धकत्वेऽपि शाब्द प्रति प्रतिबन्धकत्वात् योग्यताज्ञानेनान्यथासिद्धत्वात् तदभावो न तत्र हेतुरिति चेदेवमप्युपनीतभानविशेष प्रतितत्त्वेन हेतु तायादुर्वारत्वात्। यद्यपि लक्षणत सामान्यप्रतीतवतो विशेषजिज्ञासानुदयात् सामान्यलक्षणानन्तरमेव विशेष विभागो युक्तस्तथापि सव्यभिचारपदस्य साधारणमात्रे प्रसि द्धतया तन्मात्रस्य लक्षणभाव बुध्यमानैरन्येषामसिद्धिरसाधा रणादिसाधारणस्य लक्षणस्यातिव्याप्तिसत्त्वाद्दृत्तत्त्वेन च साध्यता प्रतीयेत पतत्रिवारणाय लक्षणान्तरमपि दर्शयति सव्यभिचार इति। कश्चित्तु सामान्यज्ञानाधीनो विभागो न तल्लक्षणत प्रत्ययमपेक्षतेऽत प्रथमं विभागकरणेऽपि न दोष

इत्याह । प्रसक्तिरनुमितिरापत्तिर्वा तदुपधानमव्यापकमति-व्यापकञ्च तथाविधव्याप्तिभ्रमेण सङ्केतावतस्तद्योग्यता वाच्या सा च तादृशव्याप्त्यादिरूपा न च विरुद्धो भयव्याप्यत्वमेकस्य सम्भवतीत्याह एकस्येति । साध्येति कोटिद्वयोपस्थापकं सत् साध्यसन्देहजनकं साध्यसन्देहजनककोटिद्वयोपस्थिति-जनकमिति यावत् । आश्रयतया विषयितया वा नित्यत्वानित्यत्वोपस्थापकस्य नित्यत्वे साध्ये ज्ञानस्यानुवृत्तत्वव्यावृत्तत्वाभ्यां वह्नितदभावोपस्थापकस्य वह्नौ साध्ये धूमस्य वारणाय जनकान्तम् । तथोपस्थितेः साध्यसन्देहाजनकत्वात् धर्म्मि-तावच्छेदकपुरीवर्त्तित्वादिविशिष्टधर्म्मिज्ञानस्य संशयजनक-तया तद्वारणाय कोटिद्वयोपस्थापकेति । न च तदसाधा-रणतया संग्राह्यमेवेति वाच्यं तथात्वेऽपि तदुत्तीर्णतादशायां विशेषदर्शनात् संशयानुपधायकत्वेऽपि तज्जननयोग्य-ताया अनिवृत्तेः । अन्यथा यथायथं पक्षे साध्यतदभाव-निश्चयदशायां साधारणाव्याप्तिप्रसङ्गात् । प्रतिपक्षसम्वलन-दशायां हेतुमत्ताज्ञानस्य साध्यसन्देहजनकत्वपक्षे हेतु-वारणाय कोटीत्यादिहेतुना साध्यस्य प्रतिहेतुना तद भावस्य उपस्थापनादुभयोपस्थापकत्वं न कस्यापीत्यपि कश्चित् । इदं द्व्यणुकं नित्यमणुत्वादित्यादौ साधारणधर्म्मवत् धर्म्मिज्ञानस्य कोट्युपस्थितिं संशयञ्च प्रतिहेतुतया-तद्विषये धर्म्मिणि सद्धेतौ अतिप्रसङ्गः स्यादतः पक्षधर्मतेति पक्षपद धर्म्मिमात्रपरम् । नचैव नित्यो घटः शब्दत्वादित्यत्र

साधाद्यवतारेऽसाधारण्यापत्तिरिष्टत्वात् अन्यथा साधाभिव्या रम्यतरावतारदशायां साधारणमपदापत्ते असिद्धिसदी र्णत्वे सव्यभिचारमध्यापर्येण सव्यभिचारसङ्कीर्णतया असि द्धेऽप्यनन्तर्भावापत्तौ तथ्यातिरिक्तहेत्वाभासत्वापत्ते न च व्याप्यविरुद्धयो साधारण्यभ्रमदशायामतिप्रसङ्ग धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञान साध्यसंशयजनक तद्रूपावच्छिन्न स्यैवांशत्वात् तत् रूप साधारणत्वादीति सिद्धान्ते स्फुटी भविष्यति । इष्ट सविपक्षमात्मसत्त्वं वा ज्ञानत्वात् इत्यादौ प्रामाण्याप्रामाण्यसंशयस्य तद्घटकीभूतसाध्यतदभावविषय कतया कोट्युपस्थितिरूपस्य तत्कीभूतज्ञानविषये ज्ञानत्वे तु नातिप्रसङ्गस्तदापि साधारणधर्मवत्ताज्ञानस्य तज्जन्यकोट्युप स्थितेर्वा संशयजनकतया तज्ज्ञानस्य तादृशसंशयहेतुत्वात् प्रामाण्यसंशयस्य तु ज्ञानत्वस्य साधारणधर्मदर्शनात् ज्ञाने प्रामाण्यस्य ज्ञानविषयतात्मकसाधारणधर्मदर्शनाच्च विषये तद्वत्त्वस्य सन्देह अप्रामाण्यसन्देहस्यान्वयानुविधानन्तु भ्रमत्वज्ञानशून्यविरोधिज्ञानस्य प्रतिबन्धकतया तदपसारण प्रयुक्तमित्यस्वाकरे व्यक्तत्वात् व्याप्यवत्तासंशयस्य पृथग्व्या पकवत्तासंशयहेतुत्वपक्षे ज्ञानपद विषयपरं हेतुत्वाभिमत विशेषणन्तु येन सम्बन्धेन तदुभयसाहचर्य्यं तेन सम्बन्धेन तद्वत्ताज्ञानस्य संशयादिजनकतासूचनार्थं तेनात्मत्वरूपा त्मत्वादिसाध्यके समवायसम्बन्धेन हेतौ ज्ञानघटादौ वि षयत्वसंयोगादिना तत्सन्देहजनके नातिप्रसङ्ग इति । वि

प्रतिपत्तौ प्रत्येकं कोटिद्वयोप स्थापकत्वाभावात् लक्षणस्थद्वयपदेन तद्वारणात् मिलितस्य तदुपस्थापकत्वेऽपि तद्वत्ताज्ञानं न तथा न वा मिलित्वा द्वयोर्ज्जनकत्वं तथात्वेऽपि वा येन सम्बन्धेन तद्वत्ताज्ञानमुभयकोट्युपस्थापकं तेन सम्बन्धेन हेतुत्वेऽवश्यं सव्यभिचारत्वमिति ।

अनुपसंहारी पक्षएवेति अनुपसंहारितादशायां साध्यतदभावसहितत्वनिर्णयाभावेऽप्युक्तक्रमेण वास्तवतत्सहचरितत्वमादायैव लक्षणसमन्वय इति भावः । केचित्तु व्याप्यादिधर्मेऽपि साधारण्यज्ञानात् संशयस्योदयात् तदज्ञाने च वस्तुतः साधारण्यज्ञानेऽप्यनुदयात् साधारण्यज्ञानं हेतुस्तत्र निश्चयत्वमकिञ्चित्करं गौरवात् तथाच पक्षएव तत्संशयात्मकतदुभयसाहचर्य्यज्ञानाद्भवति तथात्वमिति भाव इत्याहु. तच्चिन्त्यम् । ननु केवलान्वयिसाध्यकानुपसंहारिणि साध्याभावाप्रसिद्धा तत्संशयाद्यभावादव्याप्तिः एवं यत्र स्थिरे धर्म्मिणि पूर्वं घटत्वं गृहीतमुत्तरदशायां तत्रैव दोषात् घटत्वाग्रहे तद्घटभिन्नोऽयमिति भ्रमे च घटत्वनिश्चयविषयीभवद्धर्मिव्यावृत्तत्वेन गृह्यमाणतया असाधारणे इदन्त्वेऽपि वस्तुतस्तद्व्यावृत्तत्वाभावेन तत्र लक्षणायोगादित्यतस्तयोर्लक्ष्यत्वाभावेन परिहरति केवलान्वयीति । अतएवेति अतएव पुरुषदोषाधीनं तद्दोषत्वम् अतएव तस्यानित्यदोषत्वं साहजिकत्वे कादाचित्कत्वानुपपत्तेः एवञ्च यत्र दोषताप्रयोजकं

वस्तुतो हेतौ तथानिश्चदोषत्वमपि यत्र पुरुषस्य तद्भ्रमो न तत्र तदपि भ्रममात्राद्दुष्टत्वेऽतिप्रसङ्गादित्यन्यथेति केचित्। परे तु अयं घटः एतत्त्वादित्यादावव्याप्तिः। साध्य सन्देहप्रयोजकं हि तस्य साध्यतदभाववद्वृत्तित्वं साटकस्य धर्मस्य तदुभयव्यावृत्तत्वं सम्भवति असाधारण्यन्तु तस्य पच मात्रवृत्तितया अतसाध्यामन्वतयोस्तरयति अयं घट,इत्यादि एवव्यावृत्तिगगनादिकमेवासाधारणं पक्षवृत्तित्वभ्रमदशाया श्चासाधारण्यमस्मदग्न न चोभयव्यावृत्तत्ववृत्तित्वयो स्वरूपतो विरोधः निश्चितसाध्यतदभाववद्व्यावृत्तत्वम् न सन्देह प्रयोजकं तथा सति तुल्यन्यायतया निश्चितसाध्यतदभाववद्वृत्तित्वस्यापि तथात्वे सवेतापि साध्याभाववत्त्वभ्रमविषय वृत्तित्वग्रहदशायामतिप्रसङ्गात् न च तादृगनिश्चयविषयस्य धर्मिणो वास्तव साध्याभावादिमत्त्वमपि तस्य मानाभावात् किञ्च सन्देहजनकतावच्छेदकरूपस्य विशेषणत्वे व्यभिचारिणि रासभादौ महानसादिवृत्तितादशायामव्याप्तिः उपलक्षणत्वे असाधारण्योत्पत्तौ तादृशायामतिव्याप्तिः असाधारणप्रकरण-समयोस्तत्त्वेन भ्रमविषययोरनित्यदोषत्व विशेषादर्शनादशायामनुमित्यनुत्पादप्रयोजकत्व ननु वास्तव हेतुदोषत्वम् अन्यथानुमित्यनुत्पादप्रयोजकज्ञानविषयतामात्रेण वास्तवहेतु दोषत्वे इत्याहुः। अनश्वगतसाध्यसहचारत्वे सति अवगत साध्याभावसहचारतया विरुद्धत्वमेव तयोरिति तदभ्युप गममात्रेण वस्तुतो यथोपवर्णितलक्षणस्य न तथात्वसिद्धिरिति

ध्येयम् । यद्रूपज्ञानमनुमितिप्रतिबन्धकं तदेव विभाजकम् अन्यथा अतिप्रसङ्ग इत्यभिप्रेत्य दूषयति नैतदिति । वस्तुतस्तु उपस्थापकत्वादिज्ञानमनुमितेस्तज्जनकस्य वा न प्रतिबन्धकं विरोधिविषयकत्वाभावात् एवमुत्तरत्रापि पक्षवृत्तित्वे सतीति विरोधित्वं विरोधिज्ञानविषयत्वम् अव्याप्तिपदम् अत्यन्तायोगव्यवच्छेदार्थकं तेन संयोगसम्बन्धेन व्यभिचारिणि द्रव्ये हेतौ व्यभिचाराभावदशायां नाप्रसङ्गः साध्यवद्वृत्तिस्तु नासाधारण इति हृदयम् । अपक्षधर्म्मधूमादिवारणाय सत्यन्तं पक्षः सन्दिग्धसाध्यो धर्म्मी विशिष्टहेतौ तद्वृत्तित्वग्रहाविरोधित्वञ्च तदर्थः तथाच पक्षतावच्छेदकरूपेण पक्षे साध्यतावच्छेदकरूपेण साध्यस्य हेतुतावच्छेदकरूपेण हेतोर्वा यज्ज्ञानं तदविरोधित्वस्य लाभात् पक्षसाध्यसाधनाप्रसिद्धिस्वरूपासिद्धिबाधप्रतिरोधानां निरासोऽसिद्धिसङ्कीर्णसंग्रहः विरोधोऽपि फलतः प्रतिरोधएव तदन्यत्वेन वा विरोधि विशेषणीयं वक्ष्यते च सिद्धान्ते विरुद्धान्येति हेतुसाध्यसामानाधिकरण्यग्रहाविरोध्यर्थकं सम्बन्धपदबलेन प्रकृतहेतुसम्बन्धितया विरोधित्वे तात्पर्य्योपदर्शनेन प्रायशो बाधादिवारणेऽपि घटत्वमनित्यं घटत्वादित्यादौ प्रयत्नसाध्यमिव तत् प्रतिभाति वस्तुतस्त्वनुमितिपदं तत्कारणज्ञानपरम् आश्रयासिद्ध्यादिवारणाय सत्यन्तं तादृशपक्षकतादृशहेतुकग्रहाविरोध्यर्थकम् अनया च वाचोभङ्ग्या व्याप्तिग्रहविरोधित्वमेवाभिदित्सितं तेन वह्निमान् वह्निमान् ह्रदत्वादित्यादौ हेतोः

साध्यवद्वृत्तित्वादेर्नामग्रह विवेचयिष्यते चेदमुपरिष्टात् । सपक्षेति सम्भावनायानम अतएवानुपद विरुद्धोऽपीत्यादिक व्यर्थेति विशेषण पक्षावृत्तित्व साध्याव्याप्यत्व इति हेत्वाभासत्व हेतुवदाभासतामत्व वाच्यवच्य वृत्तिमत्त्वम् एवञ्च साध्यतद् दभावव्याप्यत्वग्रहविरोधिवृत्तिमत्त्वग्रहाविरोधिरूपवत्त्वमर्थ । साध्यतदभाववद्वृत्तित्व साधारण्य मिथितसाध्यतदभाव वद्व्यावृत्तत्वमसाधारण्यं तत्र व्याप्तिग्रहग्रहविरोधीति इद यम् असिद्धिविशेषणत्ववृत्तित्व वृत्तिमत्त्वग्रहविरोधि सा ध्यतदभाववद्व्यावृत्तत्वमपि यदीदृश तदा अभिविरेय मो चेदिदमेवासाधारण्य बोध्य साध्याप्रसिद्ध्यादिवार- णाय विशिष्टसाध्यसाधनग्रहाविरोधित्व वाच्य व्यापकसा मानाधिकरण्यमिह व्याप्यत्व तेन च द्वितीयस्य भेद रीतिमुखेव । केचित्तु असाधारण्याभावकालावच्छिन्नसा ध्यतदभावव्याप्तिशून्यत्व विवक्षितं विशेषणाभावात् वस्तुतो व्याप्यस्य विरुद्धस्य वा असाधारणस्य संग्रह इत्याहुस्तच्चि न्त्यम् । व्यर्थेति विरोधादेर्वारकं साध्याभावेत्यादि व्यर्थ तस्य पार्थक्ये प्रमाणाभावादिति भाव । प्रथममित्यादि गगनमित्यादि च दूषण यथाश्रुते नापीत्यादि सपक्षविप- क्षावच्छिन्नव्यावृत्तत्व सर्वसव्यावृत्तत्व व्यर्थेति सपक्षवृत्ति त्वविपक्षव्यावृत्तत्वयोदूषकतायामनुपयोगादिति भाव । पक्षातिरिक्तेत्यादि व्याप्यविरुद्धयोरसाधारणयो संग्रहाय पक्षातिरिक्तपदे पक्षत्व सन्दिग्धसाध्यकत्व धूमेत्यादिदूषण

यथा श्रुते ननु सप्तमीसमासात् पक्षातिरिक्ते वर्त्तते यत्साध्य-वन्मात्रवृत्ति साध्याभाववन्मात्रवृत्ति च तद्भिन्नत्वमित्यर्थं इति ध्येयम् । पक्षवृत्तीत्यादि विरोधः साध्यासामानाधिकरण्यं पक्षवृत्तित्वसाध्यासामानाधिकरण्यग्रहाविरोधी योऽनुमितेरौपयिकस्य जनकज्ञानविषयस्य सम्बन्धस्य सपक्षसत्त्वादेरभाव-स्तद्वत्त्वमित्यर्थः सपक्षविपक्षव्यावृत्तत्वस्य चासाधारण्यस्य असाधारण्ये निश्चये पक्षे साध्यसामानाधिकरण्यसन्देहान्न तस्य तज्ज्ञानविरोधित्वं पक्षवृत्तौ विरुद्धभिन्ने च वर्त्तते यस्ताद्दृशोऽभावस्तद्वत्त्वमर्थं इति केचित् । पूर्वोक्तलक्षणानां यथोक्त-रीत्या यथामतं नाव्याप्त्यादिसम्भावना परन्तु तज्ज्ञानस्यानु-मित्यप्रतिबन्धकतया तेषां हेत्वाभासतावच्छेदकत्वं न घटते न घटतां किन्तेन तेषां हेत्वाभासविभागमात्रोपयोगित्वादित्या-शयेनाहउच्यत इति । सन्देहं प्रत्येव साधारण्यादिविशिष्टध-र्म्मवद्धर्म्मिज्ञानत्वेन हेतुता तज्जनककोटिद्वयोपस्थितिं प्रति तु तादृशधर्म्मज्ञानत्वमात्रेणेत्यभिप्रेत्याह उभयेति । साध्यसन्दे-हजनकेति प्रकृतं यथाकथञ्चित् कोटिद्वयोपस्थितिः स्मृत्यनु-भवसाधारणीसन्देहजननीनियामकन्तु साधारण्यादिविशि-ष्टधर्मवत्ताज्ञानम् अतएव धारावाही सन्देह इति मते तु धर्म्मितावच्छेदकविशिष्टे धर्म्मिणि यद्रूपविशिष्टज्ञान साध्य-सन्देहजनकं तद्रूपवत्त्वमेव वक्तव्यं कोटिद्वयसहचरित-त्वादिना ज्ञातस्य ऊर्द्ध्वत्वादेरूर्द्ध्वत्वत्वादिना धर्म्मिणि ज्ञानमेव संशयजनकं ननु तदानीं साहचर्य्यज्ञानमपेक्षत इति नये तु

यद्रूपविशिष्टत्वे न गृहीतस्य धर्मस्य धर्मिवृत्तिताज्ञानं तया तद्वत्त्वमेव वाच्यम् । तथेति ननु साधारण्यं न साध्यतदभाववद्वृत्तित्वं वृत्तिमतस्तथात्वासम्भवात् एककोटिव्याप्यस्यैव एककोटिमद्वृत्तित्वस्यापि धर्मस्य बुद्धेर्विशेषदर्शनतया संशयविरोधित्वाच्च सत्प्रतिपक्षे च परामर्शसामग्र्याः संशयोत्तरमेव साध्यसन्देहात् नापि निश्चितसाध्यतदभाववद्वृत्तित्वं तद्धि यत्र यत्र साध्यादिमत्त्वानिश्चयस्तद्वृत्तित्वं येन येन रूपेण यत्र यत्र तन्निश्चयस्तेन तेन तद्वृत्तित्वं वा आद्ये सर्वाणि साध्यव्याप्यवन्ति साध्यवन्ति सर्वाणि वा असाध्यवन्ति प्रमेयाणीत्यादिनिश्चये सामान्यतः पक्षेऽपि साध्यादिनिश्चयात्तथात्वमसङ्ग द्वितीये तु विशिष्यपक्षे साध्यनिश्चयं विनैव शब्दादिना साध्यव्याप्यत्वनिर्णयेऽपि तथात्वापत्तिरेव दोषो वाच्यव्याप्तिपक्षे सति नासाधारण्यं तद्ग्रहभावेन विशेषलक्षणस्य साधारण्याभावविशिष्टस्य तद्ग्रहस्य चाभावेन सामान्यलक्षणस्य विशेषणादतिव्याप्तिनिरासात् विशिष्टाभावादेव च साधारण्ये व्याप्तिभ्रमदशायां नाव्याप्तिरिति चेत् एवं सत्येकेन व्याप्तौ गृहीतायामसाधारणस्य न कस्मिन्दपि प्रति सव्यभिचारित्वं स्यात् स्याद्वा तदपि तत्राप्युक्तरूपघटितमसाधारण्यमस्तु साध्यादिव्याप्यवत्त्वेन रूपेण साध्यादिमत्त्वनिश्चयेऽव्याप्तिप्रसङ्गाच्च न हि घटोऽनित्यो घटावृत्ति शब्दत्वमितिवत् अनित्यत्वव्याप्यवती वृत्तिः शब्दत्वमिति तदानीं निश्चयः अभिहितश्च निश्चितसाध्यतदभाववद्वृत्ति-

त्तत्वं न संशयप्रयोजकं किन्तु साध्यतदभावाभ्यां सहचरितत्वमिव तत्सहचरिताभावप्रतियोगित्वं व्याप्यविरुद्धयोस्तु तत्त्वेन निश्चितयोर्दर्शने विशेषदर्शनवशादेव न संशय इति विभाव्य लक्षणान्तरमाह विरुद्धान्येति विशिष्टसाध्यहेतुसामानाधिकरण्यग्रहाविरोध्यर्थकमर्थतो विरोधिविशेषणं तेन साध्यसाधनयोरप्रसिद्धेरवृत्तित्वस्य परम्परासामानाधिकरण्यादीनाञ्च निरासः पक्षपदञ्च धर्म्मिमात्रपरं तथाच यद्यद्धर्म्मिवृत्तित्वं हेतोर्ज्ञायते तत्र तत्रैवानुमितिविरोधि यद्रूपं तद्वत्त्वमित्यर्थः साध्यव्यापकीभूताभावप्रतियोगित्वन्तु तथा बाधप्रतिरोधौ तु धर्म्मिविशेषितत्वात् न तादृशौ सर्वं साध्याभाववत् तद्व्याप्यवत्त्वेत्यादिकञ्च साध्यवत्त्वग्रहविरोधित्वेन सामानाधिकरण्यग्रहविरोधिसाध्यानुमितिसामान्याविरोधित्वं वा विशेषणं तेनैवेति तेनानुमितिविरोधिना विपक्षवृत्तित्वादिना एवकारेणानुगमकं रूपं व्यवच्छेद्य तस्य हेत्वाभासतावच्छेदकत्वं निरस्यति हेत्वाभासस्य लक्षणानुरोधेनेति तेनानुमितिविरोधित्वघटितलक्षणकरणेन असाधारणस्य सत्प्रतिपक्षोत्थापकतया दूषणत्वपक्षे नाव्याप्तिरितरथा पुनरव्याप्तिरेव साध्याभावज्ञापकत्वेन साक्षात्साध्यवत्तानुमितिविरोधित्वेन। सर्व्वं नित्यमित्यादि सम्प्रदायमनुरुध्योक्तम् अतएव तावत्येऽन्तर्भावयिष्यति नापीति निश्चितसाध्यवति साध्यवद्भिन्ने च वर्त्तमानत्वमित्यर्थः। अनुपसंहार्य्ये इति साध्यवदन्यवृत्तित्वांशस्य तत्रापि सत्त्वादिति

भाव मामोति इत्र मपत्तस्य न नियमगर्भमतो नाभेद' घट इत्यादि इत्यत्र विरुद्धस्य अनुपसंहार्य्यस्य प्रसिद्धस्य च विरुद्धान्तरस्य व्यपदेशमादिस्वर्थे अन्वयतो व्यतिरेकतय सद्व्यारावरुद्रग्रायामोद्दा दिलमनुपसहारोति मतमेदमि त्यपि कश्चित् । विपचेति अत्र विपचत्व साध्याभाववत्त्वम् अनुपदमेव वक्तव्या साध्याभाववत्त्विस्मेन साधारण इति मूलएव स्फुटतरमभिधानात् न तु नियमगर्भं तज्ज्ञानस्या प्रतिबन्धकत्वात् न च वस्तुतो अत्र तन्निश्चयस्यापृत्तिग्रज्ञान प्रतिबन्धकं रूपान्तरेण साध्याभाववत्तया निर्णिते रूपान्त रेण हेतुज्ञानेऽप्यप्रतिबन्धात् अचैवेन रूपेण तत्तथा गौरवात् हेतुसाध्याभावयो सामानाधिकरण्यास्फुरणेनाविरोधात् साध्याभाववद्वृत्तिर्हेतुरित्यादि शाब्दज्ञानामामप्रतिबन्धापा तात यत्तु साध्याभावोमि नियमरूपं गौरवेपि सत्य साधारणं साध्याभाववद्वृत्तित्वज्ञान प्रतिबन्धकमन्यथा पक्षएव साध्यसन्दे हेन सन्दिग्धानैकान्तिकत्वापत्तेरिति वदन्ति नहि पक्षे पक्षस मेवा व्यभिचार इति तत्र व्याप्तिनिश्चये हेतौ व्यभिचारसंशया योगात् तदनिश्चयदशायाम् अनुकूलतर्कास्फूर्त्तौ सन्दिग्धानैका न्तिकत्वस्येष्टत्वात् हेतुसाध्याभावसामानाधिकरण्यावगाहित येव ज्ञानस्य व्याप्तिग्रहप्रतिबन्धकत्वात् अतएव पक्ष साध्याति रिक्तपक्षधर्मातिरिक्तधर्मवान् मेयत्वादित्यादयोऽनुकूलतर्कवि रहिणोबाधप्रतिरोधयोरनवतारेऽपि पक्ष एव सन्दिग्धानैका न्तिकतया अमयोजका गीयन्ते एव वह्निर्द्रोहानुकूलेत्यादय

शक्तिसाधका अपि अन्यथा पक्षातिरिक्ते सर्वत्र साध्यवत्ता-निर्णयाद्व्याप्तिग्रहस्य दुर्वारत्वात् पक्षविपक्षान्यतरत्वादिना सर्वत्र सत्प्रतिपक्षप्रसङ्गाच्च अथ साध्यतद्वदत्यन्तान्योऽन्या-भावगर्भव्यभिचारयोरेकोपादानेऽन्यतराव्याप्तिः साध्यवत्ता-ज्ञानप्रतिबन्धकज्ञानविषयत्वेनाभावद्वयानुगमेऽपि हेतुमति तादृशाभाववत्त्वस्य तादृशाभाववति हेतुमत्त्वस्य तादृशा-भावे हेतुसामानाधिकरण्यस्य साध्यतद्वदादौ हेतुसमा-नाधिकरणतादृशाभावप्रतियोगित्वादेश्चासंग्रह इति चेत् अत्र वदन्ति प्रकृतसाध्यसाधनसामानाधिकरण्यग्रहाविरो-धिनो ज्ञानस्य विषयतया अन्वयव्याप्तिग्रहविरोधितावच्छेदक-त्वेन विभजनान्नासंग्रहः अविरोधिन इत्युक्तेन साध्याप्रसि-द्ध्यादीनां निरासः यदि पुनरत्यन्तान्योऽन्याभावयोरेकतर-गर्भव्यभिचारज्ञानस्य नान्यतरगर्भव्याप्तिग्रहविरोधित्वम् इत्यादिकं विभाव्यते तदा साध्यसामानाधिकरण्यघटितत्वे-नान्वयव्याप्तयोऽनुगमनीयाः प्रातिस्विकरूपेणोपादाय वा तावद्व्याप्त्यवगाहित्वं ग्रहस्य वक्तव्यं साध्याव्यभिचरितसामा-नाधिकरण्यस्य व्याप्ते प्रसिद्धस्य हेतौ विरहोऽप्येतद्विशेष एव विशिष्टसाध्यसाधनवत्त्वग्रहाविरोधिनो ज्ञानस्य विषयतया व्यापकत्वग्रहविरोधितावच्छेदकरूपत्वं वा विभाजकं शेषं पूर्ववत् । साध्य तद्वतोरत्यन्तान्योऽन्याभावौ साध्याभावव्या-प्यादिव्यावृत्तेन साध्यवत्ताज्ञानविरोधित्वेनानुगमस्य तत्र हेतुसामानाधिकरण्याभावग्रहविरोधित्वं साध्यवत्ताज्ञान-

विरोधिनि साहशाभावग्रहविरोधित्वाभासमायक्रेऽनकर्षप यस्त्व वा तथा वक्तव्य साध्याभावव्याप्यादौ तु हेतुसामा नाधिकरण्यादिकमविरोधित्वाद्याभास विरोधित्व पूर्वाक्त दिशावसेयम् उपदर्शितविशिष्टव्याप्तिविरहो व्याप्यत्वासिद्धि- रेवेति व्याप्तिग्रहकारणसहचारग्रह मात्रकार्यभावप्रतियो गिग्रहविषयत्वेनानुगम इत्यपि कश्चित्। मार्वा सर्वोपसर- र्पति स सर्वेत्यादि। सर्वेति विपक्षेऽप्यन्वेति तेन साध्या भाववन्नवृत्त्युदास विपक्षत्वस्य निश्चयगर्भत्वात् भूत नित्या गन्धवत्त्वात् नित्य शब्द शब्दत्वादित्यादौ नाव्याप्ति पृथिवी रूपवती रसादित्यादौ जलादेर्नीरसत्वभ्रमे पुन रसाधारण्यभ्रम एवेति मन्तव्यम्। तथापीति पक्षत्व स न्दिग्धसाध्यकत्व मत दूषयति प्रथेत्यादि। व्याप्तीति तथाच स्वतो दूषणासमनायाभावत्वम् उपाधिवदिति भाव' एक धर्मिव्यावृत्तत्वञ्च न सामानाधिकरण्यग्रहविरोधिधर्म्यन्तरे तत्सम्भवात् अन्यथा सतोरपि साध्यसाधनयोर्व्यतिरेकित्व दोषाय स्यात् अथाय शङ्कितुरभिप्राय' पक्षे साध्याभावस्य संशयो निश्चयश्चानुमितिविरोधी विरोधिविषयकत्वात् तत् सामग्री च विरोधिसामग्रीत्वेन तथाच्चिमस्य सामग्रीपक्षे सव्यभिचारस्य हेतोर्ग्रह' द्वितीयस्य तु प्रतिहेतो' परामर्श अतस्तयोराभासत्वम् अतएव सव्यभिचारलक्षणे पक्षवृत्तित्व विशेषण साध्याभाववद्वृत्तित्वमात्र पुनरसिद्धिरेवेति विरो- धान्यस्य परामर्शविरोधिनो रूपस्य तत्त्वादिति नैव बाध

संशयस्य प्रतिबन्धकत्वानङ्गीकारात् साधारणधर्म्मवत्ताज्ञानस्य संशयसामग्रीत्वाभावात् सामग्रीत्वेन प्रतिबन्धकत्वे हेत्वाभासत्वायोगाच्च अन्यथा पक्षस्य साध्यतदभाववद्वृत्ति प्रमेयत्वादिमत्त्वं सर्वत्र हेतावाभासीभवेत् तथा कामिनीजिज्ञासाप्रयोजकं तज्ज्ञानेष्टसाधनत्वादिकमपि । एवं विशिष्टस्यानुज्ञाव्यत्वं व्युत्पाद्य केवलस्यापि सपक्षव्यावृत्तत्वस्य तथात्वं व्युत्पादयति किञ्चेति वाद्युपदर्शितदृष्टान्तस्य साधनवैकल्यन्तु नासाधारण्ये सपक्षान्तरवृत्तित्वेऽपि तत्सम्भवात् तद्भावनन्तु तस्य निग्रहस्थानत्वात् तद्विभाजकसूत्रस्यानुक्तसमुच्चायकचकारेण तस्य समुच्चितत्वात् तदाहरणस्याभासताप्रदर्शनायैव वा आवश्यकस्य प्राचां दृष्टान्तप्रयोग इति भावः । माभूत् परार्थानुमानेऽसाधारण्यं दोषः स्वार्थे तु स्यादत आह स्वार्थेति । स्वमते सिद्धान्तमुपक्रमते उच्यत इति । अर्थादिति व्यतिरेकिमुद्रया अर्थादुभयं साधयेत् अर्थवशसम्पन्नमेवोभयसाधकत्वम् उभयसिद्ध्यनुकूलव्याप्त्यादिग्रहादित्यर्थः व्यतिरेकितया वेति पाठे अर्थात् अर्थापत्तिविधयेति परमतेन एवञ्च पक्षधर्म्मतया ज्ञायमानो हेतुः साध्याभावव्यापकीभूताभावप्रतियोगित्वज्ञानात् साध्यस्य साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानाच्च साध्याभावस्य साधनायोन्मुखो मिथो विरोधेन नैकमपि साधयति । न च शब्दे नित्यत्वानित्यत्वसन्देहे तदुभयव्यापकत्वं शब्दत्वाभावस्य ग्रहीतुमशक्यं व्यापकत्वाभिमतशब्दत्वाभावाभाववच्छब्दवृत्ति-

नस्य नित्यत्वानित्यत्वयो सन्दिह्यमानत्वादिति वाच्य तथात्वेऽपि तादृगसगयाभावदगायां तथात्वनिश्चये तद् भयथ्यापकोभूताभावप्रतियोगिसम्बन्ध्दत्वपरत्वस्य शब्दे प्रतिम त्वात् गमकत्वात् व्याप्यत्वप्रतीत्येव प्रतीतस्य सौरभादेर भावस्य पानीयपाषाणादौ पृथिवीत्वतद्भावसहचारेण तद् भयथ्यापकताघटे तादृगाभावप्रतियोगिसोरभस्य चन्दनादौ परामर्शे पृथिवीत्वादौ साध्ये तदसाधारण्यस्यातिव्याप्तिभ स्वात्। नन्वत्र सत्प्रतिपक्ष एव व्याप्तेरन्वयनिरूपत्वस्याव्या पकत्वेनाप्रयोजकत्वादित्यत आह सत्प्रतिपक्ष इति। नचैव विषयभेदेन पृथगभिधानेऽति प्रसङ्ग स्वतन्त्रेच्छाया इत्यादे रन्यकर्तेवाभिधानात् तदभावसाधके तत्साधनत्वभ्रमरूपा शक्तिविशेषसूचनार्थत्वात सत्प्रतिपक्षसव्यभिचारोभयलक्ष णाक्रान्ततया उभयान्तर्भावस्याविरुद्धत्वादित्यपि कश्चित्। धर्मसपक्षेति सपक्ष साध्यवान् पक्षवृत्तित्वे सति साध्याव्या पकीभूताभावप्रतियोगित्वमित्यर्थ स्वस्य साधारणमिति विरोधि विरोधप साध्यासामानाधिकरण्यादिरूपोऽन्वय व्याप्तिग्राहविरोधीति न साध्यगतापि साध्यसमानाधि करणस्तु नासाधारण इत्यपि पुनरुपदोषो व्याप्य इव साधारणभ्रम। नवीना पुनरेव सर्वत्रास्ति सामर्थ्यविरोधिन हेतभावस्य साध्यतदभावव्यापक सामर्थ्यविरोधोऽसाधारणस्य दूषकतावीज तथाहि इति मतान्तरेणा क्वचिदपि वर्तितव्य तत्र चाव्यत्र साध्य

तदभावयोरन्यतरेण भवितव्यं न च तत्र हेत्वभावः सम्भवति अतोऽवश्यमन्यतराव्यापकत्वं तस्य एवंविधविरोध-ध्रौव्ये साध्येन तदभावेन च हेत्वभावस्य सहचारज्ञानं नैकतरनिरूपितामपि व्यापकतां ग्राहयति मिथो विरोधात् विरोधिपरामर्शद्वयमिव साध्यतदभावौ एवञ्च वृत्तिमत्त्व-विशेषितं हेतोर्यावद्विपक्षसपक्षव्यावृत्तत्वं वृत्तिमत्प्रतियोगित्व-विशेषितं वा हेत्वभावस्य यावत्सपक्षविपक्षवृत्तित्वमसाधा-रणमिति योजयन्ति च ग्रन्थमित्थं शब्दत्व यदि साध्यतद-भाववद्व्यावृत्तत्वेन तदुभयव्यापकीभूताभावप्रतियोगित्वेन ज्ञात ज्ञानयोग्यं स्यात् तद्वत् स्यादिति यावत् तदा व्यति-रेकितया तादृशव्यतिरेकप्रतियोगित्वेनार्थात् पक्षे तदुभयं साधयेत् तदुभयसहचरितं भवेत् व्यापकाभाववति व्याप्या-भावस्यावश्यम्भावात् अतथाभावे पक्षधर्म्मताया व्याप्तेर्व्वानुप-पत्तिर्न च तथाभावः सम्भवति न वा पक्षवृत्तित्वं बाधितम् अतः साध्यतदभावौ व्यापकतया तदुभयसिद्ध्यनुकूलविरोधि-व्याप्तिद्वयग्राहकव्यतिरेकसहचारद्वयग्रहविषयतया असा-धारणौ दोषौ व्याप्तिद्वयग्रहप्रतिबन्धकः। ननु यदि विरो-धिव्याप्तिद्वयं न गृह्यते तदा सत्प्रतिपक्षोच्छेदः गृहीत-विरोधिव्याप्तिद्वयहेतुसमुत्थत्वात् तस्येत्यत आह सत्प्रतिपक्ष इति। तत्र हेत्वोर्भिन्नतयाधिकरणभेदेन तथा ग्रहः सम्भवति अत्र पुनरेकस्मिन् हेतौ तदुभयग्रहो विरुद्ध इत्यर्थः। अत्र चेदं चिन्त्यम्। एवं सति सपक्षादेर्यावत्त्वविशेषणं व्यर्थं

दूषकतायामनुपयोगात् व्यभिचारोपदर्शनोपक्षीणत्वात्
इतिमत्त्वादिविशेषितस्यापि साधारण्यस्य ज्ञानं न व्याप्ति
ज्ञानविरोधि विरोधिविषयकत्वाभावात् उपदर्शितविरोधस्य
तच्छरीरेऽनन्तर्भावात् व्यापकतयोरपि च न तत्तौ विरोध
उपदर्शितरीत्या तदवधारणे चावश्य व्यभिचारज्ञानमेव
प्रतिबन्धकमत एव सत्यपि समाधारण्यज्ञाने एकत्रानुकूल
तर्कावतारे भवति व्याप्तिधीरिति एतेन तादृशसहचारज्ञानं
तुल्यबलविरोधिज्ञानापेक्षसामग्रीत्वेन प्रतिबन्धकं तर्कावतारे
पुनस्तुल्यबलत्वैव नास्तीति परास्तं तर्कस्य व्यभिचारशङ्का
निवर्तकत्वेनैवोपयोगित्वात् सामग्रीत्वेन प्रतिबन्धकत्वे ईत्वा
भावस्यायोगाच्च सत्प्रतिपक्षे च विरोधिव्याप्यवत्तानिर्णयत्वेन
प्रतिबन्धकत्वं न तु विरोधिसामग्रीत्वेन बाधावतारे त्वापातत
सत्प्रतिपक्षितत्वेऽपि बाधेन प्रतिहेतोरव्याप्यत्वानिश्चय एव
साध्यानुमित्युदयादिति कृतं पल्लवितेन ।

केवलान्वयीत्यादि सन्दर्भस्य साधारणत्वस्य केवला
न्वयिन साधनस्य व्यतिरेकिणस्तु भागासिद्धस्य साधारणत्व
विरुद्धत्व यथासम्भवं बोध्यम् । नापीति केवलान्वयि
साध्यकवारणाय सत्यन्त व्यतिरेकिसाध्यकसद्धेतुवारणाय
केवलान्वयीत्यादि पदम् साधकबाधकमानशून्यस्य केवला
न्वयिसाध्यकेऽपि साधकमानप्रसिद्धिकस्यैवेति न सत्यन्तवैयर्थ्य
मिथितसाध्याभाववत्तन्मात्रवृत्तित्वे त्वसाधारण्य विरुद्ध इति
साधारण्याव्यवच्छेदायामसामर्थ्यमिति वा हृदयम् । अथ्या

पक्षत्वादिति सद्धेतुलक्षं व्याप्तिनिश्चयदशायामेवेति भावः । अथेत्यादि पक्षातिरिक्तेन प्रतीतौ निश्चितौ व्याप्तिग्रहानुकूलोऽन्वयेन व्यतिरेकेन वा सहचारो यस्य स तथा सद्धेतुरेवेति तथाच लक्षणे पक्षातिरिक्तपदं सहचारग्रहस्थलमात्रोपदर्शकं न तु विशेषकमिति विशेषकत्वाभिप्रायेण दूषणद्वयमाह तत्रैवेत्यादि असाधारणे सपक्षव्यावृत्ते पक्षतादशायां शब्दोऽभिधेयः शब्दत्वादित्यादौ जलं निःस्नेहं शीतस्पर्शवत्त्वादित्यादौ च रूपं जलं वा द्रव्यभिन्नं गुणवत्त्वात् गुणकर्मावृत्तिजातिमत्त्वादित्यादौ विरुद्धे चातिव्याप्तिरित्यर्थः । दूषकतायामिति सहचाराभावस्यैव ज्ञानं विरोधि न तु तत्प्रत्ययांशस्यापीति अर्थगत्येति अनैकान्तिकशब्दार्थविवेचनेन प्रातिस्विकरूपेणैवप्रतिबन्धकत्वव्यवस्थितेरित्यर्थः । केचित्तु दूषकतायामसाधकतायाम् । अर्थेति अनैकान्तिकशब्दार्थे उभयकोट्युपस्थापकत्वादौ साध्योपस्थापकत्वाद्यंशस्य व्यर्थत्वादित्यर्थ इत्याहुः । विप्रतिपत्तिः पक्षसाध्याभावप्रीतितिः साध्ये पक्षनिष्ठाभावप्रतियोगित्वप्रतिपत्तिर्वा आद्ये केवलान्वयीति साध्याभावाप्रसिद्ध्या अव्याप्तिरित्यर्थः । उभयत्र सर्वस्येति अतिव्याप्तेरिति पाठे तन्मात्रवृत्तित्वं तत्रव्याप्यवृत्तिकत्वं तदितरावृत्तित्वं वा आद्ये केवलेति इदञ्च यथाकथञ्चिद्व्याप्तिग्रहदशायां द्वितीये सर्वस्येति व्याप्तीत्यादि यत्र यस्येत्यर्थः तथाच हेत्वभिमतशब्दोपसन्दानात् तद्धेतुकप्रकृतसाध्यसिद्ध्यौपयिकव्याप्तिग्रहानुकूलोपस-

हेत्वाभासत्वस्यानुपपत्तेः। स्वमित्यर्थः साधारणादावतिरेकिणि ना
तिव्याप्तिः। ननूपसंहार सहचार सन्दिग्धो वा साध्ये
साध्यतदभावो निश्चितप्रसिद्धानुपसंहारव्यापक स्तदि
व्यापकत्व कथं दूषकमित्यत यस्मादित्यकांशांशप्रतिमसा
दित्यादि द्वितीये पुनरज्ञानरूपासिद्धिपर्यवसायी कारणा
भावतया स्वरूपसदेव दोषो न हेत्वाभास इत्यत आह
केवलान्वयीति यत साध्यानियतधर्मावच्छिन्न साधारणान्व
येत्यादि सन्देहस्य विपर्ययोऽत्र दर्शकत्व व्याप्तिग्रहप्रतिबन्धकत्व
मप स्वरूपसतोऽप्यविरुद्ध तेन प्रतिबन्धकत्वस्यादिरूपेण
सर्वत्र साध्यसन्देहदशायां नाव्याप्तिः एवञ्च सर्वत्रैव हेत्वा
दिमति साधारणतदभावसन्देहात् व्याप्यपक्षेणाभासत्वम्। परार्थे
ऽयमे वह्निर्भावमुत्पादयति एवमित्यादिना पक्षिनिश्चय
ज्ञाने ज्ञापने प्रार्थत्वमनेऽस्याभावम् एतेनेत्यादिभागस्य निर
स्यति उपजीव्यत्वादिति यद्वेदं चिन्त्य हेतुमति साध्याभाव
सन्देहो नाभास सत्यैव विरोधित्वात् तद्विषयस्तु हेतो
साध्याभावसामानाधिकरण्य साधारण्य वा हेतुमन्निष्ठाभाव
प्रतियोगित्व साध्यस्य केवलान्वयिसाधारणे व्यतिरेकिसाधारणे तु
साधारण्य रूपतया सन्दिग्धानैकान्तिकत्व पर्यवसित विग
विषयकसाध्यतदभावसन्देहे च कारणीभूतान्वयव्यतिरेक
सहचारग्रहविरहात् सकलसामग्र्या साध्यतदभाववत्त्वनि
श्चयप्रतिबन्धात व्याप्यपक्षज्ञानरूपासिद्धिरेव उपजीव्योऽपि
च साध्याभावसन्देहादिर्नाभासः सत्यैव विरोधादिति

यत्तु व्याप्तीति व्याप्तिग्रहानुकूलसहचारनिश्चयत्वावच्छिन्न-विरोधिरूपत्वमर्थः विरोधस्तु संशयसाधारणमन्वयमात्रसह-चारग्रहं विरुणद्धि असाधारणे व्यतिरेकिणि च न व्यति-रेकसहचारग्रहविरोधः तादृशरूपमन्तरेण लक्षणस्यासम्भ-वितया तदेव रूपं लक्षणमाह केवलेति तादृशावच्छिन्नः पक्षः सन्दिग्धसाध्यकोयस्याश्रयः स तथा तथाच केवलान्वयि-धर्म्मावच्छिन्नसाध्यसन्देहविषयवृत्तित्वमनुपसंहारित्वं व्यति-रेक्यादौ केवलान्वयी न साध्यसन्देहविषयतावच्छेदकः साध्यवत्तानिश्चयसामान्यविरोधिसंशयविषयवृत्तित्वं वा तत्त्वं धर्म्मिविशेषनियन्त्रितस्तु सन्देहो नान्यधर्म्मिकनिश्चयविरोधी साध्यसन्देहविषयताव्याप्य साध्यसिद्ध्यनुकूलव्याप्तिग्रहौप-यिकसत्ताकत्वं वा तादृशी च सत्ता अन्वये हेतोर्व्यतिरेके च तदभावस्येति न कश्चिद्विशेषः स्वरूपसत्तादृशसंशयविषये च हेतुमत्ताज्ञानं हेतौ साध्यसामानाधिकरण्यं संशयसामग्री-त्वेन तन्निश्चयप्रतिबन्धकं सर्वत्र संशयसामग्र्या निश्चयप्रति-बन्धकत्वकल्पनात् हेतुमति सर्वत्रसाध्याभावसन्देहे हेतौ साध्यसामानाधिकरण्याभावसंशयस्यौचित्यावर्जितत्वात् सा-ध्याभावेन साध्यसामानाधिकरण्याभावोपस्थापनादिति तन्न सर्वत्र साध्यसन्देहदशायां क्वचिदपि साध्यसामाना-धिकरण्यस्यागृहीतत्वेन तदभावस्य गृहीतुमशक्यत्वात् प्रति-योगितावच्छेदकविशिष्टप्रतियोगिनिश्चयस्याभावधी हेतु-तया असकृदावेदितत्वात् अस्तु वा स यथाकथञ्चित् साध्ये

हेतुसामानाधिकरण्याभावसन्देहगुरुत्वेन वा तदाच न तथापि साक्षात्त्वेन प्रतिबन्धकतया हेत्वाभासत्वम् अन्यथा व्यभिचरिता व्यभिचरितसमानाधिकरणव्याप्या-व्याप्यपक्षधर्मापक्षधर्मादिसाधनस्यापि साधनादिसाधारण्यस्या दिमत्त्वे हेतौ पक्षस्य चाभासात्मत्वं स्यात् तदुपदर्शितस्यैव तस्यापि ज्ञानस्येतरगतिविरोधेन तत्तत्रिपाद्यविरोधिग्रहक-समीत्वात् एवमसिद्धादिनिदायकान्यसाधारण्यपि यदि च हेतौ साध्याभावसन्देहविषयमात्रवृत्तित्व दूषणमिति सार्ध तच व्यतिरेकिणि हेतौ नियतविषयेणापि सन्देहेन सम्प-द्यते दूषकताबीजसत्त्वे चासाधारण्यादिसाधारण्य न दोषाय न वा चैव निर्भर कर्मणो हेत्वाभासत्वानुपपत्ते रसाधारण्यादित्यर्थं पर्यवसितम् ।

व्याप्तिपक्षप्रतिपन्नलक्षणैकप्रयोजनकत्वेन साधारण्यादौ नामैकं हेत्वाभासत्वं साधारण्येन व्यापकत्वस्याव्यभिचारि त्वस्य वा असाधारण्येन सामानाधिकरण्यस्यानुपसंहारिणा च व्यतिरेकव्याप्तेर्ग्रहस्य प्रतिरोधात् तथा च विशिष्टसाध्य साधनपक्षाविरोधिनो ज्ञानस्य विषयतया व्याप्तिपक्षविरो-धितावच्छेदक रूपं व्याप्तिसाम्ययतो व्यतिरेकतया नानारूपा प्रातिस्विकरूपेण उपादाय तावद्यगाद्यौ यतो वाच्य साध्य साधनयोरप्रसिद्धेरसिद्धिभेदस्य वारणायाविरोधिन इत्यस्य साध्यसाधनभेदेन व्यभिचारभेदापत्तेः विशिष्टं साध्यं साधनं वाप्रसिद्धं तत्र तद्ग्रहविरोधित्व नोपादेयम् एवमन्यत्रापि

शेषं हेत्वाभासलक्षणोक्तदिशावसेयम्। व्यर्थविशेषणत्वन्तु न व्याप्तिग्रहविरोधीति वक्ष्यते साध्याव्यभिचरितसामानाधिकरण्यविरहस्य वह्निर्भावनीयत्वे पुनरन्वयव्याप्तौ व्यापकत्वमव्यभिचरितत्वं वा सामानाधिकरण्यञ्च विशकलितं युगपदुपादेयं तत्र साधारणत्वं वर्णितम् असाधारणत्वन्तु सपक्षव्यावृत्तत्वं सपक्षश्च साध्यवान् तद्व्यावृत्तत्वन्तद्वृत्तित्वग्रहविरोधित्वं प्रकृतसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयसामानाधिकरण्यग्रहविरोधितावच्छेदकमिति तु निष्कर्षः। संगृह्यते चेत्थं साध्यादेः साधनवदवृत्तित्वादिकम्। चाक्षुषस्पर्शवान् स्पार्शनशब्दवत्त्वादित्यादौ विशेष्ययोरसामानाधिकरण्यञ्च बाधासिद्धिभेदस्य च साध्यसाधनयोरवृत्तित्वस्यैव तत्साङ्कर्य्येऽपि न क्षतिः इदमेव च मणिकृतां विरुद्धत्वम् इत्यञ्च तदीयमसाधारणत्वमेवविरुद्धत्वमिति। यत्र च धर्मिणि योधर्मो यादृशो हेत्वाभासः तद्व्याप्यमपि तद्विशेषोऽन्तरेण प्रकरणसमन्तद्व्याप्यञ्च पृथगुपदेशादविरोधाच्च अनुपसंहारित्वञ्च विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्यतिरेकव्याप्तिग्रहविरोधितावच्छेदकरूपवत्त्वं तादृशञ्च साध्यादेरत्यन्ताभावाप्रतियोगित्वादिकं वह्न्यभावाभावत्वेन वह्नेर्धूमाभाववद्वृत्तित्वज्ञानं वह्न्यभावस्य धूमाभावव्यापकताज्ञानं कदाचिद्विरुन्ध्यादपि नतु वह्नित्वेनेति नातिप्रसङ्गः केवलान्वयिनि तत्सम्भवेऽपि अन्वयव्याप्त्युपादानेनानुमितिप्रतिरोध इति दिक्।

साध्यविरोधित्वं साध्यप्रतियोगिकत्वम् एकदेशिमतमाह अभावेत्यादि न च भावस्य स्वाभावविरहात्मकत्वरूपप्रतियोगित्वघटितधर्मिग्राहकमानबाधः प्रतियोगित्वस्य सम्बन्धान्तरत्वात् स्वस्याभावस्येत्यत्र षष्ठ्यर्थस्य तस्याप्यभ्युपेयत्वात् विरहत्वञ्च साभावत्वं बाधात् नापि तदग्रहप्रतिबन्धकग्रहविषयत्वम् अविरोधात् प्रत्यक्षेण दुर्ग्रहत्वाच्च न चानवस्था अभावस्य स्वाभावाभावत्वे बाधकाभावात् । भावस्य तथात्वे बाधकमाह बाधक विशेत्यादि अभावप्रतीते अभावत्वविशिष्टप्रतीते अभावत्वञ्च न भावभिन्नत्वं प्रथम दुर्ग्रहत्वात् किन्त्वयमभावो न भाव इति प्रतीतिसाक्षिकं पदार्थान्तरं तत्रानुपस्थितं निर्विकल्पकोपस्थितं वा प्रकारः अभावत्वञ्च असमवेतत्वान्न जातिः । अन्यथेति अनतिप्रसक्तैरधिकरणैस्तद्धर्म्मैः अभावव्यवहारोपपत्तेरिति भावः लाघवाद्बाधिता भावत्वविशिष्टप्रत्ययबलाद्यातिरिक्तस्याभावसिद्धिस्तुल्यैव एते नाभावस्य सप्रतियोगिकत्वं तथाननुगतानामप्यावश्यकानां प्रतियोगिनां कल्पने इत्यपास्तं संयोगादिसाधारण्याच्च । गमकत्वभ्रमेति व्यभिचारिण्यव्यभिचारभ्रमे विरुद्धे च सामानाधिकरण्यभ्रमेऽपि भ्रम इति । अयमर्थो विशेष इति दूषकतायामविशिष्टेऽपि निग्रहस्थानत्वेन विशेषाद्देशोपन्यासः अतएवानैकान्तिकसामान्यलक्षणे साधारणलक्षणे च विरोधवारक विशेषण उक्तजात्योर्निग्रहस्थानविशेषनिरस्तयोरन्यानुयोगविशेषत्वव्यपदेशस्तथा नैकान्तिकविशेषसाधारणविशेषयोः

प्यदीषीवेति पुनराकरानुसारी पन्थाः । नापीत्यादि व्यापकत्वं व्याप्यव्यापकसामानाधिकरण्यघटितं न वा आद्ये साध्याभावस्येति द्वितीये तु नाभासत्वमविरोधात् । साध्येत्यादि हेत्वभावस्य साध्यवन्निष्ठाभावाप्रतियोगित्वज्ञानं वस्तुतस्तत्प्रतियोगिकाभावस्य हेतोः साध्यसामानाधिकरण्यग्रहं विरुणद्धीत्यभिप्रायेणेदम् । यदि च तदभावाभावत्वेनासामानाधिकरण्यग्रहेऽपि तत्त्वेन सामानाधिकरण्यग्रहो न विरुध्यत इति भाव्यते तदाह यद्वेत्यादि । वृत्तिमत इति धर्मेति च पक्षधर्मत्वाविरोधित्वप्रदर्शकं न तु विशेषकं दूषकतायामनुपयोगादव्याप्तिकरत्वाच्च वृत्तिविशेषसूचनाय वा तत तेन समवायेन हेतुतायां धूमेनाव्याप्तिः आद्ययोः साध्यवदवृत्तित्वतदधिकरणत्वाभावौ चरमयोश्च साध्यवद्वृत्तितत्त्वाधिकरणभेदावर्थाविति भेदः । ज्ञानातिप्रसक्तिं निरस्यति न चेत्यादिना । तेनेत्यादि साध्याभाववद्व्याप्तित्वज्ञानं विना वृत्तिमत्त्वविशिष्टसाध्यवदवृत्तित्वज्ञानापर्य्यवसानादित्यर्थः । असहचारेति सहचारः सामानाधिकरण्यं व्यभिचारेति व्यभिचारो न ज्ञायते यस्मात्तद्व्यभिचाराज्ञानमव्यभिचारज्ञानं तदयमर्थः अव्यभिचरितसामानाधिकरण्यरूपाया व्याप्तेरव्यभिचारांशग्रहविरोधिग्रहविषयतया यथा व्यभिचारी हेत्वाभासस्तथा सामानाधिकरण्यांशग्रहविरोधिग्रहविषयतया विरोध्यपीति सचायं विरुद्धो हेतुः । साध्याभावेति तदभावत्वं तद्वृत्ताग्रहविरोध्यभावत्व तेन साध्यवदन्यत्व-

व्याप्यत्वोपगमश्च एवमुत्तरत्रापि। साध्यव्यापकेति अत्र व्याप्यपदं स्वरूपपरम्। साध्येत्यादि साध्यव्यापकसामानाधिकरण्यग्रहविरोधिरूपवत्त्वादित्यर्थः तेन साध्यव्यापकवदन्यत्वादुपसंग्रहः सर्वत्र चोपनयपदं स्वरूपमिष्टमात्र फलकम्। साध्याभावेति व्याप्यपदव्यत्यासेन साध्याभावव्याप्यत्वेन साध्यव्यापकाभावत्वेन चेत्यर्थः। स्वसमानेति तथाच साध्याभावसाध्यव्यापकाभावयोर्निरुक्तसाध्यव्यापकाभावत्वेनानुगमात्साधिक्यमित्यर्थः प्रतियोग्युपन्यासात् स्वरूपत साध्यवत्ताग्रहविरोधित्वात् तेन निर्वह्निकान्यत्वादिसंग्रहः। साध्यव्यापकेति अत्र व्यापकत्वं भेदाभेदसाधारणं तेन साध्याभावव्याप्यत्वसंग्रहः। धूमवत्त्वादिति धूमाभावस्य वह्न्यभावव्यापकत्वग्रहदशायामस्य सधर्मेऽन्तर्भावो वह्न्यभाव-व्यापकत्वज्ञानसामग्र्य भावाभावव्याप्यत्वग्रहे च चरमे। इदं पुनरिहावधेयम्। कथितरूपाणि किं स्वरूपतो ज्ञातान्येव सामानाधिकरण्यग्रहविरोधीनि असामानाधिकरण्यव्याप्यत्वेन वा नाद्यो व्यापकाभावव्याप्यत्वादेस्तदसम्भवात् न द्वितीयः साध्याभावत्वसाध्याभावव्याप्यत्वयोः स्वरूपेणैव ज्ञातयोस्तथात्वात् तथात्वेऽपि तत्त्वमविरुद्धमिति चेत् छन्दीयमसामानाधिकरण्यस्य समानाधिकरणासम्भवितत्तद्धर्मांशस्य तथात्वादाधिक्यं न च एतानि धर्मिविभाजकान्येव सर्वथा नैव साध्याभावव्याप्यत्वेनैकविधत्वादिति विरोधिज्ञापकप्रकारस्यैवाधिक्येन धर्मिणोऽपि वैविध्याभिधानमिति वदन्ति।

अयञ्चेत्यादि बाधस्वरूपासिद्ध्यन्यतरसङ्करस्तु आवश्यकोऽन्य-सङ्करस्तु काचित्कोऽज्ञानासङ्कराच्च पार्थक्यम् ।

एकत्र तदुभय इति व्याप्ये पक्षधर्म्मतायाः पक्षधर्मे च व्याप्यत्वस्यारोपः प्रत्येकमव्यापकोऽतो विशिष्टस्यारोपो वाच्यः स चैकधर्मिणि विरोधिव्याप्यद्वयविरहाद्विशिष्टस्याप्रसिद्धा न सम्भवतीत्यर्थः। विरुद्धादौ साधने स्वव्यापकसामानाधिकरण्यरूपव्याप्तेरप्रसिद्धेरित्यपि द्रष्टव्यम्। एकत्र भङ्गेति तथाचान्यतरत्वेन तदवधारणमस्तीति भावः सत्प्रतिपक्षित-व्यवहारो हि सत्यसति वा साधने नापरामृश्यमाने नाप्यविद्यमानविरोधिपरामर्शे अतएव सन् प्रतिपक्षो विरोधिव्याप्यादिमत्तया परामृश्यमानो हेतुः विरोधिपरामर्शो वा यस्य परामृश्यमानस्य हेतोरसौ सत्प्रतिपक्ष इति विग्रहमपि वर्णयन्ति अतस्तदनुसारेणैव व्यवहारौपयिकं लक्षणमाह साध्येति बाधाश्रयासिद्धिनिर्णयवारणाय समर्थान्तं न चासौ न व्याप्तिपक्षधर्म्मतात्मकबलोपस्थितिरिति वाच्यं व्याप्तिपक्षधर्म्मताविरहस्य साध्यत्वे पक्षतावच्छेदकत्वे वा तत्सम्भवात् पक्षः साध्याभावव्याप्यवान् साध्यं पक्षवृत्तित्वाभावव्याप्यवदिति पक्षस्य व्यापकभेदेन च अन्वयव्यतिरेकभेदेन च व्याप्तेश्च भिन्नत्वादेकोपादानेऽन्यसंग्रहेण बलस्याविवक्षितत्वाच्च साध्यधीविरोध्यनुमितिजनकज्ञानविषयत्वेन तदुपादाय तदुपस्थित्यभिधानञ्च शिरोवेष्टनेन नासिकास्पर्श-सदृशमिति ... साध्यमिदेर्विरोधिनी ... न साध्य-

वानित्याद्युपस्थिते साध्यविरोधी साध्यवत्ताज्ञानप्रतिबन्धक ज्ञानविषयो बाध साध्याभाववान्‌मत्पक्षादिस्तदुपस्थित्यां जनकयोग्यता समानया यन्नोपस्थित्या तथाविधव्याप्त्यादिघटिता प्रतिरुद्धं कार्य्यं यस्य तादृशत्वमिति यथा विरोधिव्याप्त्यादि-विषयत्वरूपजनकयोग्यताशालिन्या यदुपस्थितेरप्रामाण्यग्र॰ म सतिपक्षत्वासम्भवादक्रमात्‌ कार्य्यप्रतिरोधानुधावन समानत्वघटकगृहीताप्रामाण्यकत्वस्य व्यभिचारौपयिकपरामर्श कालीनत्वम्‌ अमति गृहीताप्रामाण्यके या परामर्शे सत्प्रतिपक्षितत्वस्य व्यवच्छेदयितव्यात्‌ । यत्तु प्रामाण्यनिर्णयेनाधिकृतयत्तया बाधस्य विरोधिपरामर्शस्य वारणाय समानेति तदसद्व्यभिचारेण प्रामाण्यग्रहस्याव्यवधानात्‌ अन्यथाऽप्रामाण्यग्रहानुत्पत्तिरेव क्वचिदनुपयोगात्‌ यत्रपदोपमन्दानासंभवदुपन्नाभाव तदैवार्थं लिङ्गपदोपादानात्‌ स्वीयलिङ्गत्वौपयिकपरामर्शमात्राभावादाप्ता टेर्थ्युदास विरोधिपरामर्शमप्रति तदकार्य्यकविशिष्टपरामर्शवि षयत्वमत्र फलितार्थ । अगृहीताप्रामाण्यकत्वमव्यवहितयोग्यतो पादाने तु बाधोपस्थितिसमर्थपरामर्शकालीनसाध्यसिद्धि-समर्थपरामर्शविषयत्व वाच्य तत्त्व यदि चायं वह्निव्याप्यवान्‌ वह्न्यभावव्याप्यव्याप्यवांश्चेति परामर्शादयं वह्निमान्‌ वह्न्यभाव व्याप्यवांश्चेत्यनुमिति प्रामाणिकी न तु सत्प्रतिपक्षत्व तदा कार्य्यप्रतिरोधोऽवश्यमुपादेयोऽननितविरोधिबोधकत्येन च विरोधिपरामर्शविशेषणीय अतएवाग्निमत्त्वमपि विरोधिबोध कामेति फलतो ज्ञानविशेषणं एकस्याप्रामाण्यग्रहेणापरेणाद

मितिजननात् तद्वारणाय वा तत्प्रतिरुद्धकार्य्यत्वञ्च प्रतिरुद्ध-कार्य्यपरामर्शविषयत्वम्। एकदेत्यादि । न च द्वितीयस्य परा-मर्शस्योत्पादनसमये पूर्व्वेणानुमितिजननात् कथं नैरन्तर्य्य-मिति वाच्यं साधकमानादिवशेन क्षणमनुमित्यनुत्पादसम्भ-वात् । स्वपरेति अयं भावः न खलु सम्भवन्तः सर्व्व एव हेत्वा-भासाः समुद्भाव्याः आधिक्यप्रसङ्गात् परन्तु यथाकालमेकः तथाच प्रतिपक्षोद्भावनेऽपि नाप्रतिषेधमात्रेण व्याख्याद्यभ्यु-पगम इति । प्रतिरुद्धत्वेति प्रतिरोधप्रयोजकविरोधिव्या-प्त्यादीत्यर्थः । उभयोरिति परस्पराभावव्याप्यत्वं हि हेत्वो-र्विरोधः तन्न हे च तयोरेकत्र निर्णयो न विरुध्यते इति भावः । दूषकतेति विरोधिपरामर्शसत्त्वे नियमेन परामर्शा-न्तरादनुमित्यनुत्पादः तस्यानुमितिविरोधित्वं कल्पयति ननु तेन ज्ञाप्यमानस्य व्याप्त्यादिविरहस्य सद्धेतावपि तस्या-नुमितिविरोधित्वादित्यर्थः । व्याप्त्यादिविरहज्ञानद्वारा अस्य दूषकत्वमाह एकत्रेति वाकारोऽनास्थायां प्राथमिकावश्यका-नुमितिप्रतिरोधेनैव तथात्वात् परमुखनिरीक्षकत्वेन तद्विषय-स्याभासत्वायोगाच्चेति । ननु विरोधि परामर्शो यदि विप-रीतनिर्णयविरोधी कथं तर्हि सति विशेषदर्शने नयना-दिजन्या पीतत्वादिभ्रम इत्यत आह चक्षुरादेस्त्वेति चस्त्वर्थः । अथ व्याप्तिपक्षधर्म्मते यदि बलं कथं तर्हि प्रत्यक्षादेः प्रति-रोधकतया कथायामुपन्यास इत्यत आह प्रत्यक्षादेरिति । अत्र हेतुमाह कथायामिति प्रत्यक्षस्य स्वरूपसत्तयैव विरो-

धकत्वात् विरोधिव्याप्यमात्रस्यानुमितिविरोधित्वात् कोट्या भावव्याप्यवत्तानिर्णयेनैव साध्याभिचारप्रतिरोधाच्चेति । एतच्चोपलक्षणमयमभिप्राय एकधर्मिकाविरुद्धानेकप्रकारक नानाधर्मिकविरुद्धाविरुद्धनानाप्रकारकज्ञानसाधारणैकधर्मि- कविरुद्धानेकप्रकारकज्ञानत्वमेव संशयत्वं न तु अन्यतावच्छे- दकं समानधर्मिकतत्प्रकारकज्ञानस्य प्रयोजकस्वभावप्रयोज्य त्वात् स्वभावस्य कथञ्चिद्विरोधमात्रस्यापि तत्प्रयोजकाधीनत्वात् नीलोऽयं घटस्य पटत्वाप्रकारकज्ञानत्वैकधर्मिकाविरुद्धानेकप्रका रकान्यज्ञानत्वादिपन् संशयान्यज्ञानसाधारणं च निश्चयत्वमपि न अन्यतावच्छेदकं तत्प्रयोजकविरहादेव तत्त्वविरहोप पत्तेः एवञ्च तुल्यबलाभ्यां विरुद्धोभयसामग्रीभ्यां ज्ञायमा नागमर्थात् संशयश्च भवति अतएवाचार्यैर्विप्रतिपत्तिजन्यम संशयमाममनन्ति कल्पयन्कल्पनीयता न्यूनाधिकसमयप्रभाव सत्त्वामपि पीतत्वशुक्लत्वस्मृतौ सविधवर्त्तिनि शङ्खे सति दोषविशेषे पीतस्यैवासति च शुक्लत्वस्यैव दूरस्थे च धर्मिणि असति विशेषदर्शने स्मृतयोरेव कोट्योः सति च एकस्या एव नयनेन सहाप्रत्ययवर्त्तमानाभ्यां विरोधिसंस्काराभ्यां स्मरण मपि संशयात्मकं स्यात् किं न स्याद्यदि च नानुभवबाध येन गुरुणापि निश्चयत्वेन संस्कारजनकत्वमुपेयते भवता अथ विरोधिनो निर्णयोऽनुमितिप्रतिबन्धको विरोधित्वञ्च सहानवस्थायित्वं साध्याभावस्येव तद्व्याप्यस्यापीति चेत् यदि वस्तुतो विरोधिनो निर्णयस्तथा कथं तर्हि पक्षतावच्छेदका-

देस्तादृशस्य निश्चये भ्रमानुमितिः अथ विरोधित्वेन तदा तदग्रहे नेह साध्यमित्यादिनिर्णयेऽप्यनुमितिप्रसङ्गः अथ विशेषदर्शनं विरोधिबुद्धिप्रतिबन्धकं कथमन्यथा तदनन्तरं न भ्रमसंशयाविति चेन्न सत्यपि शुक्लत्वादिव्याप्यदर्शने शङ्खादौ दुष्टेन नयनेन पीतत्वादेरदुष्टेन च पीतत्वादिव्याप्यवत्तानिश्चये सत्यपि शुक्लत्वादेर्ग्रहात् सति च विशेषदर्शने क्वचिदुपनीतभानानुदयात् ततः प्रमितस्य स्थाणुत्वादेः शाखादौ करादिभ्रमेणाग्रहात् तत्तत्स्थलविशेष एव तस्य प्रतिबन्धकत्वमिति । अत्राहुः अनुगतकार्य्यकारणभावानुरोधात् दोषविशेषाद्यजन्ये ज्ञाने कदाचिदनुभवे वा विशेषदर्शनं विरोधि कल्प्यते न च प्रत्यक्ष एव तथा सामान्ये बाधकाभावात् बोध्याभावव्याप्यवत्तानिश्चयेन शाब्दादिधीप्रतिबन्धाच्च अथ विशेषान्तरदर्शनविरहविशिष्टमेव तत्तथा अन्यथा कोटिद्वयविशेषदर्शने संशयो न स्यादिति चेन्न भवत्येव ताव यावदप्रामाण्यं न स्फुरति अगृहीताप्रामाण्यस्यैव विशेषदर्शनस्य विरोधित्वादिति । विरुद्धस्येति साध्याभावव्याप्यस्येत्यर्थः । बाध इति हेतौ प्रकृतेऽन्यत्र वा अपक्षधर्मे च पक्षधर्मताबाध इति शेषो वा तथाच हेतौ व्याप्तिपक्षधर्मतान्यतरभङ्ग इत्यर्थः । प्रकृतेति प्रकृतसाध्ययोर्यौ हेतू तयोरित्यर्थः । संशयादिति जन्यदुःखोत्सारणरूपेष्टसाधनताज्ञानात् अन्यत्र चेष्टान्तरसाधनताज्ञानाज्ज्ञानेच्छेति भेदेन विकल्पोपन्यासः । असतीत्यादि हेतुसमीचीनत्वासमीचीनत्वसंशयजन्य-

अत्र सत्यन्तेन सत्प्रतिपक्षोन्नायकस्य अविरोध्यन्तेनाश्रया-सिद्ध्याद्युन्नायकस्य विरोध्यन्तेन वह्निव्याप्याभावे साध्ये वह्निव्याप्यवत्पक्षात्मकस्य बाधस्य व्युदासः संगृह्यते चानेन काञ्चनमयवह्निमानित्यादौ वह्न्याद्यभावव्याप्यकृदत्वादिमान् पक्ष इति। सत्प्रतिपक्षे च यथासिद्धान्त पञ्चावयववादि-प्रयोगमिच्छन्ति अयं हेतुः साध्यव्यभिचारवानित्यादिवदयं पक्षः साध्याभावव्याप्यवानित्यादिकमुद्भावनं पुनरुचितं प्रतिभाति। वस्तुत इत्याद्यभ्युच्चयमात्र विशिष्टपरा-मर्शविरोधित्वेन विशिष्टाभावस्य दोषताया दुर्वारत्वात् प्रत्येकाभावसज्ञात्वापि शब्दादिना शक्यग्रहत्वात् व्यर्थविशे-षणत्वस्य चासाधकतासाधन एव सम्भाव्यत्वात् न वा तदपि तादृशाभावनिष्ठव्याप्तेर्धर्मान्तरेणावच्छेत्तुमशक्यत्वात् विशे-ष्यादिप्रतियोगिकत्वमात्रस्य व्यभिचारिसाधारणत्वादिति। व्यभिचारादेरिति सद्धेतौ सद्धेतुत्वेन ज्ञायमाने तदानीं सि-द्धेरप्रतिबन्धेऽपि कालान्तरगृहीतेन व्यभिचारादिना तदानी-न्तनाभासत्वं सुग्रहमिति तु ध्येयम्। तेन रूपेण तत्साधारण रूपेण। वह्न्यभावेनेति वह्न्यभावस्तु न प्रतिबन्धकः कारणीभूतो योऽभावस्तत्प्रतियोगिनएव तथात्वात् यदभावत्वेन कारणत्वं तदेव तथेत्यपि कश्चित्। परामर्शेत्यादि। ननु परामर्श-विषयाभावत्वमनाभासे आभासत्वविशेषितमपि बाधविशेषे परामर्शविरोधित्वविशेषितञ्च हेतोः साध्यासामानाधिक रण्येति प्रसक्तम् अप्रसक्तञ्च साधनाद्यभाववत्पक्षादौ पक्षादेः

साधनवदन्यत्वादौ साधनादेः पक्षादिवृत्त्यत्यन्ताभाव प्रतियोगित्वादौ अतएव यस्य यद्धर्मवत्त्व परामर्शविषयस्तस्य तदभाववत्त्वमिति गन्धाद्यनुगतं प्रयुक्तं परामर्शविरोधित्वमात्रञ्च सव्यभिचारेऽतिप्रसक्तं न च सद्धर्मेण विशेषणीयं नित्यो घटो द्रव्यं प्रमेयो वा गन्धवत्त्वादित्यादौ तदर्थाप्रसिद्धेः । अथ पक्षतावच्छेदकरूपेण पक्षे हेतुतावच्छेदकरूपेण हेतोर्यद्विशिष्टज्ञानं साध्यतावच्छेदकविशिष्टसाध्यावगाहितद्विरोधित्वं तदिति चेन्न पक्षवृत्तित्वविशिष्टसाध्याव्यभिचरितसामानाधिकरण्याद्यभावाव्याप्तेः । न च विशिष्टपक्षविशिष्टसाधनवैशिष्ट्यविशिष्टसाध्यघटाविरोधि व्याप्तिपक्षविरोधि तदन्यत्वे सति परामर्शविरोधित्वं तत् विशिष्टपक्षवैशिष्ट्योपादानाद्वह्निमान् वह्निमान् जलह्रदत्वादित्यादौ व्याप्तिपक्षविरोधिन्या अपि स्वरूपासिद्धेर्नासंग्रह इति वाच्यं जलह्रदो वह्निमान् काञ्चनमयवह्निमान् वा धूमात् काञ्चनमयधूमादित्यादौ व्याप्तिपक्षविरोधित्वात्तस्य पक्षाविरोधिनो रूपस्याप्रसिद्धेः । उच्यते [१] साधारण्य

---

(१) जागदीशसाम्प्रदायिकः पाठः ।

भवानन्दादिसम्मतस्तु ।

साधारण्यासाधारण्यभिन्नं तत्स्वात्मकं विषयतापरामर्शविरोधितावच्छेदकरूपमसिद्धिः । अतव्यभिचारिमेयत्ववान् वह्निसमानाधिकरणद्रव्यत्ववान् वा पर्वतो वह्निमान् मेयत्वात् द्रव्यत्वादित्यादौ

कथितासाधारण्यानुपसंहारित्वभिन्नं ज्ञानस्य विषयतया परामर्शविरोधितावच्छेदकं रूपमसिद्धिः यत्र साधारण्यादिकमप्रसिद्धं यत्र च वह्न्यव्यभिचारिमेयत्ववान् वह्निसमानाधिकरणह्रदत्ववान् वह्न्यभावव्यापकीभूताभावप्रतियोगिह्रदत्ववान् वा पर्वतो वह्निमान् मेयत्वात् ह्रदत्वादित्यादौ साधारण्यादिकमप्रसिद्धं तत्र तदन्यत्वं नोपादेयं शब्दानुगमस्याकिञ्चित्करत्वात् परामर्शे च व्याप्तिर्व्यतिरेकतोऽप्युपा-

---

आश्रयासिद्धिविरहेऽपि न क्षति असिद्धित्रयस्यासार्वत्रिकत्वात् आश्रयासिद्धिलक्षणस्य चासिद्धिघटितत्वान्नातिप्रसङ्गः । प्रकृतपक्षाप्रविष्टाभावकसाधारण्यादिभिन्नं वा वक्तव्यम् । परामर्शे चान्वयव्याप्तिरुपादेया तेनानुपसंहारित्वव्युदासः साध्यसाधनभेदेनासिद्धिभेदात् यत्र साधारण्यादिकमप्रसिद्धं तत्र तदन्यत्वं नोपादेयं यथा काञ्चनमयः पर्वतो ह्रदो वा वह्निमान् मेयो वा धूमात् मेयत्वादित्यादौ पर्वतान्य पर्वतो दहनान्यदहनवान् धूमान्यधूमादित्याद्यसिद्धिसम्पादनाय हेत्वाभासलक्षणोपकारीतिरनुसरणीया । तत्र विशिष्टपक्षग्रहस्य विरोधिन्यसिद्धिर्विरोधिरूपं वाश्रयासिद्धिः प्रकृतपक्षप्रकृतहेतुग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयविशिष्टग्रहविरोधितावच्छेदकं स्वरूपासिद्धिः संगृह्यते चानेनानित्यं गगनरूपवत् चाक्षुषस्पर्शाश्रयत्वादित्यादौ निस्पर्शादिकम् एवं शब्दो द्रव्य गुणान्यत्वे सति सत्त्वात् गुणान्यत्वविशिष्टसत्त्वं द्रव्यत्वव्यभिचारिगुणवृत्तित्वादित्यादावपि नाव्याप्तिः तदुभयभिन्नासिद्धिर्व्याप्यत्वासिद्धिः पक्षादिभेदेनासिद्धिभेदात् यत्राश्रयासिद्ध्यादिकमप्रसिद्धं तत्र तदन्यत्वं न वक्तव्यमिति ।

देया नासौ व्यतिरेकव्याप्तिविशिष्टपक्षधर्म्मताभावादाश्रयासि
साधारण्याद्यनिरूपितया ज्ञानस्य विषयितया परामर्शविरो-
धितावच्छेदकरूपं वा असिद्धिः एतएव द्रव्यत्वाव्यभिचारि-
गुणद्रव्योभयसमवेतवान् द्रव्यत्वसमानाधिकरणगुणसमवेत
कर्म्मासमवेतवान् वा घटो द्रव्य सत्वात् द्रव्यकर्म्मासमवेतस
मवेतत्वे सत्यादौ गुणद्रव्योभयसमवेतादिनिष्ठस्य द्रव्यत्वव्यभि
चारित्वादे   सत्तादिनिष्ठद्रव्यत्वव्यभिचारित्वाद्यापादकसाधार-
ण्यादितोऽनतिरिक्तत्वेऽपि न क्षतिः पर्वतान्य पर्वतो दहना
न्यद्दहनवान् धूमान्यधूमादित्यादावसिद्धिसम्भवाद्भाय ऐत्वा
भासोक्ता शैलिरनुसर्त्तव्या तत्र ज्ञानस्य विषयतया विशिष्ट
पक्षपक्षविरोधितावच्छेदक रूपमाश्रयासिद्धिः। विशिष्टपक्ष
विशिष्टसाधनपक्षाविरोधिनो ज्ञानस्य विषयतया तदुभय
वैशिष्ट्यपक्षविरोधितावच्छेदक स्वरूपासिद्धिः। संगच्छते
चैत्यमनित्यगमर्न रूपवत् चाक्षुषस्पर्शवत्त्वादित्यादौ गगनादे
र्नित्यगतत्वादिकम्। तदुभयभिन्नासिद्धिर्व्याप्यत्वासिद्धि। पक्षा
दिभेदेनासिद्धिभेदाद्याश्रयासिद्ध्यादिकमप्यसिद्धं तत्र तद्
न्यत्व न वक्तव्यमिति"। सविषयकत्विसमस्तसाध्यसाधनपक्ष
विरोधितानवच्छेदकप्रकृतपक्षप्रकृतसाधनवैशिष्ट्यपक्षविरो-
धितावच्छेदकरूपस्य शून्यज्ञानस्य विषयोऽसिद्धिर्व्याप्यत्वा-
सिद्धि साध्यपदोपादानात् पर्वतः पर्वतवृत्तिकृदत्ववान्
कृदत्वादित्यादौ साध्याप्रसिद्धेर्नासम्पक्ष तस्या स्वरूपासिद्धौ
निवेशादनुपादेयमेव वा साध्यमित्यपि कश्चित्। साध्यत्वे

त्वप्रसिद्धिव्याप्तिविशिष्टपक्षधर्म्मतादि विरहादयस्तद्भेदाः । यत्तु हेतुतावच्छेदकस्य व्याप्यतानवच्छेदकत्वम् अपि व्याप्यत्वासिद्धिः नीलधूमत्वादेश्च तथात्वं समानाधिकरणं सम्भवदवच्छेदकान्तरमपेक्ष्य गुरुत्वादिति अत्रावच्छेदकत्वं यद्यनतिरिक्तवृत्तित्वं तदा तस्याप्यस्ति । अथ तादृशेन समानाधिकरणेन तादृशेन वा धर्म्मान्तरेणाघटितत्वे सति तत्त्वं तन्न सत्यन्तस्य गौरवेणानुपादेयत्वात् नापि अन्यूनानतिरिक्तवृत्तित्वम् आलोकाद्यवृत्तेर्धूमत्वादेरप्यतथात्वापातात् । अथ स्वरूपसम्बन्धविशेषः तर्हि द्रव्यं रूपादित्यादौ रूपत्वादेरपि तथात्वं न स्यात् रूपादिषु चतुर्विंशतौ सम्भवदवच्छेदकमेकं गुणत्वमपेक्ष्य रूपत्वादीनां चतुर्विंशतेः षड्विंशतेर्वा गुरुत्वात् एवं पशुमान् सास्नादिमत्त्व इत्यादौ सास्नादिमत्त्वादेरपि गोत्वादिकां जातिमपेक्ष्य उपाधेर्गुरुत्वात् हेतुतावच्छेदकविशिष्ट हेतुव्यापक साध्यसमानाधिकरणतादृशहेतोः साध्याव्यभिचरितसम्बन्धितादृशहेतोर्वा ज्ञानस्यानुमितिकारणस्याविरोधिनो निरूप्यानवच्छेदकत्वस्य दोषत्वायोगाच्च । परार्थस्थले तु दृष्टान्तस्य साध्यादिवैकल्यवत् हेत्वाद्यविशेषणत्वमपि निग्रहस्थानविभाजकत्वस्यानुगमसुपपादकेन चकारेण समुच्चितं पृथगेव निग्रहस्थानम् ।

[illegible]विषयतावादिमतेनाह पक्षेति पक्षः साध्याभाववानिति ज्ञाने पक्षनिष्ठविशेष्यत्वस्य प्रकारः साध्याभाव इति [illegible] । विपरीतेति [illegible]त्यादिविषयत्वेनाप्रतिबन्धक

त्वादिति भाव । साध्याभावप्रमात्वपक्षे पक्षे साध्याभाव वत्पक्षस्यावगाहनाभिप्रायेण साध्याभावस्य बाधपदादि नवेन वा ग्रहणे चयेति पक्ष इति व्याप्तौ निश्चितायां पक्ष तत्समयो साध्याभावप्रमयो न दोषायेत्यर्थः । अनुमित्यु त्पादेनेति फलतोऽपि विरोधित्वमदर्शनाय अतएव न्याय मध्यपतो विरोधित्व दूषयति अन्ययेति । हेत्वाभासाधीन मिति न च हेत्वाभासत्वानुमित्याभाससामग्रीजनकत्वे साध्य वति पक्षे सिद्धाभास जन्याया अनुमितेराभासत्वापत्ति निष्ट्रेपधाने तथात्वस्येष्टत्वात् पक्षासिद्धिरित्यस्य बाधक मात्रमित्यन्धनेत्यादि सिद्धस्येयाथाभ्युपगममात्र मङ्गेरपध त्वात् साधनमयत्वस्यासाध्यत्वाच न च साध्याभाव इति अनुमित पूर्व विशिष्टस्याप्रसिद्धा तदभावस्याज्ञानादिति भवतैवोक्तत्वादिति भाव । तथानेत्यादि अधिकयमत्वेनाधि करणरूपत्वेनापेक्षणीयोऽप्यभिचारनिश्चय । साध्याभावनि श्चयेति साध्याभावो निर्णीयते येन प्रमाणनिश्चयेन तद धीनेत्यर्थः । अर्थेदं तत्त्वम् । साध्याभाववान् साध्यवदन्यो वा पक्ष पक्षावृत्तिसाध्यं पक्षे साध्याभाव पक्षनिष्ठसाध्या भाववत्त्वादिक बाधादे पक्षावृत्तित्वादिकं साध्यवत् सामा- न्यादे पक्षान्यत्वादिकं विशिष्टसाध्ये पक्षादेर्विशेष्याभाव वत्त्वादिक यथामत पक्षे साध्यवत्ताज्ञानस्य साक्षाद्विरोधि प्रत्येकमेव बाध तन्निश्चयत्व विरोधिनिश्चयत्वेन दोषविशेषा धनन्यज्ञानमात्र एव विरोधी अतएवानन्वयनिश्चयविरहो

योग्यतेत्याचार्य्याः । विभाजकन्तु प्रकृतपक्षप्रकृतसाध्यवैशि-ष्ट्यग्रहविरोध्यनुन्नायकत्वे प्रकृतपक्षप्रकृतसाध्यग्रहाविरोधित्वे च सति प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोधित्वं पक्षादेः साध्यासमानाधिकरणधर्म्मवत्त्वादिकमपि वाध एव साध्या-भाववत्पक्षादिज्ञानप्रमात्वन्तु न वाधः तज्ज्ञानस्य पक्षादौ साध्याभावादेरनवगाहित्वे विरोधिविषयत्वाभावात् अव-गाहित्वे तु तद्विषयत्वेनैव प्रतिवन्धकत्वात् प्रमात्वनिश्चय-स्यान्यत्र प्रतिवन्धकत्वाकल्पनाच्च सर्व्वत्र निश्चयस्य हेतुत्वे प्रति-बन्धकत्वे च भ्रमत्वाग्रहः संशयसाधारणज्ञानमात्रस्य तथात्वे तु भ्रमत्वानिश्चयः प्रयोजकोऽन्यथाकाङ्क्षाकृतिसाध्यत्वादि-निश्चयहेतुप्रतिहेतुपरामर्शादीनां प्रमात्वनिश्चयो योग्यता व्यभिचारज्ञानादीनाञ्च प्रमात्वज्ञानं प्रयोजको भवेत् शङ्खादौ शुक्लत्वाभावभ्रमे च शुक्लत्वाद्यनुमितिर्न विना तद-प्रामाण्यग्रहं नहि स्वरूपसत्यपि वाधनिश्चये शाब्दमानसा-दिज्ञानमुत्पद्यते । अथ लाघवेन संशयसाधारणं संसृष्टत्वज्ञा-नमेव शाब्दानुमित्योः कारणम् आस्ताञ्च तस्यैव विरोधितया प्रकरणसमोवाधश्च हेत्वाभासोऽसिद्धिरिव परामर्शस्य विलो-यताञ्चाप्रसिद्धसाध्यकमनुमानमिति चेन्न संशयासत्त्वसमये परामर्शोत्पादे सिद्धिसिषाधयिषे विना अनुमित्यनुत्पाद-प्रसङ्गात् सति विशेषदर्शने संशयायोगादिति एतेन लाघवात् प्रमात्वेन निर्णीयमानं वाधज्ञानं विरोधीति परास्तम् ।

विपरीतमेव साधकं स्फुटतरञ्च तद्भावसाध्य तत्र हि गोत्वाद्यप्रकारकं गोत्वाभावादिप्रकारकं ज्ञानं साधनिश्चय तथाच गोत्वादिमद्विशेष्यकगोत्वाद्यभावप्रकारकत्वप्रामा भावाभ्रमत्वग्रहविरहे साधकग्रह पक्षे गोत्वाद्यप्रकारक ज्ञानं तस्य च गोत्वादिमद्विशेष्यकगोत्वाद्यभावप्रकारकत्वा द्यप्रकारकं गोत्वाद्यभाववद्विशेष्यकगोत्वाद्यभावप्रकारकत्वप्र कारकज्ञानं प्रमात्वनिश्चय श्चयुक्तमायश्च तत्तत्कार्य्यं प्रति प्रतिबन्धकानां कारणाभावश्च प्रमात्वेन निर्णीयमानतया तथात्वापत्तिरिति। न च सति विशेषदर्शने विपरीतनिश्च योऽकिञ्चित्कर तादृशेऽपि विशेषदर्शनेन प्रत्यक्षोत्पादादिति वाच्य विशेषदर्शनेन तज्ज्ञानानन्तरमेव प्रत्यक्षोदयात् परैरपि क्वचित् प्रत्यक्षविशेष एव विपरीतनिश्चयविशेषस्यैव तथात्वो पगमाच्च। नहि शाब्दादिबोधेऽपि विशेषादर्शनविशिष्टत्वेन स विरोधी गौरवात् मानाभावाच्च। न वा चाक्षुषादिप्र त्यक्षे मानसादिविपरीतनिश्चयो विरोधी उपयुज्यते च क्वचि द्विशेषदर्शनमप्रामाण्यग्राहकत्वेन बाधवद्धे। नन्वेवं बाधा वतारदशायां पक्षे हेतोरपक्षेऽप्रामाण्यासिद्धि' ग्रहे च व्यभिचारधीरेवेति वाच्य बाधग्रहपरामर्शयोर्भेदात् अभे देऽपि पक्ष साध्यव्याप्यहेतुमान् साध्याभाववांश्च इति प्रकृत्य परस्परोपरागानवगाहिनोऽव्यभिचारविषयत्वात् प्रकृते व्य भिचाराव्यभिचारयोरेकमिश्रयागोचरत्वात् पूर्वं च कारणे साक्षादनुमित्यविरोधिनो व्यभिचारज्ञानादेरकिञ्चित्करत्वात्

शक्तिसाधका अपि अन्यथा पक्षातिरिक्ते सर्वत्र साध्यवत्ता-निर्णयाद्व्याप्तिग्रहस्य दुर्वारत्वात् पक्षविपक्षान्यतरत्वादिना सर्वत्र सत्प्रतिपक्षप्रसङ्गाच्च अथ साध्यतद्वदत्यन्तान्योऽन्या-भावगर्भव्यभिचारयोरेकोपादानेऽन्यतराव्याप्तिः साध्यवत्ता-ज्ञानप्रतिबन्धकज्ञानविषयत्वेनाभावद्वयानुगमेऽपि हेतुमति तादृशाभाववत्त्वस्य तादृशाभाववति हेतुमत्त्वस्य तादृशा-भावे हेतुसामानाधिकरण्यस्य साध्यतद्वदादौ हेतुसमा-नाधिकरणतादृशाभावप्रतियोगित्वादेश्चासंग्रह इति चेत् अत्र वदन्ति प्रकृतसाध्यसाधनसामानाधिकरण्यग्रहाविरो-धिनो ज्ञानस्य विषयतया अन्वयव्याप्तिग्रहविरोधितावच्छेदक-त्वेन विभजनान्नासंग्रहः अविरोधिन इत्यन्तेन साध्याप्रसि-द्धादीनां निरासः यदि पुनरत्यन्तान्योऽन्याभावयोरेकतर-गर्भव्यभिचारज्ञानस्य नान्यतरगर्भव्याप्तिग्रहविरोधित्वम् इत्यादिकं विभाव्यते तदा साध्यसामानाधिकरण्यघटितत्वे नान्वयव्याप्त्योऽनुगमनीयाः प्रातिस्विकरूपेणोपादाय वा तावद्व्याप्त्यवगाहित्वं ग्रहस्य वक्तव्यं साध्याव्यभिचरितसामा-नाधिकरण्यस्य व्याप्ये प्रसिद्धस्य हेतौ विरहोऽप्येतद्विशेष एव विशिष्टसाध्यसाधनवत्त्वग्रहाविरोधिनो ज्ञानस्य विषयतया व्यापकत्वग्रहविरोधितावच्छेदकरूपत्वं वा विभाजकं शेषं पूर्ववत्। साध्य तद्वतोरत्यन्तान्योऽन्याभावौ साध्याभावव्या-प्यादिव्यावृत्तेन साध्यवत्ताज्ञानविरोधित्वेनानुगमस्य तत्र हेतुसामानाधिकरण्याभावग्रहविरोधित्वं साध्यवत्ताज्ञान-

विरोधिनि साध्याभावपक्षविरोधिहेत्वाभाससाधारण्येदयारूप
यत्त्व वा तथा वक्तव्य साध्याभावव्याप्यादौ तु हेतुसामा
नाधिकरण्यादिकमविरोधित्वाभासम् विरोधित्व पूर्वोक्त
दिशावसेयम् उपदर्शितविशिष्टव्याप्तिविरहो व्याप्यत्वासिद्धि-
रेवेति व्याप्तिपक्षकारणसहचारपक्ष सहकार्यभावप्रतियो
गिपक्षविषयत्वेनानुगम इत्यपि कश्चित्। सावां मतेनोत्तर-
यति न सर्वेत्यादि। सर्वेति विपक्षेऽप्यन्वेति तेन साध्या
भाववन्नू नहसेष्युदास विपक्षत्वस्य निश्चयगर्भत्वात् अत्र
नित्या गन्धवत्त्वात् नित्य शब्दः शब्दत्वादित्यादौ नाव्याप्ति
पृथिवी रूपवती रसादित्यादौ जलादेर्नीरसत्वभ्रमे पुन
रसाधारण्यभ्रम एवेति मन्तव्यम्। तथापीति पक्षत्व स
न्दिग्धसाध्यकत्व मत दूषयति पक्षेत्यादि। व्याप्तोति तथाच
व्याप्तौ दूषणासमवायाभावत्वम् उपाधिवदिति भावः एक
धर्मिव्याप्तसत्वञ्च न सामानाधिकरण्यप्रविरोधिधर्म्यन्तरे
तत्सम्भवात् अन्यथा सतोरपि साध्यसाधनयोर्व्यतिरेकित्व
दोषाय स्यात् अथाय शक्तिसुरभिमाय पक्षे साध्याभावस्य
संशयो निश्चयवानुमितिविरोधी विरोधिविषयकत्वात् तत्
सामग्री च विरोधिसामग्रीत्वेन तथादिमस्य सामग्रीपक्षे
सव्यभिचारस्य हेतोर्यंत्र द्वितीयस्य तु प्रतिहेतोः परामर्श
सतस्तयोराभासत्वम् अतएव सव्यभिचारमपि पक्षवृत्तित्व
विशेषण साध्याभावपक्षवृत्तित्वमाव पुनरसिद्धिरेवेति विरो-
धान्यस्य परामर्शविरोधिनो रूपस्य सत्त्वादिति नैव साध

संशयस्य प्रतिबन्धकत्वानङ्गीकारात् साधारणधर्म्मवत्ताज्ञानस्य संशयसामग्रीत्वाभावात् सामग्रीत्वेन प्रतिबन्धकत्वे हेत्वाभासत्वायोगाच्च अन्यथा पक्षस्य साध्यतदभाववद्वृत्ति प्रमेयत्वादिमत्त्वं सर्व्वत्र हेत्वाभासीभवेत् तथा कामिनीजिज्ञासाप्रयोजकं तज्ज्ञानेष्टसाधनत्वादिकमपि । एवं विशिष्टस्यानुज्ञाव्यत्वं व्युत्पाद्य केवलस्यापि सपक्षव्यावृत्तत्वस्य तथात्वं व्युत्पादयति किञ्चेति वाद्युपदर्शितदृष्टान्तस्य साधनवैकल्यन्तु नासाधारण्यं सपक्षान्तरवृत्तित्वेऽपि तत्सम्भवात् तद्भावनन्तु तस्य निग्रहस्थानत्वात् तद्विभाजकसूत्रस्थानुक्तसमुच्चायकचकारेण तस्य समुच्चितत्वात् तदाहरणस्याभासताप्रदर्शनायैव वा आवश्यकत्व प्राचां दृष्टान्तप्रयोग इति भावः । माभूत् परार्थानुमानेऽसाधारण्यं दोषः स्वार्थे तु स्यादत आह स्वार्थेति । स्वमते सिद्धान्तसुपक्रमते उच्यत इति । अर्थादिति व्यतिरेकिमुद्रया अर्थादुभयं साधयेत् अर्थवशसम्पन्नसेवोभयसाधकत्वम् उभयसिद्ध्यनुकूलव्याप्त्यादिग्रहादित्यर्थः व्यतिरेकितया वेति पाठे अर्थात् अर्थापत्तिविधयेति परमतेन एवञ्च पक्षधर्म्मतया ज्ञायमानो हेतुः साध्याभावव्यापकीभूताभावप्रतियोगित्वज्ञानात् साध्यस्य साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानाच्च साध्याभावस्य साधनायोन्मुखो मिथो विरोधेन नैकमपि साधयति । न च शब्दे नित्यत्वानित्यत्वसन्देहे तदुभयव्यापकत्वं शब्दत्वाभावस्य ग्रहीतुमशक्यं व्यापकत्वाभिमतशब्दत्वाभावाभाववच्छब्दवृत्ति-

तस्य नित्यत्वानित्यत्वयोः सन्दिह्यमानत्वादिति वाच्य तथात्वेऽपि तादृगसत्त्वाभावदशायां तथात्वनिश्चये तदुभयव्यापकीभूताभावप्रतियोगिशब्दत्ववत्त्वस्य शब्दे प्रतिसन्धातुं शक्यत्वात् व्याप्त्यग्रहस्यैव प्रतीतस्य सौरभादेर्भावस्य पानीयपाषाणादौ पृथिवीत्वतदभावसहचारेण तदुभयव्यापकतापक्षे तादृगाभावप्रतियोगिसौरभस्य चन्दनादौ परामर्शे पृथिवीत्वादौ साध्ये तदसाधारण्यस्यानिष्टत्वमभावाच्च। नन्वयं सत्प्रतिपक्ष एव व्याप्तेरन्वयनिरूपणत्वव्याप्यापक्षत्वेनाप्रयोजकत्वादित्यत आह सत्प्रतिपक्ष इति। नचैवमविभेदेन पृथगभिधानेऽस्ति प्रसङ्ग एतस्यैवच्छायाया दृष्टान्ते चैत्यदृष्टस्यैवाभिधानात् तदभावसाधके तत्साधकत्वभ्रमरूपाशक्तिविशेषसूचनार्थत्वाच्च सत्प्रतिपक्षसव्यभिचारीभयत्वाच्च णत्वात्तस्तया उभयात्मभावस्याविरुद्धत्वादित्यपि कश्चित्। सर्वसपक्षेति सपक्ष साध्यवान् पक्षवृत्तित्वे सति साध्याव्यापकीभूताभावप्रतियोगित्वमित्यर्थः इदञ्च साक्षादनुमितिविरोधि विरोधश्च साध्यासामानाधिकरण्यादिरूपोऽन्वयव्याप्तिग्रहविरोधीति न साहचर्यग्रहेऽपि साध्यसामानाधिकरण्यस्य नासाधारणं दशाविशेषे तद्भ्रमस्तु पुरुषदोषो व्याप्य इव साधारण्यभ्रम । नवीना पुनरेव वर्णयन्ति सामग्रीद्वयविरोधेन हेत्वभावस्य साध्यतदभावव्यापकतापक्षविरोधोऽसाधारणस्य दूषकताबीजं तथाहि हन्त मतावेतुना क्वचिदपि वर्त्तितव्य तत्र पावश्च साध्य

तदभावयोरन्यतरेण भवितव्यं न च तत्र हेत्वभावः सम्भवति अतोऽवश्यमन्यतराव्यापकत्वं तस्य एवंविधविरोधध्रौव्ये साध्येन तदभावेन च हेत्वभावस्य सहचारज्ञानं नैकतरनिरूपितामपि व्यापकतां ग्राहयति मिथो विरोधात् विरोधिपरामर्शद्वयमिव साध्यतदभावौ एवञ्च वृत्तिमत्त्वविशेषितं हेतोर्यावद्विपक्षसपक्षव्यावृत्तत्वं वृत्तिमत्प्रतियोगित्वविशेषितं वा हेत्वभावस्य यावत्सपक्षविपक्षवृत्तित्वमसाधारण्यमिति योजयन्ति च ग्रन्थमित्थं शब्दत्व यदि साध्यतदभाववद्व्यावृत्तत्वेन तदुभयव्यापकोभूताभावप्रतियोगित्वेन ज्ञात ज्ञानयोग्यं स्यात् तद्वत् स्यादिति यावत् तदा व्यतिरेकितया तादृशव्यतिरेकप्रतियोगित्वेनार्थात् पक्षे तदुभय साधयेत् तदुभयसहचरितं भवेत् व्यापकाभाववति व्याप्याभावस्यावश्यम्भवात् अतथाभावे पक्षधर्मताया व्याप्तेर्वानुपपत्तिर्न च तथाभावः सम्भवति न वा पक्षवृत्तित्वं वाधितम् अतः साध्यतदभावौ व्यापकतया तदुभयसिद्ध्यनुकूलविरोधिव्याप्तिद्वयग्राहकव्यतिरेकसहचारद्वयग्रहविषयतया असाधारणो दोषो व्याप्तिद्वयग्रहप्रतिवन्धकः । ननु यदि विरोधिव्याप्तिद्वयं न गृह्यते तदा सत्प्रतिपक्षोच्छेदः गृहीतविरोधिव्याप्तिद्वयहेतुसमुत्थत्वात् तस्येत्यत आह सत्प्रतिपक्ष इति । नन हेतोर्भिन्नतयाधिकरणभेदेन तथा ग्रह. सम्भवति अत्र पुनरेवास्मिन् हेतौ तद्ग्रहो विरुद्ध इत्यर्थः । अत्र चेदं चिन्त्यम् । एवं सति सपक्षादेर्यावत्त्वविशेषणं व्यर्थं

दूषकतायामनुपयोगात् व्यभिचारादिस्मारकोपक्षीणत्वात्
दृष्टिमत्त्वादिविशेषितस्यापि चासाधारण्यस्य ज्ञानं न व्याप्ति
ज्ञानविरोधि विरोधिविषयकत्वाभावात् उपदर्शितविरोधस्य
तच्छरीरेऽनन्तर्भावाच व्यापकतयोरपि च न स्वतो विरोध
उपदर्शितरीत्या तदवधारणे चावश्यं व्यभिचारज्ञानमेव
प्रतिबन्धकमत एव सत्यपि चासाधारण्यज्ञाने एकशाखाक्रम
तर्कावतारे भवति व्याप्तिधीरिति एतेन तादृशसाधारण्यज्ञान
सम्पन्नविरोधिव्याप्तिधीसामग्रीत्वेन प्रतिबन्धक तर्कावतारे
पुनस्तदभावात्तथैव नाप्नोतीति परास्तं तस्य व्यभिचारादा
निवर्तकत्वेनैवोपयोगित्वात् सामग्रीत्वेन प्रतिबन्धकत्वे इष्टा
भावत्वायोगाच सत्प्रतिपक्षे च विरोधिव्याप्यवत्तानिर्णयत्वेन
प्रतिबन्धकत्वं नतु विरोधिसामग्रीत्वेन बाधावतारे त्वापातत
सत्प्रतिपक्षितत्वेऽपि बाधेन प्रतिहेतोरव्याप्यत्वादिज्ञान एव
साध्यानुमितिरुक्त्वादिति कृतं पल्लवितेन ।

केवलान्वयीत्यादि मते तु अस्य साधारणस्य च केवला
न्वयिनि साधनस्य व्यतिरेकिणस्तु भागासिद्धस्य साधारणत्व
विरुद्धत्वञ्च यथासम्भवं बोध्यम् । नापीति केवलान्वयि
साध्यकसाधारणाय सत्यन्त व्यतिरेकिसाध्यकासाधारणाय
केवलान्वयीत्यादि पदम् साधकबाधकमानशून्यस्य केवला
न्वयिसाध्यकेऽपि साधकमानप्रसिद्धिरूपसेति न सत्यन्तस्य वैयर्थ्य
निश्चितसाध्याभावपक्षवृत्तिमात्रसहचरितत्वे त्वसाधारण्य विरुद्ध इति
साधारण्याद्यपहृदयायामसार्थ्यमिति वा हृदयम् । अन्या-

पकत्वादिति सद्धेतुत्वञ्च व्याप्तिनिश्चयदशायामेवेति भावः।
अथेत्यादि पक्षातिरिक्तेन प्रतीतो निश्चितो व्याप्तिग्रहानुकू-
लोऽन्वयेन व्यतिरेकेण वा सहचारो यस्य स तथा सद्धेतुरे-
वेति तथाच लक्षणे पक्षातिरिक्तपदं सहचारग्रहस्थलमात्रोप-
दर्शकं न तु विशेषकमिति विशेषकत्वाभिप्रायेण दूषणद्वयमाह
तत्रैवेत्यादि असाधारणे सपक्षव्यावृत्ते पक्षतादशायां शब्दोऽ
भिधेयः शब्दत्वादित्यादौ जलं निःस्नेहं शीतस्पर्शवत्त्वादित्यादौ
च रूपं जलं वा द्रव्यभिन्नं गुणवत्त्वात् गुणकर्म्मावृत्तिजाति-
मत्त्वादित्यादौ विरुद्धे चातिव्याप्तिरित्यर्थः। दूषकतताया-
मिति सहचाराभावस्यैव ज्ञानं विरोधि न तु तत्प्रत्ययांश-
स्यापीति अर्थगत्येति अनैकान्तिकशब्दार्थविवेचनेन प्राति-
स्विकरूपेणैवप्रतिबन्धकत्वव्यवस्थितेरित्यर्थः। केचित्तु दूष-
कतायामसाधकतायाम्। अर्थेति अनैकान्तिकशब्दार्थे
उभयकोट्युपस्थापकत्वादौ साध्योपस्थापकत्वाद्यंशस्य व्यर्थ-
त्वादित्यर्थ इत्याहुः। विप्रतिपत्तिः पक्षसाध्याभावप्रीतितिः
साध्ये पक्षनिष्ठाभावप्रतियोगित्वप्रतिपत्तिर्व्वा आद्ये केवला-
न्वयीति साध्याभावाप्रसिद्ध्या अव्याप्तिरित्यर्थः। उभयत्र
सर्वस्येति अतिव्याप्तेरिति पाठे तन्मात्रवृत्तित्वं तत्रव्याप्य-
वृत्तिकत्वं तदितरावृत्तित्वं वा आद्ये केवलेति इदञ्च
यथाकथञ्चिद्व्याप्तिग्रहदशायां द्वितीये सर्वस्येति व्या-
प्तीत्यादि यत्र यस्येत्यर्थः तथाच हेत्वभिमतशब्दोपसन्धा-
नात् तद्धेतुकप्रकृतसाध्यसिद्ध्यौपयिकव्याप्तिग्रहानुकूलोपसं-

छाराभावमस्यानुपसंहारित्वमित्यर्थमनाभाद्यतिरेकिणि ना तिव्याप्ति । ननूपसंहार सहचार सन्निचयो वा व्याप्ये माद्यम्याभावो निश्चितमसिद्धानुपसंहार्थव्यापक व्यति व्यापकत्व रूप द्रव्यभिन्न गुणवत्त्वाद्गुणकर्मान्यत्विजातिमत्त्वा दित्यादे द्वितीये पुनरज्ञानरूपासिद्धिपर्य्यवसायी कारणा भावतया स्वरूपसत्येव दोषो न हेत्वाभास इत्यत आह केवलान्वयीति पक्ष साध्यनिश्चयविरोधिम साध्यवान् वेत्यादे सन्देहस्य विषयोऽवच्छेदकत्वं स्वान्यवृत्तित्वं तच स्वरूपसतोऽप्यविरुद्ध तेन प्रातिस्विकद्रव्यत्वादिरूपेण सर्वत्र साध्यसन्देहदशायां मा व्याप्ति एवञ्च सर्वत्रैव हेत्वा दिमति साध्यतदभावसन्देहाद्व्याप्यपक्षेणाभासत्वम । परार्थ म्यन्ते वह्निर्भावं व्युत्पादयति एवमित्यादिना पक्षेकदेशनिश्चय ज्ञाने ज्ञापने स्वार्थस्यनेऽन्तर्भावम् एतेनेत्यादिनायन्त निर स्यति उपजीव्यत्वादिति सर्वेद चिन्त्य हेतुमति साध्याभाव सन्देहो नाभास सत्त्वयैव विरोधित्वात् तद्विषयस्तु हेतौ साध्याभावसामानाधिकरण्य साध्यस्य वा हेतुमन्निष्ठाभाव प्रतियोगित्व नास्त्येव केवलान्वयिसाध्यके व्यतिरेकिसाध्यके तु साधारण्य रूपतया सन्दिग्धानैकान्तिकत्व पर्य्यवसितं विरुद्ध विषयकसाध्यतदभावसन्देहे च कारणीभूतान्वयव्यतिरेक सहचारग्रहविरहात् अनयसामग्रया साध्यतदभाववत्त्वनि श्चयप्रतिबन्धाद्वा व्याप्यपक्षेऽज्ञानरूपासिद्धिरेव उपजीव्योऽपि च साध्याभावसन्देहादिर्नाभास सत्त्वयैव विरोधादिति

यत्तु व्याप्तीति व्याप्तिग्रहानुकूलसहचारनिश्चयत्वावच्छिन्न-विरोधिरूपत्वमर्थः विरोधस्तु संशयसाधारणमन्वयमात्रसह-चारग्रहं विरुणद्धि असाधारणे व्यतिरेकिणि च न व्यति-रेकसहचारग्रहविरोधः तादृशरूपसत्त्वेन लक्षणस्यासम्भ-वितया तदेव रूपं लक्षणमाह केवलेति तादृशावच्छिन्नः पक्षः सन्दिग्धसाध्यकोयस्याश्रयः स तथा तथाच केवलान्वयि-धर्म्मावच्छिन्नसाध्यसन्देहविषयवृत्तित्वमनुपसंहारित्व व्यति-रेक्यादौ केवलान्वयी न साध्यसन्देहविषयतावच्छेदकः साध्यवत्तानिश्चयसामान्यविरोधिसंशयविषयवृत्तित्वं वा तत्त्वं धर्म्मिविशेषनियन्त्रितस्तु सन्देहो नान्यधर्म्मिकनिश्चयविरोधी साध्यसन्देहविषयताव्याप्य साध्यसिद्ध्यनुकूलव्याप्तिग्रहोप-यिकसत्ताकत्वं वा तादृशी च सत्ता अन्वये हेतोर्व्यतिरेके च तदभावस्येति न कश्चिद्विशेषः स्वरूपसत्तादृशसंशयविषये च हेतुमत्ताज्ञानं हेतौ साध्यसामानाधिकरण्यं संशयसामग्री-त्वेन तन्निश्चयप्रतिबन्धकं सर्व्वत्र संशयसामग्र्या निश्चयप्रति-बन्धकत्वकल्पनात् हेतुमति सर्व्वत्रसाध्याभावसन्देहे हेतौ साध्यसामानाधिकरण्याभावसंशयस्यौचित्यावर्जितत्वात् सा-ध्याभावेन साध्यसामानाधिकरण्याभावोपस्थापनादिति तन्न सर्व्वत्र साध्यसन्देहदशायां क्वचिदपि साध्यसामाना-धिकरण्यस्याग्टहीतत्वेन तदभावस्य ग्टहीतुमशक्यत्वात् प्रति-योगितावच्छेदकविशिष्टप्रतियोगिनिश्चयस्याभावधी हेतु-ताया असक्तदावेदितत्वात् अस्तु वा स यथाकथञ्चित् साध्ये

हेतुसामानाधिकरण्याभावसमयहेतुत्वेन वा तदात्व न तथापि सामग्रीत्वेन प्रतिबन्धकतया हेत्वाभासत्वम् अन्यथा व्यभिचरिता व्यभिचरितसमानाधिकरण्याप्याव्याप्या- प्यपक्षधर्मोपपक्षधर्मादिसाधनवत्ति साधनादिसाधारणद्रव्यत्वा दिमत्त्वं हेतौ पक्षस्य आभासान्तरं स्यात् तदुपदर्शितस्यैव तस्यापि ज्ञानस्येतरसाचिव्येन तत्तन्नियायविरोधिवगयत्वा- सम्भवात् एवमसिद्धादिनिर्दोषकमन्त्यसामग्र्यपि अपि च हेतौ साध्याभावसन्देहविषयमात्रवृत्तित्व दूषणमिति प्राप्तं तत्र व्यतिरेकिणि हेतौ नियतविपर्ययेणापि सन्देहेन सम्प- द्यते दूषकतावीजमत्त्वे चासाधारण्यादिसाधारण्य न दोषाय न वा पक्षैव निर्भरं कर्त्तव्यो हेत्वाभासत्वानुपपत्ते रुक्तत्वादित्यन्य पल्लवितेन ।

व्याप्तिपक्षप्रतिबन्धकत्वपर्यवसायकप्रयोजनकत्वेन साधारण्यादौ नाम्नैकं हेत्वाभासत्वं साधारणेन व्यापकत्वस्याव्यभिचारि त्वस्य वा असाधारणेन सामानाधिकरण्यस्यानुपसंहारिणा च व्यतिरेकव्याप्तेर्ग्रहस्य प्रतिरोधात् लक्षणन्तु विशिष्टसाध्य साधनपक्षाविरोधिनो ज्ञानस्य विषयतया व्याप्तिपक्षविरो- धितावच्छेदकं रूपं व्याप्तिचान्वयतो व्यतिरेकतश्च नामारूपा प्रातिस्विकरूपेण उपादाय तावद्वयगाही यद्वा चाप्य साध्य साधनयोरप्रसिद्धेरसिद्धिभेदस्य वारणायाविरोधिन इत्यन्त साध्यसाधनभेदेन व्यभिचारभेदापत्तेश्च विशिष्ट साध्य साधन वाप्रसिद्ध तत्र तद्ग्रहविरोधित्व नोपादेयम् एवमन्यत्रापि

शेषं हेत्वाभासलक्षणोक्तदिशावसेयम्। व्यर्थविशेषणत्वन्तु न व्याप्तिग्रहविरोधीति वक्ष्यते साध्याव्यभिचरितसामानाधिकरण्यविरहस्य वह्निर्भावनीयत्वे पुनरन्वयव्याप्तौ व्यापकत्वमव्यभिचरितत्वं वा सामानाधिकरण्यञ्च विशकलितं युगपदुपादेयं तत्र साधारणत्वं वर्णितम् असाधारणत्वन्तु सपक्षव्यावृत्तत्वं सपक्षश्च साध्यवान् तद्व्यावृत्तत्वन्तद्वृत्तित्वग्रहविरोधित्वं प्रकृतसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयसामानाधिकरण्यग्रहविरोधितावच्छेदकमिति तु निष्कर्षः। संगृह्यते चेत्थं साध्यादेः साधनवदवृत्तित्वादिकम्। चाक्षुषस्पर्शवान् स्पार्शनशब्दवत्त्वादित्यादौ विशेष्ययोरसामानाधिकरण्यञ्च बाधासिद्धिभेदस्य च साध्यसाधनयोरवृत्तित्वस्यैव तत्साङ्कर्य्येऽपि न क्षतिः इदमेव च मणिकृतां विरुद्धत्वम् इत्यञ्च तदीयमसाधारणत्वमेवविरुद्धत्वमिति। यत्र च धर्मिणि योधर्मो यादृशो हेत्वाभासः तद्ग्राह्यमपि तद्विशेषोऽन्तरेण प्रकरणसमन्तद्ग्राह्यञ्च पृथगुपदेशादविरोधाच्च अनुपसंहारित्वञ्च विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया व्यतिरेकव्याप्तिग्रहविरोधितावच्छेदकरूपवत्त्वं तादृशञ्च साध्यादेरत्यन्ताभावाप्रतियोगित्वादिकं वह्न्यभावाभावत्वेन वह्नेर्धूमाभाववदवृत्तित्वज्ञानं वह्न्यभावस्य धूमाभावव्यापकताज्ञानं कदाचिद्विरुन्ध्यादपि नतु वह्नित्वेनेति नातिप्रसङ्गः केवलान्वयिनि तत्सम्भवेऽपि अन्वयव्याप्त्युपादानेनानुमितिप्रतिरोध इति दिक्।

साधाविरोधित्व साध्यप्रतियोगिकत्वम् एकदेशिमतमाह अभावेत्यादि न च भावस्य स्वाभावविरोधित्वरूपप्रतियोगित्वादिधर्मिग्राहकमानबाध प्रतियोगित्वस्य सम्बन्धान्तरमात् स्वस्याभावस्त्वेत्यत्र षष्ठ्यर्थस्य सम्बन्धस्याभ्युपेयत्वात् विरहत्वञ्च नाभावस्य बाधात् नापि तद्रूपप्रतियन्त्रकपद-विषयत्वम् अविरोधात् प्रत्ययेन दुर्वचत्वाच्च न चानवस्था अभावस्य स्वाभावाभावत्वे बाधकाभावात् । भावस्य तथात्वे बाधकमाह बाधकं विशेष्यादि अभावप्रतीति अभावत्वविशिष्टप्रतीते अभावत्वञ्च न भावभिन्नत्वम् प्रथम दुर्वचत्वात् किन्त्वयमभावो न भाव इति प्रतीतिसाक्षिकं पदार्थान्तर तच्चानुपस्थितं निर्विकल्पकोपस्थितं वा प्रकार अभावपदा समवेतत्वाच्च जाति । अन्यथेति अनतिप्रसक्तैरधिकरणैस्त-द्धर्मस्य अभावव्यवहारोपपत्तेरिति भाव साधयाद्साधिता भावस्य विशिष्टप्रत्ययबलात् अतिरिक्ताभावसिद्धिस्तस्यैव एते-नाभावत्व सप्रतियोगिकत्व तथात्वगुणसामान्यावच्छेदकानां प्रतियोगिनां कल्पने इत्यपास्तं संयोगादिसाधारण्याच्च । गमकत्वभ्रमेति व्यभिचारिण्यव्यभिचारमात्रे विरुद्धे च सामानाधिकरण्यांशेऽपि भ्रम इति । अथवा विशेष इति दूषकतायामविशेषेऽपि निष्पक्षस्यानुक्तेन विशेषात् ईदृशोपन्यास अतएवानैकान्तिकसामान्यलक्षणे साधारणलक्षणे च विरो-धावारकं विशेषणं उक्तजात्योमिपक्षस्थानविशेषणनिरनुयोज्या नुयोगविशेषत्वव्यपदेशस्यानैकान्तिकविशेषसाधारणविशेषत्वे:

प्यदोषोवेति पुनराकारानुसारी पन्थाः । नापीत्यादि व्यापकत्वं व्याप्यव्यापकसामानाधिकरण्यघटितं न वा आद्ये साध्याभावस्येति द्वितीये तु नाभासत्वमविरोधात् । साध्येत्यादि हेत्वभावस्य साध्यवन्निष्ठाभावाप्रतियोगित्वज्ञानं वस्तुतस्तत्प्रतियोगिकाभावस्य हेतोः साध्यसामानाधिकरण्यग्रहं विरुणद्धीत्यभिप्रायेणेदम् । यदि च तदभावाभावत्वेनासामानाधिकरण्यग्रहेऽपि तत्त्वेन सामानाधिकरण्यग्रहो न विरुध्यत इति भाव्यते तदाह यद्वेत्यादि । वृत्तिमत इति धर्मेति च पक्षधर्म्मत्वाविरोधित्वप्रदर्शकं न तु विशेषकं दूषकतायामनुपयोगादव्याप्तिकरत्वाच्च वृत्तिविशेषसूचनाय वा तत तेन समवायेन हेतुतायां धूमेनाव्याप्तिः आद्ययोः साध्यवदवृत्तित्वतदधिकरणत्वाभावौ चरमयोश्च साध्यवद्वृत्तितत्त्वाधिकरणभेदावर्थाविति भेदः । ज्ञानातिप्रसक्तिं निरस्यति न चेत्यादिना । तेनेत्यादि साध्याभाववद्वृत्तित्वज्ञानं विना वृत्तिमत्त्वविशिष्टसाध्यवदवृत्तित्वज्ञानापर्य्यवसानादित्यर्थः । असहचारेति सहचारः सामानाधिकरण्यं व्यभिचारेति व्यभिचारो न ज्ञायते यस्मात्तद्व्यभिचाराज्ञानमव्यभिचारज्ञानं तदयमर्थः अव्यभिचरितसामानाधिकरण्यरूपाया व्याप्तेरव्यभिचारांशग्रहविरोधिग्रहविषयतया यथा व्यभिचारो हेत्वाभासस्तथा सामानाधिकरण्यांशग्रहविरोधिग्रहविषयतया विरोधोऽपीति सचायं विरुद्धो हेतुः । साध्याभावेति तदभावत्वं तद्वृत्ताग्रहविरोध्यभावत्व तेन साध्यवदन्यत्व-

व्याप्यत्वोपसंग्रहः पक्षसत्त्वादि । साध्यव्यापकेति अत्र व्याप्यपदं स्वरूपपरम् । साध्येत्यादि साध्यव्यापकसामानाधिकरण्यप्रयोजकविरोधिरूपवत्त्वादित्यर्थः तेन साध्यव्यापकवदन्तत्वाद्युपसंग्रहः सर्वत्र चोपलक्ष्यपदं स्वरूपमिति हिमाय फलकम् । साध्याभावेति व्याप्यपदस्य योगेन साध्याभावव्याप्यत्वेन साध्यव्यापकाभावत्वेन चेत्यर्थः । स्वसमानेति तथा च साध्याभावसाध्यव्यापकाभावयोर्मिथः साध्यव्यापकाभावत्वेनानुगमासाधिकमित्यर्थः प्रतियोगिरूपप्रसङ्गात् स्वरूपत साधनव्यापकविरोधित्वात् तेन निर्वह्निकात्ममहादिसंग्रहः । साध्यव्यापकेति अत्र व्यापकत्वं भेदाभेदसाधारणं तेन साध्याभावव्याप्यत्वसंग्रहः । धूमवत्त्वादिति धूमाभावस्य वह्न्यभावव्यापकत्वात् एतयोस्तयोरप्यधामेऽन्याभावो वह्न्यभाव-व्यापकत्वसामान्याभावाभावव्याप्यत्वपक्षे च बोध्यम् । इदं पुनरिहावधेयम् । कथितरूपाणि किं स्वरूपतो ज्ञातान्येव सामानाधिकरण्यप्रयोजकविरोधीनि असामानाधिकरण्यव्याप्यत्वेन वा नाद्यो व्यापकाभावव्याप्यत्वादेस्तदनुभयात् न द्वितीयः साध्याभावत्वसाध्याभावव्याप्यत्वयोः स्वरूपेणैव ज्ञातयोर्बाधकत्वात् तयोरस्येऽपि तत्त्वमविरुद्धत्वमिति चेत् उच्यते असामानाधिकरण्यस्य समानाधिकरणावृत्तितद्धर्म्मात्व तथात्वादाधिक्य न च एतानि धर्म्मविभाजकान्येव सर्वथा नैव साध्याभावव्याप्यत्वं नैकविधत्वादिति विरोधाभावकप्रकारत्वैविध्येन धर्म्मिणोऽपि त्रैविध्याभिधानमितिवदन्ति ।

अयञ्चेत्यादि बाधस्वरूपासिद्ध्यन्यतरसङ्करस्तु आवश्यकोऽन्य-सङ्करस्तु काचित्कोऽज्ञानासङ्कराच्च पार्थक्यम् ।

एकत्र तदुभय इति व्याप्ये पक्षधर्म्मतायाः पक्षधर्मे च व्याप्यत्वस्यारोपः प्रत्येकमव्यापकोऽतो विशिष्टस्यारोपो वाच्यः स चैकधर्म्मिणि विरोधिव्याप्यद्वयविरहाद्विशिष्टस्याप्रसिद्धा न सम्भवतीत्यर्थः। विरुद्धादौ साधने स्वव्यापकसामानाधिकरण्यरूपव्याप्तेरप्रसिद्धेरित्यपि द्रष्टव्यम्। एकत्र भङ्गेति तथाचान्यतरत्वेन तदवधारणमस्तीति भावः सत्प्रतिपक्षितव्यवहारो हि सत्यसति वा साधने नापरामृश्यमाने नाप्यविद्यमानविरोधिपरामर्शे अतएव सन् प्रतिपक्षो विरोधिव्याप्यादिमत्तया परामृश्यमानो हेतुः विरोधिपरामर्शो वा यस्य परामृश्यमानस्य हेतोरसौ सत्प्रतिपक्ष इति विग्रहमपि वर्णयन्ति अतस्तदनुसारेणैव व्यवहारौपयिकं लक्षणमाह साध्येति बाधाश्रयासिद्धिनिर्णयवारणाय समर्थान्तं न चासौ न व्याप्तिपक्षधर्म्मतात्मकबलोपस्थितिरिति वाच्यं व्याप्तिपक्षधर्म्मताविरहस्य साध्यत्वे पक्षतावच्छेदकत्वे वा तत्सम्भवात् पक्षः साध्याभावव्याप्यवान् साध्यं पक्षवृत्तित्वाभावव्याप्यवदिति पक्षस्य व्यापकभेदेन च अन्वयव्यतिरेकभेदेन च व्याप्तेश्च भिन्नत्वादेकोपादानेऽन्यसंग्रहेण बलस्याविवक्षितत्वाच्च साध्यधोविरोधानुमितिजनकज्ञानविषयत्वेन तदुपादाय तदुपस्थित्यभिधानञ्च शिरोवेष्टनेन नासिकास्पर्श-मनधा[illegible]नि [illegible] साध्यमित्येतिर्नोभिन्ना[illegible] [illegible]न्तो न साध्य-

मितिजननात् तद्वारणाय वा तत्प्रतिरुद्धकार्य्यत्वञ्च प्रतिरुद्ध-कार्य्यपरामर्शविषयत्वम् । एकदेत्यादि । न च द्वितीयस्य परा-मर्शस्योत्पादनसमये पूर्वेणानुमितिजननात् कथं नैरन्तर्य्य-मिति वाच्यं साधकमानादिवशेन क्षणमनुमित्यनुत्पादसम्भ-वात् । स्वपरेति अयं भावः न खलु सम्भवन्तः सर्व एव हेत्वा-भासाः समुद्भाव्याः आधिक्यप्रसङ्गात् परन्तु यथाकालमेकः तथाच प्रतिपक्षोद्भावनेऽपि नाप्रतिषेधमात्रेण व्याप्त्याद्यभ्यु-पगम इति । प्रतिरुद्धत्वेति प्रतिरोधप्रयोजकविरोधिव्या-प्त्यादीत्यर्थः । उभयोरिति परस्पराभावव्याप्यत्वं हि हेत्वो-र्विरोधः तन्न हि च तयोरेकत्र निर्णयो न विरुध्यते इति भावः । दूषकतेति विरोधिपरामर्शसत्त्वे नियमेन परामर्शा-न्तरादनुमित्यनुत्पादः तस्यानुमितिविरोधित्वं कल्पयति नतु तेन ज्ञाप्यमानस्य व्याप्त्यादिविरहस्य सद्धेतावपि तस्या-नुमितिविरोधित्वादित्यर्थः । व्याप्त्यादिविरहज्ञानद्वारा अस्य दूषकत्वमाह एकत्रेति वाकारोऽनास्थायां प्राथमिकावश्यका-नुमितिप्रतिरोधिनैव तथात्वात् परमुखनिरीक्षकत्वेन तद्विषय-स्याशामत्वायोगाच्चेति । ननु विरोधि परामर्शो यदि विप-रीतनिर्णयविरोधी कथं तर्हि सति विशेषदर्शने नयना-दिजन्मा पीतत्वादिभ्रम इत्यत आह चक्षुरादेश्चेति चस्त्वर्थः । अथ व्याप्तिपक्षधर्म्मते यदि वलं कथं तर्हि प्रत्यक्षादेः प्रति-रोधकतया कथायामुपन्यास इत्यत आह प्रत्यक्षादेरिति । अत्र हेतुमाह कथायामिति प्रत्यक्षस्य स्वरूपसत्तयैव विरो-

धकत्वात् विरोधिवाक्यमात्रस्यानुमित्यविरोधित्वात् बोध्या भावव्याप्यवत्तानिर्णयेनैव शाब्दादिबोधप्रतिरोधाच्चेति । एतच्चोपलक्षणमित्यभिप्राय एकधर्मिकाविरुद्धानेकप्रकारक ज्ञानाद्धर्मिकविरुद्धाविरुद्धनानाप्रकारकज्ञानमादिवदेकधर्मिकविरुद्धानेकप्रकारकज्ञानत्वस्य संशयस्य न अन्यतावच्छेदक तत्तद्धर्मिकतत्तत्प्रकारकज्ञानत्वप्रयोजककसमाजप्रयोज्य त्वात् समाजस्य क्वचिद्विरोधज्ञानस्यापि तत्प्रयोजकाधीनत्वात् नीलेतरघटत्वपटत्वाप्रकारकज्ञानत्वैकधर्मिकाविरुद्धानेकप्रका रकान्यज्ञानत्वादिना संशयाग्रज्ञानत्वादिना च नियतत्वमपि न अन्यतावच्छेदक तत्प्रयोजकविरहादेव तत्त्वविरहाद्यु पत्ते एवञ्च तुल्यप्रमाभ्यां विरुद्धोभयमात्रबोध्यां सायमान ज्ञानमर्थात् संशयरूप भवति अतएवात्रैव विप्रतिपत्तिजन्यमान संशयमामनन्ति कल्पनकाल्पभीयत न्यूनाधिकसमयनभाव सत्यामपि पीतत्वशुक्लत्वसत्तां सविधर्मिणि शङ्ख सति दोषविशेषे पीतस्यैवामति च शुक्लत्वस्यैव दूरस्थे च धर्मिणि असति विशेषदर्शने एतयोरेव कोट्यो सति च एकस्या एव नयनेन ग्रहात् अपर्यंसुद्धाभ्यां विरोधिसंस्काराभ्यां स्मरण मपि संशयात्मक स्यात् किं न स्यादिदि च नानुभवबाध येन गुरुणापि नियतत्वेन संस्कारजनकत्वमुपेयते भवता अथ विरोधिनी निर्णयोऽनुमितिप्रतिबन्धको विरोधित्वञ्च तज्ज्ञानवत्त्वायित्वं साध्याभावस्यैव तद्व्याप्यस्यापीति चेत् यदि वस्तुतो विरोधिनो निर्णयस्तथा कथं तर्हि पक्षतावच्छेदका-

देस्तादृशस्य निश्चये भ्रमानुमितिः अथ विरोधित्वेन तदा तदग्रहे नेह साध्यमित्यादिनिर्णयेऽप्यनुमितिप्रसङ्गः अथ विशेषदर्शनं विरोधिबुद्धिप्रतिबन्धकं कथमन्यथा तदनन्तरं न भ्रमसंशयाविति चेन्न सत्यपि शुक्लत्वादिव्याप्यदर्शने शङ्खादौ दुष्टेन नयनेन पीतत्वादेरदुष्टेन च पीतत्वादिव्याप्यवत्तानिश्चये सत्यपि शुक्लत्वादेर्ग्रहात् सति च विशेषदर्शने क्वचिदुपनीतभानानुदयात् एतः प्रमितस्य स्थाणुत्वादेः शाखादौ करादिभ्रमेणाग्रहात् तत्तत्स्थलविशेष एव तस्य प्रतिबन्धकत्वमिति । अत्राहुः अनुगतकार्य्यकारणभावानुरोधात् दोषविशेषाद्यजन्ये ज्ञाने कदाचिदनुभवे वा विशेषदर्शन विरोधि कल्प्यते न च प्रत्यक्ष एव तथा सामान्ये बाधकाभावात् बोध्याभावव्याप्यवत्तानिश्चयेन शाब्दादिधीप्रतिबन्धाच्च अथ विशेषान्तरदर्शनविरहविशिष्टमेव तत्तथा अन्यथा कोटिद्वयविशेषदर्शने संशयो न स्यादिति चेन्न भवत्येव ताव यावदप्रामाण्यं न गृह्यते अगृहीताप्रामाण्यस्यैव विशेषदर्शनस्य विरोधित्वादिति । विरुद्धस्येति साध्याभावव्याप्यस्येत्यर्थः । बाध इति हेतौ प्रकृतेऽन्यत्र वा अपक्षधर्मे च पक्षधर्म्मताबाध इति शेषो वा तथाच हेतौ व्याप्तिपक्षधर्म्मतान्यतरभङ्ग इत्यर्थः । प्रकृतेति प्रकृतसाध्ययोर्यौ हेतू तयोरित्यर्थः । संशयादिति जन्यदुःखोत्सारणरूपेष्टसाधनताज्ञानात् अन्यत्र चेष्टान्तरसाधनताज्ञानाज्ज्ञानेच्छेति भेदेन विकल्पोपन्यासः । असतीत्यादि हेतुसमीचीनत्वासमीचीनत्वसंशयजन्य-

तु व्याप्यभावस्येव साधनताज्ञानेऽपि जिज्ञासोपर्गाणित्यादि स्वयं दृष्टपतिकाले उत्पत्तिपूर्वकाले व्याप्तिपक्षधर्मताज्ञान योरुत्पादकमानियमाद्भगोर्मांगकत्वमुक्तम् दृष्टपर्यावेव वा तयोरन्यत्र यत्र च व्याप्तिपक्षधर्मतयो समुदायस्य तत्र द्वितीयपरामर्शोपस्थितिकाले तत्र प्रथमपरामर्शनाश इत्यत नित्यसत्प्रतिपक्षितत्वम् । ज्ञातव्येति सत्ता कम्बुग्रीवा दिमत्त्वादावैकैकस्य व्यभिचारादिविशिष्टोपादानम् । घटनि ष्ठेति घटनिष्ठात्यन्ताभावस्य सामान्यत पक्षत्वाय बाधा- सत्यामिद्धौ । सत्यास्य समवेतत्वादौ द्वितीयस्य पटाभावादौ व्यभिचार इत्यत आह विशेषाद्यैवेति वस्तुतो घटो नाभि धेयः कम्बुग्रीवादिमत्त्वादित्यादि व्यतिरेकिणा सत्प्रतिपक्ष सम्भवत्येव व्यापकाभावेनाप्रसिद्धस्यापि ज्ञानाभावस्य सि द्धाभ्युपगमात् प्रत्येकपदार्थप्रसिद्धौ तादृशप्रतिज्ञाद्युपपत्ते र्विशिष्टस्य वाक्यार्थत्वात् सत्प्रतिपक्षस्तु साध्याभावव्याप्यवान् साध्यवदन्यत्वव्याप्यवांश्च पक्ष पक्षनिष्ठौ साध्याभावसाध्यव द्भेदव्याप्यौ इत्येवमादि प्रत्येकमेव विभाजकस्तु प्रकृतपक्षसा ध्यवैशिष्ट्यबुद्धिविरोधित्वे सति प्रकृतपक्षसाध्यबुद्धिविरोधिप्रकृ तपक्षसाध्यवैशिष्ट्यबुद्धिविरोधिपरामर्शायकत्वं तद्घटकत्वञ्च यादृशविशिष्टविषयत्वेन परामर्शस्यानुमितिजनकत्वं तत्त त्त्व साध्याभावव्याप्यवत्पक्षादिकम् असाधारणविरोधयो रन्यतरस्य प्रतिपक्षविधया दीपत्यपक्षे प्रकृतसाधने प्रकृत साध्यव्यापकाभावप्रतियोगित्वाद्यवगाही परामर्शो बाध

अत्र सत्यन्तेन सत्प्रतिपक्षोन्नायकस्य अविरोध्यन्तेनाश्रया-सिद्ध्याद्युन्नायकस्य विरोध्यन्तेन वह्निव्याप्याभावे साध्ये वह्निव्याप्यवत्पक्षात्मकस्य बाधस्य व्युदासः संगच्छते चानेन काञ्चनमयवह्निमानित्यादौ वह्न्याद्यभावव्याप्यह्रदत्वादिमान् पक्ष इति। सत्प्रतिपक्षे च यथासिद्धान्तं पञ्चावयवादि-प्रयोगमिच्छन्ति अयं हेतुः साध्यव्यभिचारवानित्यादिवदयं पक्षः साध्याभावव्याप्यवानित्यादिकमुद्भावनं पुनरुचितं प्रतिभाति। वस्तुत इत्याद्यभ्युच्चयमात्रं विशिष्टपरा-मर्शविरोधित्वेन विशिष्टाभावस्य दोषताया दुर्वारत्वात् प्रत्येकाभावसत्त्वात्त्वापि शब्दादिना शक्यग्रहत्वात् व्यर्थविशे-षणत्वस्य चासाधकतासाधन एव सम्भाव्यत्वात् न वा तदपि तादृशाभावनिष्ठव्याप्तेर्द्धर्मान्तरेणावच्छेत्तुमशक्यत्वात् विशे-ष्यादिप्रतियोगिकत्वमात्रस्य व्यभिचारिसाधारणत्वादिति। व्यभिचारादेरिति सद्धेतौ सद्धेतुत्वेन ज्ञायमाने तदानीं सि-द्धेरप्रतिबन्धेऽपि कालान्तरगृहीतेन व्यभिचारादिना तदानी-न्तनाभासत्वं सुग्रहमिति तु ध्येयम्। तेन रूपेण तत्साधारण रूपेण। वह्न्यभावेनेति वह्न्यभावस्तु न प्रतिबन्धकः कारणीभूतो योऽभावस्तत्प्रतियोगिनएव तथात्वात् यदभावत्वेन कारणत्वं तदेव तथेत्यपि कश्चित्। परामर्शेत्यादि। ननु परामर्श-विषयाभावत्वमनाभासे आभासत्वविशेषितमपि बाधविशेषे परामर्शविरोधित्वविशेषितञ्च हेतोः साध्यासामानाधिक रण्येति प्रसक्तम् अप्रसक्तञ्च साधनाद्यभाववत्पक्षादौ पक्षादेः

साधनवदन्यस्यादौ साधनादे पक्षादिष्टत्वव्याप्यमिष्ठाभाव प्रतियोगित्वादौ अतएव यस्य यद्व्याप्यत्व परामर्शविषयस्तस्य तदभाववत्त्व तदिति सम्प्रदायानुगतं प्रयुक्त परामर्शविरोधित्वमात्र व्यभिचारितिप्रसङ्ग न च तदन्यत्वेन विशेषणीय नित्यो घटो द्रव्य प्रमेयो वा जन्मत्वादित्यादौ तद घासिद्धे । अथ पक्षतावच्छेदकरूपेण पक्षे हेतुतावच्छेदकरूपेण हेतोर्यद्विशिष्टत्वाभ साध्यतावच्छेदकविशिष्टसाध्याभावगाहितद्विरोधित्व तदिति चेन्न पक्षवृत्ति तद्विशिष्टसाध्याव्यभिचरितसामानाधिकरण्याद्यभावाप्यात् । न च विशिष्टपक्षविशिष्टसाधनवैशिष्ट्यविशिष्टसाध्यवत्तापरोधि व्याप्तिपक्षविरोधि तदन्यत्वे सति परामर्शविरोधित्व मत् विशिष्टपक्षवैशिष्ट्योपादानादप्रसमात् वह्निमान् जलह्रदत्वा दित्यादौ व्याप्तिपक्षविरोधिन्या अपि स्वरूपासिद्धेर्नासंग्रह इति वाच्य जलहृदो वह्निमान् काञ्चनमयवह्निमान् वा धूमात् काञ्चनमयधूमादेत्यादौ व्याप्तिग्रहविरोधिनस्तादृश पक्षाविरोधिनो रूपस्यासिद्धे । उच्यते (१) साधारण्य

(१) आगदीशसम्प्रदायिकः पाठः ।

अवान्तरादिसम्मतस्तु ।

साधारण्यासाधारण्यभिन्नं तज्ज्ञानस्य विषयतापरामर्शविरोधितावच्छेदकरूपमसिद्धिः । अप्रयोज्यभिचारित्वैयत्वाव वह्निसमानाधिकरणकृदत्वात्, वा पर्वतो वह्निमान् मेयत्वात् ह्रदत्वादित्यादौ

कथितासाधारण्यानुपसंहारित्वभिन्नं ज्ञानस्य विषयतया परामर्शविरोधितावच्छेदकं रूपमसिद्धिः यत्र साधारण्यादिकमप्रसिद्धं यत्र च वह्न्यव्यभिचारिमेयत्ववान् वह्निसमानाधिकरणह्रदत्ववान् वह्न्यभावव्यापकीभूताभावप्रतियोगिह्रदत्ववान् वा पर्वतो वह्निमान् मेयत्वात् ह्रदत्वादित्यादौ साधारण्यादिकमप्रसिद्धं तत्र तदन्यत्वं नोपादेयं शब्दानुगमस्याकिञ्चित्करत्वात् परामर्शे च व्याप्तिव्यतिरिक्तोऽप्युपा-

---

आश्रयासिद्धिविरहेऽपि न क्षतिः व्यसिद्धिनयस्यासार्वत्रिकत्वात् आश्रयासिद्धिलक्षणस्य चासिद्धिघटितत्वान्नातिप्रसङ्गः । प्रकृतपक्षाप्रविष्टाभावकसाधारण्यादिभिन्नं वा वक्तव्यम् । परामर्शे चान्वयव्याप्तिरूपादेया तेनानुपसंहारित्वव्युदास साध्यसाधनभेदेनासिद्धिभेदात् यत्र साधारण्यादिकमप्रसिद्धं तत्र तदन्यत्वं नोपादेयं यथा काञ्चनमयः पर्वतो ह्रदो वा वह्निमान् मेयो वा धूमात् मेयत्वादित्यादौ पर्वतान्यः पर्वतो दहनान्यदहनवान् धूमान्यधूमादित्याद्यसिद्धिसम्पादनाय हेत्वाभासलक्षणे कारीतिरनुसरणीया । तत्र विशिष्टपक्षग्रहस्य विरोधिन्यसिद्धिर्विरोधिरूपं वाश्रयासिद्धिः प्रकृतपक्षप्रकृतहेतुग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयविशिष्टग्रहविरोधितावच्छेदकं स्वरूपासिद्धि संगृह्यते चानेनानित्यं गगनं रूपवत् चाक्षुषस्पर्शाश्रयत्वादित्यादौ निस्पर्शादिकम् एवं शब्दो द्रव्य गुणान्यत्वे सति सत्त्वात् गुणान्यत्वविशिष्टसत्त्वं द्रव्यत्वव्यभिचारिगुणवृत्तित्वादित्यादावपि नाव्याप्तिः तदुभयभिन्नासिद्धिर्व्याप्यत्वासिद्धिः पक्षादिभेदेनासिद्धिभेदात् यत्राश्रयासिद्ध्यादिकमप्रसिद्धं तत्र तदन्यत्व न वक्तव्यमिति ।

देया मातो व्यतिरेकव्याप्तिविशिष्टपक्षधर्मत्वाभावाश्रयत्वासि साधारण्याद्यनिरूपितया ज्ञानस्य विषयितया परामर्शविरोधितावच्छेदकरूपं वा असिद्धिः अतएव द्रव्यत्वाव्यभिचारिगुणकर्मोभयसमवेतवान् द्रव्यत्वसमानाधिकरणगुणसमवेत कर्मासमवेतवान् वा घटो द्रव्य सत्त्वात् द्रव्यकर्मासमवेतसमवेतत्वे सत्यादौ गुणकर्मोभयसमवेतादिनिष्ठस्य द्रव्यत्वव्यभिचारित्वादे सत्तादिनिष्ठद्रव्यत्वव्यभिचारिसामान्यकसाधारण्यादितोऽनतिरिक्तत्वेऽपि न क्षतिः पर्वतान्यः पर्वतो दहनान्यदहनवान् धूमाद्यधूमादित्यादावसिद्धिमस्वादनाय एतस्याभावोक्ता रीतिरनुसर्त्तव्या तत्र ज्ञानस्य विषयतया विशिष्ट पक्षपरामर्शविरोधितावच्छेदकरूपमाश्रयासिद्धिः । विशिष्टपक्ष विशिष्टसाधनपक्षावगाहिनोर्ज्ञानयोः विषयतया तदुभय वैशिष्ट्यपक्षविरोधितावच्छेदकस्वरूपासिद्धिः। संक्षेपतः चेत्थमसिन्नगमनं रूपवत् चाक्षुषस्पर्शवत्त्वादित्यादौ गगनादेर्निस्पर्शत्वादिकम्। तदुभयभिन्नासिद्धिर्व्याप्यत्वासिद्धिः । यथा द्विभेदेनासिद्धिभेदाद्यत्वाश्रयासिद्ध्यादिकमप्रसिद्धं तत्र तद् न्यत्व न वक्तव्यमिति"। सविषयकत्वमप्रकृतसाध्यसाधनपक्ष विरोधितानवच्छेदकमप्रकृतपक्षमप्रकृतसाधनवैशिष्ट्यपक्षविरोधितावच्छेदकरूपय शून्यज्ञानस्य विषयोऽसिद्धिर्व्याप्यत्वासिद्धि साध्यपदोपादानात् पर्वत पर्वतवृत्तित्वद्रव्यवान् द्रव्यत्वादित्यादौ साध्याप्रसिद्धेर्नासत्त्व तस्याः स्वरूपासिद्धौ निवेशादनुपादेयमेव वा साध्यमित्यपि कश्चित्। साध्यत्वे

त्वप्रसिद्धिव्याप्तिविशिष्टपक्षधर्म्मतादि विरहादयश्चैतद्भेदाः । यत्तु हेतुतावच्छेदकस्य व्याप्यतानवच्छेदकत्वम् अपि व्याप्यत्वासिद्धिः नीलधूमत्वादेश्च तथात्वं समानाधिकरणं सम्भवदवच्छेदकान्तरमपेक्ष्य गुरुत्वादिति अत्रावच्छेदकत्वं यद्यनतिरिक्तवृत्तित्वं तदा तस्याप्यस्ति । अथ तादृशेन समानाधिकरणेन तादृशेन वा धर्म्मान्तरेणाघटितत्वे सति तत्त्वं तन्न सत्यन्तस्य गौरवेणानुपादेयत्वात् नापि अन्यूनानतिरिक्तवृत्तित्वम् आलोकाद्यवृत्तेर्धूमत्वादेरप्यतथात्वापातात् । अथ स्वरूपसम्बन्धविशेषः तर्हि द्रव्यं रूपादित्यादौ रूपत्वादेरपि तथात्वं न स्यात् रूपादिषु चतुर्विंशतौ सम्भवदवच्छेदकमेकं गुणत्वमपेक्ष्य रूपत्वादीनां चतुर्विंशतेः षड्विंशतेर्वा गुरुत्वात् एवं पशुमान् सास्नादिमत इत्यादौ सास्नादिमत्त्वादेरपि गोत्वादिकां जातिमपेक्ष्य उपाधेर्गुरुत्वात् हेतुतावच्छेदकविशिष्ट हेतुव्यापक साध्यसमानाधिकरणतादृशहेतोः साध्याव्यभिचरितसम्बन्धितादृशहेतोर्वा ज्ञानस्यानुमितिकारणस्याविरोधिनो निरुक्तानवच्छेदकत्वस्य दोषत्वायोगाच्च । परार्थस्थले तु दृष्टान्तस्य साध्यादिवैकल्यवत् हेतोर्व्यर्थविशेषणत्वमपि निग्रहस्थानविभाजकसूत्रस्यानुक्तसमुच्चयपरेण चकारेण समुच्चितं पृथगेव निग्रहस्थानम् ।

अतिरिक्तविषयतावादिमतेनाह पक्षेति पक्षः साध्याभाववानिति ज्ञाने पक्षनिष्ठविषयत्वस्य प्रकारः साध्याभाव इति लक्षणसमन्वयः । विवक्षितेति हेत्वादिविषयत्वेनाप्रतिबन्धक-

त्वादिति भावः । साध्याभावप्रमात्वपदे पक्षे साध्याभाव प्रमापदस्यायथार्थज्ञानाभिप्रायेण साध्याभावस्य बाधपदार्थ मतेन वा प्रहणे इदमिति पक्ष इति व्याप्तौ निश्चितायां पक्ष तत्त्वयोः साध्याभावसंशयो न दोषायेत्यर्थः । अनुमित्यु त्पादेनेति अन्ततोऽपि विरोधित्वप्रदर्शनाय अतएव व्याप व्यत्वतो विरोधित्व द्रढयति अन्यथेति । हेत्वाभासाधीन मिति न च हेत्वाभासत्वानुमित्याभासत्वयोरेकत्वे साध्य वति पक्षे सिद्धाभास जन्याया अनुमितेराभासत्वापत्ति रिष्टापत्तौ तथात्वस्येष्टत्वात् पक्षासिद्धिरित्यस्य बाधक मानमित्यादि सिद्धस्योपाध्यभ्युपगमात पक्षेरपक्ष त्वात् भ्रान्तमत्वव्याप्यत्वाच्च न च साध्याभाव इति अनुमितः पूर्वं विशिष्टव्याप्तिसिद्धा तदभावव्याप्तज्ञानादिति भवतीत्यादिति भावः । तथापीत्यादि अधिकरणत्वेनाधि करणरूपत्वेनापेक्षणीयोव्यभिचारनिश्चय । साध्याभावनि श्चयेति साध्याभावो निर्णीयते येन प्रमाणनिश्चयेन तद धीनेत्यर्थः । अभेदं तत्त्वम् । साध्याभाववान् साध्यवदन्यो वा पक्ष पक्षावृत्तिसाध्यं पक्षे साध्याभाव पक्षनिष्ठसाध्या भाववत्त्वादिक साध्यादे पक्षावृत्तित्वादिकं साध्यतत् सामा- न्यादेः पक्षान्यत्वादिकं विशिष्टसाध्ये पक्षादेर्विशेष्याभाव वत्त्वादिक यथामतं पक्षे साध्यवत्ताज्ञानस्य साक्षाद्विरोधि मत्येकमेव बाध तन्निश्चयत्व विरोधिनिश्चयत्वेन दोषविशेषा श्चान्यज्ञानमात्र एव विरोधी अतएवानन्वयनिश्चयविरहो

योग्यतेत्याचार्य्याः। विभाजकन्तु प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्यनुन्नायकत्वे प्रकृतपक्षप्रकृतसाध्यग्रहाविरोधित्वे च सति प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोधित्वं पक्षादेः साध्यासमानाधिकरणधर्म्मवत्त्वादिकमपि बाध एव साध्याभाववत्पक्षादिज्ञानप्रमात्वन्तु न बाधः तज्ज्ञानस्य पक्षादौ साध्याभावादेरनवगाहित्वे विरोधिविषयत्वाभावात् अवगाहित्वे तु तद्विषयत्वेनैव प्रतिबन्धकत्वात् प्रमात्वनिश्चयस्यान्यत्र प्रतिबन्धकत्वाकल्पनाच्च सर्व्वत्र निश्चयस्य हेतुत्वे प्रतिबन्धकत्वे च भ्रमत्वाग्रहः संशयसाधारणज्ञानमात्रस्य तथात्वे तु भ्रमत्वानिश्चयः प्रयोजकोऽन्यथाकाङ्क्षाकृतिसाध्यत्वादिनिश्चयहेतुप्रतिहेतुपरामर्शादीनां प्रमात्वनिश्चयो योग्यताव्यभिचारज्ञानादीनाञ्च प्रमात्वज्ञानं प्रयोजको भवेत् शङ्खादौ शुक्लत्वाभावभ्रमे च शुक्लत्वाद्यनुमितिर्न विना तदप्रामाण्यग्रहं नहि स्वरूपसत्यपि बाधनिश्चये शाब्दमानसादिज्ञानमुत्पद्यते। अथ लाघवेन संशयसाधारणं संसृष्टत्वज्ञानमेव शाब्दानुमित्योः कारणम् आस्ताञ्च तस्यैव विरोधितया प्रकरणसमो बाधश्च हेत्वाभासोऽसिद्धिरिव परामर्शस्य विलोपकताञ्चाप्रसिद्धसाध्यकमनुमानमिति चेन्न संशयासत्त्वसमये परामर्शोत्पादे सिद्धिसिषाधयिषे विना अनुमित्यनुत्पादप्रसङ्गात् सति विशेषदर्शने संशयायोगादिति एतेन लाघवात् प्रमात्वेन निर्णीयमानं बाधज्ञानं विरोधीति परास्तम् ।

विपरीतमेव लाघवं स्फुटतरञ्च तद्भावसाध्य तत्र हि गोत्वाद्यप्रकारक गोत्वाभावादिप्रकारक ज्ञान बाधनिश्चय तथाच गोत्वादिमद्विशेष्यकगोत्वाद्यभावप्रकारकत्वप्रज्ञाना भावोऽप्रमात्वग्रहविरह बाधग्रहय पक्षे गोत्वाद्यप्रकारक ज्ञान तस्य च गोत्वादिमद्विशेष्यकगोत्वाद्यभावप्रकारकत्वा द्यप्रकारकं गोत्वाद्यभाववद्विशेष्यकगोत्वाद्यभावप्रकारकत्वप्र कारकज्ञानं प्रमात्वनिश्चय इत्युक्तप्रायश्च तत्तत्कार्य्यं प्रति प्रतिबन्धकानां कारणानाञ्च प्रमाणेन निर्णीयमानतया तथात्वापत्तिरिति । न च सति विशेषदर्शने विपरीतनिश्च योऽकिञ्चित्कर तत्सत्त्वेऽपि विशेषदर्शनेन प्रत्यक्षोत्पादादिति वाच्य विशेषदर्शनेन तद्भागामन्तर्भाव प्रत्यक्षोदयात् परैरपि क्वचित् प्रत्यक्षविशेष एव विपरीतनिश्चयविशेषस्यैव तथात्वो पगमाच्च । नहि ग्राम्यादिदोषेऽपि विशेषादर्शनविशिष्टत्वेन स विरोधी गौरवात् मानाभावाच्च । न वा चाक्षुषादिप्र त्यक्षे मानसादिविपरीतनिश्चयो विरोधी उपयुज्यते च क्वचि द्विशेषदर्शनमप्रामाण्यग्राहकत्वेन बाधवुद्धे । नचैवं बाधा वतारदशायां पक्षे हेतोरपक्षेऽप्रामाण्यलक्षणासिद्धि' यद्वि च व्यभिचारधीरेवेति वाच्य बाधग्रहपरामर्शयोर्भेदात् अभे देऽपि पक्ष' साध्यव्याप्यहेतुमान् साध्याभाववांश्च इति ग्रहस्य परस्परोपरागानवगाहिनोर्व्यभिचाराविषयत्वात् एकत्र व्य भिचाराव्यभिचारयोरेकनिश्चयागोचरत्वात् पूर्णे च कारणे साक्षादनुमित्यविरोधिनो व्यभिचारज्ञानादेरकिञ्चित्करत्वात्

उक्तस्य साध्यादेः पक्षाद्यवृत्तित्वादिकमपि बाध' न च तद्ग्र-
हेऽपि व्यभिचारबुद्धिरावश्यकी । यत्त्वनिश्चितप्रामाण्यस्य ज्ञा
नस्यार्थनिश्चयरूपत्वे प्रामाण्यनिश्चयवैयर्थ्यमतिप्रसङ्गश्च तथाच
पक्षे साध्याभावज्ञानस्य निश्चयत्वसम्पत्तयेऽपेक्षणीयस्तत्प्र-
मात्वनिश्चय एव प्रतिबन्धकः प्राथमिकत्वादुपजीव्यत्वाच्च
न तु चरमभावि तदधीनं व्यभिचारज्ञानमिति तत्तुच्छं
तस्य प्रतिबन्धकत्वेनाक्लृप्तत्वादगृहीताप्रामाण्यकत्वेनैव निश्च-
यस्य स्वकार्यकारित्वात् अन्यथानवस्थानात् अप्रामाण्यशङ्का-
निवर्त्तकत्वेन च क्वचित् प्रामाण्यग्रहोपयोगात् संशयसाधा-
रणस्य व्यभिचारज्ञानस्य विरोधित्वाच्चेति यत्तूपनीतकाञ्चन-
मयत्वविशिष्टवह्न्यनुमितिविरोधी व्यधिकरणकाञ्चनमयत्वाव-
च्छिन्नप्रतियोगिताकवह्न्यभावो बाधः । न च विशिष्टसाध्या-
प्रसिद्धा कथं तद्विशिष्टानुमितिर्विशिष्ये विशेषणमित्यादि
न्यायेन तत्सम्भवात् शुद्धसाध्यव्याप्तिग्रहादेव चोपनयसत्त्वा
देणाप्रसिद्धविशिष्टानुमितिसम्भवात् तदभावो बाधोऽस्तु तेन
रूपेण व्याप्तेरनुपादानाच्च तथाव्यभिचारो न दोषाय
उपनीतसकलभाने चाप्रामाण्यं प्रत्यक्षेऽपि तुल्यं अनुमित्यंशे
प्रामाणिकस्याप्य न वादिविजयप्रयोजकमिति तन्न प्रत्यक्षे
ऽपि विना सन्निकर्षमभानादुपनीतभानस्य प्रत्यभिज्ञादावानु-
भविकत्वादुपनयोऽपि सन्निकर्षः कल्पते अनुमितौ च
तदप्रसिद्धा न सामग्रीकल्पना । न तन्नु वह्निव्याप्य-
धूमपरामर्शादुपनीतकाञ्चनानुमितिरनुभविकी कथमपि

अन्यथा पर्वते वह्निसन्देहदशायां निश्चितवह्निव्यभिचारकेण अभिधेयत्वादिना पर्वतादौ प्रमेयत्वादिकमनुमितोऽपि पक्षधर्मिणो वह्निमत्त्वनिश्चयाग्निष्कम्प्यप्रसक्त्यापत्तेरिति ।

पक्षधर्मताबलेनेत्यादि ननु विशेषतो व्याप्त्यग्रहात् तथासिद्धिः सम्भावना सामान्यतः सिद्धौ न विशेषतो बाधो विरोधि भिन्नप्रकारकत्वात् न च समानविषयत्वमेव विरोधित्वे तन्त्रं पृथिव्यादिरूपबाधग्रहेऽपि वायुरूपवानयमिति संशयात् रूपवानित्यनुमितेश्च न चारूपमेव रूपत्वेन शङ्कितमारोपितं वा तद्विषयः तादृशसंशयादाविरहेऽपि तयोरनुभविकत्वात् दोषवशाच्छ्वेतं द्रव्यमिति भ्रमेऽपि इदं पीतं शङ्खः इति प्रत्ययात् घटपटौ न स्तः दण्डी चैत्रो नास्तीति ग्रहेऽपि घटोऽस्ति चैत्रोऽस्तीत्यवगमात् सन्निकृष्टपरामर्शादाधितविशेषभानप्रसङ्गश्च विशेषबाधावताराणवतारयोः समानं समानसमाधानञ्च ।

अत्र वदन्ति व्यापकतानवच्छेदकमपि रूपं लाघवज्ञानादि सहकारिवशादनुमितौ प्रकारीभवति यथा जीवनमरणान्यतरप्रतियोगी प्राणित्वादित्यत्र जीवनप्रतियोगित्वम् अन्यथा जीविते सति गृहासत्त्वस्य कैशोरसिद्धया बहिःसत्त्वानुमानायोगात् एवं क्षित्यादिकर्तुरेकत्वमपि अन्यथा एकोऽनेको वा क्षित्यादिकर्त्तेति सन्देहप्रसङ्गादनुमितेश्च तादृप्येण तत्त्वर्थाविषयकत्वे तथाविधानुव्यवसायविरहात् सति बाधप्रतिसन्धाने तत्त्वर्थपरिच्छेदकत्वमनुमानस्येत्यपि न सिध्येत् इत्यत्र विशेषतो बाधमानानुमितिं विरुणद्धि बाध प्रमिति

उक्तस्य साध्यादेः पक्षावृत्तित्वादिकमपि बाधः न च तद्ग्र-हेऽपि व्यभिचारबुद्धिरावश्यकी । यत्त्वनिश्चितप्रामाण्यस्य ज्ञा-नस्यार्थनिश्चयरूपत्वे प्रामाण्यनिश्चयवैयर्थ्यमतिप्रसङ्गश्च तथाच पक्षे साध्याभावज्ञानस्य निश्चयत्वसम्पत्तयेऽपेक्षणीयस्तत्प्र-मात्वनिश्चय एव प्रतिबन्धकः प्राथमिकत्वादुपजीव्यत्वाच्च न तु चरमभावि तदधीनं व्यभिचारज्ञानमिति तत्तुच्छं तस्य प्रतिबन्धकत्वेनाक्लृप्तत्वादगृहीताप्रामाण्यकत्वे नैव निश्च-यस्य स्वकार्य्यकारित्वात् अन्यथानवस्थानात् अप्रामाण्यशङ्का-निवर्त्तकत्वेन च क्वचित् प्रामाण्यग्रहोपयोगात् संशयसाधा-रणस्य व्यभिचारज्ञानस्य विरोधित्वाच्चेति यत्तूपनीतकाञ्चन-मयत्वविशिष्टवह्न्यनुमितिविरोधी व्यधिकरणकाञ्चनमयत्वाव-च्छिन्नप्रतियोगिताकीवह्न्यभावो बाधः । न च विशिष्टसाध्या-प्रसिद्धा कथं तद्विशिष्टानुमितिर्विशिष्टे विशेषणमित्यादि-न्यायेन तत्सम्भवात् शुद्धसाध्यव्याप्तिग्रहादेव चोपनयसहका-रेणाप्रसिद्धविशिष्टानुमितिसम्भवात् तदभावो बाधोऽस्तु तेन रूपेण व्याप्तेरनुपादानाच्च तथाव्यभिचारो न दोषाय उपनीतसकलभाने चाप्रामाण्यं प्रत्यक्षेऽपि तुल्यं अनुद्देश्यांशे चानुमितेरप्रामाण्यं न वादिविजयप्रयोजकमिति तन्न प्रत्यक्षे हि विना सन्निकर्षमभानादुपनीतभानस्य प्रत्यभिज्ञादावानु-भविकत्वादुपनयोऽपि सन्निकर्षः कल्प्यते अनुमितौ च फलासिद्धा न सामग्र्यन्तरकल्पना । न खलु वह्निव्याप्य-धूमपरमर्शादुपनीतरासभानुमितिरानुभविकी कस्यापि

अन्यथा पर्वते वह्निसन्देहवतो निश्चितवह्निव्यभिचारत्वेन अभिधेयत्वादिना पर्वतादौ प्रमेयत्वादिकमनुमितोऽपि पक्षधर्मिणो वह्निमत्त्वनिश्चयान्निष्कम्पप्रवृत्त्यापत्तेरिति ।

पक्षधर्मताबलेनेत्यादि ननु विशेषतो व्याप्त्यपक्षधर्मतासिद्धि सम्भावना सामान्यतः सिद्धौ न विशेषतो बाधो विरोधि भिन्नप्रकारकत्वात् न च समानविषयत्वमेव विरोधित्वं तत्र पृथिव्यादिरूपबाधत्वेऽपि वायुरूपवानेवेति संशयात् रूपवानित्यनुमितेश्च न वायुरूपमेव रूपस्येन प्रसिद्धमारोपितं वा तद्विषय तादृशशब्दाविरहेऽपि तयोरानुभविकत्वात् दोषवशाच्चैव श्वेतं द्रव्यमिति भ्रमेऽपि [illegible] पीतं शङ्ख इति प्रत्ययाद् घटपटौ न स्तः दण्डी चैत्रो नास्तीति ज्ञानेऽपि घटोऽस्ति चैत्रोऽस्तीत्यवगमात् अभिन्नपरामर्शादाहितविशेषभानप्रसङ्गाच्च विशेषबाधावतारानवतारयोः समान समानसाधनत्वं । अत्र वदन्ति व्यापकतावच्छेदकमपि [illegible] लाघवज्ञानादि सहकारिवशादनुमितौ प्रकारीभवति यथा जीवनमरणान्यतरप्रतियोगी प्राणित्वादिरयं जीवनप्रतियोगित्वम् अन्यथा जीवित्वे सति गृहासत्त्वस्य हेतोरसिद्ध्या यदि सत्तानुमानायोगात् एवं क्षित्यादिकस्य ऐक्यमपि अन्यथा एकोऽनेको वा क्षित्यादिकर्त्तेति सन्देहप्रसङ्गादनुमितेश्च तादृप्येण सम्भवर्यीविषयकत्वे तथाविधानुव्यवसायविरहात् सति साध्यवत्तासम्भावने सम्बन्धपरिच्छेदकत्वमनुमानस्येत्यपि न सिध्येत् इत्यत्र विशेषतो जायमानानुमिति विरुणद्धि बाध प्रमिति

बाधः पृथक् सल्लिङ्गपरामर्शात् कथं भ्रान्तानुमितिर्जायतां न जायेत वा कथं यथार्थेति चेत् बाधानवतारे बाधितार्थ-लाघवज्ञानाद्दोषादेव तथा सामान्यतो दृष्टात्तदितरप्रसिद्धा-शेषविशेषबाधसहकृतात् शिष्यमाणप्रसिद्धकारिकानुमिति-र्जायते यथा भोजनसाध्यकपीनत्वाद्दिवासन्ध्याभोजनबाधे रात्रिभोजनप्रकारिका एवं द्रव्यवृत्तित्वसाध्यिका गुणत्वादि-च्छायां दिगन्तद्रव्यवृत्तित्वबाधे प्रसिद्धमनोवृत्तित्वानुमिति जायमाना मनो वृत्तित्वाभावप्रमया बाध्यत इति विशेषबाधो दोषः किन्तु साध्ये त्यादिकमापातत. वस्तुतस्तु प्रतियोग्य-समानाधिकरणसम्बन्धविशेषावच्छिन्नप्रतियोगिताकसाध्या-भाववद्गामित्व व्यभिचारः स्वप्रागभावेनेत्यादिकं स्पष्टत्वेनोक्त तत्र तदानीं तदत्यन्ताभावस्यापि व्युत्पादितत्वात् अतएवो-त्पत्तिकालावच्छिन्ने घटे पृथिवीत्वादिना रूपादिसाधने बाधो निराबाधं पदमादधाति एवं साध्यवत्तानवच्छेदक-देशावच्छिन्नस्य पक्षत्वेऽपि बाधो बोध्यः ।

अथ पक्षतावच्छेदकावच्छेदेन साध्यसिद्धौ तदवच्छेदेन हेतुमत्ताज्ञानं प्रयोजकमन्यथा गृहीतभागासिद्धेर्घटत्वादे-रपि पृथिवीत्वाद्यवच्छेदेन रूपादिसिद्धिप्रसङ्गात् न च शिख-राद्यवच्छेदेन धूमादिसत्त्वमिति चेन्न अवच्छेदकत्वयोर्वस्तुनो-र्भेदात् शाब्दसामान्यस्याकिञ्चित्करत्वात् अवच्छिन्नावृत्ते-रपि च हेतोस्तत्त्वेन गृहीताज्जायमानामनुमितिं विरुणद्धि बाधप्रमा सङ्करेऽपि वस्तुनोर्ज्ञानासङ्करात् सुखाद्यनवच्छेद-

१२ ३ १ २
मदेषु सर्वधा असि ॥ २ ॥

अथ द्वितीया। हे सोम! त्वं विप्रः विविधं प्रीणयिता विप्रसदृशो वा त्वञ्च कविः मेधावी अतस्त्वम् अंधसः अन्नात् जातम् मधु मधुरस प्रयच्छसीति शेषः ॥ २ ॥

हे सोम! (त्वं विप्रः) तू विशेष तृप्त करने वाला है (त्वं कविः) तू बुद्धिवर्धक है इस कारण तू (अंधसः जातं मधु प्र) अन्नसे उत्पन्न हुए मधुररसको देता है (मदेषु सर्वधा असि) मादकोंमें सबका धारक है ॥ २ ॥

१ २र ३ १ २ ३ १ २ ३ १ २
त्वे विश्वे सजोषसो देवासः पीतिमाशत।
१२ ३ १ २
मदेषु सर्वधा असि ॥ ३ ॥

अथ तृतीया। हे सोम! त्वे त्वयि पीतिं पानं विश्वे देवासः सर्वे देवाः सजोषसः समानप्रीतयः सन्तः आशत प्राप्नुवन् ॥ ३ ॥

हे सोम (विश्वे देवासः) सकल देवता (सजोषसः) समान प्रीतिवाले होकर (त्वे पीतिम्) तेरे पानको (आशत) प्राप्त हुए (मदेषु सर्वधा असि) तू मादकोंमें सबका धारण या सकल मनोरथोंका दाता है ॥ ३ ॥

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २र
स सुन्वे यो वसूनां यो रायामानेता य इडानाम्।
२ ३ १ २ ३ २
सोमो यः सुक्षितीनाम् ॥ १ ॥

ऋ० ऋणवः। छ० गायत्री। दे० सोमः। ससुन्वे-इति-प्रगाथात्मकं द्वितीयम् सूक्तम्, तत्र, प्रथमा। सः सोमः सुन्वे अभिषुये ऋत्विग्भिः यः सोमः वसूनाम् धनानाम् आनेता यश्च रायाम् रान्ति प्रयच्छन्ति क्षीरादिकमिति रायो गावः तेषमानेता यश्च इडानाम् अन्नानाञ्च, यश्च सोमः सुक्षितीनाम् सुनिवासानाम् शोभन—मनुष्य-युक्ताना गृहाणाम् आनेता विद्यते, सोऽभिषुतोऽभूदिति ॥ १ ॥

(यः सोमः) जो सोम (वसूनां आनेता) धनोंका लाने वाला है (यः रायाम्) जो दूध वाली गौओंका लाने वाला है (यः इडानाम्) जो अन्नोंका लाने वाला है (यः सुक्षितीनाम्) जो सुन्दर पुत्र भृत्यादि

युक्त स्थानोंको देने वाला है ( सः सुन्वे ) वह सोम ऋत्विजोंके द्वारा सुसिद्ध किया गया ॥ १ ॥

१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३
यस्य त इन्द्रः पिबाद्यस्य मरुतो यस्य वार्यमणा
१ २ १ २र ३ १ २र ३ १ २ ३ २ ३
भगः । आ येन मित्रावरुणा करामह एन्द्र-
१ २ ३ २
मवसे महे ॥ २ ॥

अथ द्वितीया । हे सोम ! यस्य प्रसिद्धस्य ते तव रसम् इंद्रः पिबात् पिबति पा पाने ( भ्वा० प० ) लेट्यडागमः यस्य यञ्च सोमं मरुतः पिबन्ति, वा अपि च अर्य्यमणा एतन्नामकेन देवेन सह भगः देवः यस्य यं सोमं पिबति, येन सोमेन मित्रावरुणा मित्रावरुणौ वयम् आ करामहे अभिमुखीकुर्महे । तथा महे महते अवसे रक्षणाय येन च सोमेन इंद्रम् अभिमुखीकुर्महे, तं त्वामभिषुणोमीत्यर्थः ॥ २ ॥

हे सोम ! ( यस्य ते इंद्रः पिबात् ) जिस तेरे रसको इंद्र पीता है ( यस्य मरुतः ) जिसको मरुत् पीते हैं ( वा ) और ( अर्यमणा भगः यस्य ) अर्यमाके साथ भग देवता जिसको पीता है ( येन महे अवसे मित्रावरुणा आ, इंद्र आ ) जिस सोमके द्वारा बड़ी भारी रक्षाके लिए मित्रावरुण देवताको अभिमुख करते है और इंद्र देवताको अभिमुख करते हैं ॥ २ ॥

१ २ ३ १ २ ३ २ ३ १ २
तं वः सखायो मदाय पुनानमभि गायत ।
२ ३ २ ३ १ २ ३ १ २
शिशुं न हव्यैः स्वदयन्त गूर्त्तिभिः ॥ १ ॥

ऋ० पर्वतनारदौ । छ० उष्णिक् । दे० सोमः । तं व इति तृचात्मकं तृतीयम् सूक्तम्, तत्र प्रथमा हे सखायः ! ऋत्विजः ! वः यूयम् मदाय देवानाम् मदार्थं पुनानम् पूयमानम् तं सोमम् अभि गायत अभिष्टुत । तम् इमं सोमं शिशुम् न शिशुमिव अलङ्कारैः क्षीरादिभिश्च स्वादूकुर्वन्ति, तद्वत् हव्यैः हविर्भिः मिश्रणैः गूर्तिभिः स्तुतिभिश्च स्वदयन्त स्वादूकुर्वन्ति ॥ २ ॥

(सखायः) हे मित्र ऋत्विजो ! (वः मदाय पुनानं तं अभि गायत) तुम देवताओंके मदके लिए पूयमान सोमकी स्तुति करो (शिशुम् न)

जैसे बालकको आभूषणोंसे और दुग्ध आदि पिलानेसे सुन्दर करते हैं वैसे ही सोमको ( हव्यैः गूर्तिभिः स्वदयत ) हवि और स्तुतियोंसे स्वादयुक्त करो ॥ १ ॥

२ ३ १ २ ३२ ३ १ २ ३ १ २
सं वत्स इव मातृभिरिन्दुर्हिन्वानो अज्यते ।
३ १ २र ३ २ ३ १ २
देवावीर्मदो मतिभि परिष्कृत ॥ २ ॥

अथ द्वितीया । हिन्वानः प्रेर्यमाण इन्दु सोमः वसतीवरीभिः समज्यते सम्यक सिक्तो भवति । तत्र दृष्टान्त—वत्स इव वत्सो यथा मातृभि गोभिः समक्तो भवति, तद्वत् । कीदृशः देवावीः देवानां रक्षकः, मदः मदकरः मतिभि स्तुतिभिः परिष्कृतः अलङ्कृतः भूषणार्थे सम्प युर्वेभ्यः ( ६, १, १३७ )—इति सुडागमः, परिनिविभ्यः (८, ३, ७०) इति सुटः षत्वम् ॥ २ ॥

( देवावीः मद मतिभिः परिष्कृतः हिन्वानः इन्दु समज्यते ) देवताओंका रक्षक आनन्ददायक और स्तुतियोंसे शोभायमान प्रेरणा कियाजाता हुआ सोम वसतीवरी जलोंसे भले प्रकार सींचाजाता है ( मातृभि वत्सः इव ) जैसे कि—बछड़ा माता गौओंके द्वारा प्रेमसे सींचा जाता है ॥ २ ॥

३ १ २र ३ १ २ ३ १ २र ३ १ २
अय दक्षाय साधनोऽयथँ शर्धाय वीतये ।
३ १ ३ २ ३ १ २ ३ २
अय देवेभ्यो मधुमत्तरः सुत ॥ ३ ॥

अथ तृतीया । अयं सोमः दक्षाय बलाय वर्धनाय वा साधनः साधयिता भवति, तथा अयं सोमः शर्धाय बलाय वीतये देवाना भक्षणार्थं च भवति, सुतः अभिषुत, अयं सोम देवेभ्य इन्द्रादिभ्यः मधुमत्तरः अतिशयेन माधुर्ययुक्तो भवति अत्यन्तं मदकरो भवतीति यावत्

( अय दक्षाय साधनः ) यह सोम बल बढ़ानेके लिये साधन है ( अय शर्धाय वीतये ) यह सोम बलप्राप्ति और देवताओंके भक्षण के लिये है ( अयं सुतः देवेभ्यः मधुमत्तर ) यह सोम अभिषव किया हुआ इन्द्रादि देवताओंके लिये परम मधुरतायुक्त होता है ॥ ३ ॥

१ २ ३ १ २ ३ १ २ ३ १ २
सोमा पवन्त इन्दवोऽस्मभ्य गातुवित्तमा ।

३ २ ३ १ २ ३ १ २ ३क २र ३ १ २
मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥ १ ॥

ऋ०मनुः । छ०अनुष्टुप् । दे० सोमः । सोमाः पवन्त इति–तृचात्मकं चतुर्थं सूक्तम् तत्र प्रथमा । गातुवित्तमाः अतिशयेन मार्गस्य लम्भकाः इन्दवः दीप्ताः सोमाः पवन्ते अस्मभ्यम् अस्मदर्थं क्षरन्ति आगच्छन्ति वा । कीदृशाः ? मित्राः देवानां सखिभूताः स्वानाः सुवानाः अभिषूयमाणाः अरेपसः पाप-रहिताः अतएव स्वाध्यः शोभन–ध्यानाः स्वर्विदः सर्वज्ञाः स्वर्गप्रापका वा ॥ १ ॥

( मित्राः ) देवताओंके मित्ररूप ( स्वानाः ) संस्कार कियेजाते हुए ( अरेपसः स्वाध्यः ) पापरहित और ध्यान करनेमें सुन्दर ( स्वर्विदः गातुवित्तमाः इन्दवः सोमाः ) सर्वज्ञ वा स्वर्गदायक मार्गके प्राप्त कराने वाले और दीप्तियुक्त सोम ( अस्मभ्यम् पवन्ते ) हमारे अर्थ कलशमें प्राप्त होते हैं ॥ १ ॥

२ ३ १ २ ३ २ ३ १ २ ३ १ २
ते पूतासो विपश्चितः सोमासो दध्याशिरः ।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
सूरासो न दर्शतासो जिगत्नवो ध्रुवा घृते ॥२॥

अथ द्वितीया । पूताः पवित्रेण परिपूताः विपश्चितः मेधाविनः दध्याशिरः दध्ने मिश्रणाः घृते वसतीवर्य्याख्ये उदके जिगत्नवः गमन--शीलाः ध्रुवाः तत्र स्थैर्य्येण वर्त्तमानाः ते सोमासः सोमाः सूरासः न सूर्य्या इव दर्शतासः पात्रेषु सर्वैर्दर्शनीया भवन्ति ॥ ३ ॥

(पूतासः विपश्चितः) पवित्र और बुद्धिको बढ़ानेवाले (दध्याशिरः घृते जिगत्नवः) दधिसे मिले और वसतीवरी जलमें जानेवाले (ध्रुवाः ते सोमासः ) तिस पात्रमें स्थिर रहनेवाले वह सोम ( सूरासः न ) सूर्योंकी समान ( दर्शतासः ) पात्रोंमें सबके दर्शन योग्य हैं ॥ २ ॥

३ २ ३ १ २ ३ १ २ ३ १ २र ३ २
सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि ।
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
इषमस्मभ्यमभितः समस्वरन्वसुविदः ॥ ३ ॥

अथ तृतीया । गोः अनुडुहः अधित्वचि अधिषवणचर्मणि चिताना ज्ञायमाना अद्रिभिः ग्रावभिः विविधैः सुष्वाणासः स्तूयमानाः वसुविदः

वसूनो लम्भका एते सोमाः अस्मभ्यम् इयम् अन्नम् अभितः समस्य रन् सम्यक् शम्यन्ति प्रयच्छन्तीति यावत् ॥ ३ ॥

(गोः अधि त्वचि) गौकी चर्मरूप दूधमें (चिताना:) दीखने वाले (विप्रद्भिः सुष्वाणासः) अनेकों प्रकारके पाषाणोंसे कूटेजाते हुए (वसुविदः) धन देनेवाले यह सोम (अस्मभ्यं अभितः इषं सम स्वरन्) हमें चारों ओरसे अन्न देते हैं ॥ ३ ॥

३ २ ३१ २ ३ १ २८ ३ १ २ ३

अया पवा पवस्वैना वसूनि माँश्चत्व इन्दो

१ २ ३ १ २ १ २ ३ २ ३ २ ३ २ ३ १

सरासि प्रधन्व । ब्रध्नश्चिद्यस्य वातो न जूतिं

२३१२ ३१२३ १२

पुरुमेधाश्चितकवे नर धात् ॥ १ ॥

ऋ० कुत्सः । छ० त्रिष्टुप् । दे० सोमः । अयापवेति—एवात्मकं पञ्चम सूक्तम् तत्र प्रथमा । हे सोम ! अया अनया पवा पवमानया धारया एना एतानि वसूनि धनानि पवस्व क्षर । पवा—पूञ् पवने (क्र्या० प०) अन्येभ्योऽपि दृश्यन्ते (३ २ १७८)-इति विच् प्रत्ययः आर्द्धधातुक-लक्षणो गुणः सावेकाच (६, १, १६८)—इति तृतीयाया उदात्तत्वम् । तथा हे इन्दो ! त्वं माम्श्चत्वे मन्यमानाना चासके सरसि सरके वसतीर्ष्याख्ये प्रधन्व प्रगच्छ । यस्य सोमस्य शोधने सति ब्रध्नश्चित् सर्वेषां मूलभूतो वा आदित्योऽपि वातः न वायुरिव जूतिं वेगं प्राप्तः सन् किञ्च पुरुमेधश्चित् बहुविध-मज्ञ इन्द्रोऽपि तकवे तकतिर्गति—कर्मसु पठितः (निघ०२, १४, ६९) अस्मादौणादिक उन् प्रत्ययः । सोमं गच्छते मह्यं नर कर्मनेतारं पुत्र धात् ददातु प्रयच्छतु स त्वं प्रधन्वेसि पूर्वेण सम्बन्धः। यस्य अत्र-इति पाठौ जूति-जतः इति धात् दात्—इति च ॥ १ ॥

हे सोम ! (अया पवा) इस पवित्र करने वाली धारा से (एना व सूनि) इन धनों को (पवस्व) बरसा (इन्दोमाम्श्चत्वे सरसि प्रधन्व) हे सोम ! मतिप्रा करने वालोंको प्राप्त होनेवाला वसतीवरी जलमें पहुँच (यस्य) जिस सोमका शोधन होने पर (ब्रध्नश्चित्) सबका मूलभूत आदित्य भी (वातः न) वायुकी समान (जूतिम्) वेगको प्राप्त हुआ (पुरुमेधश्चित्) अधिक बुद्धिवाला इन्द्र भी (तकवे मह्यम्) सोमको प्राप्त होने वाले मुझे (नर धात्) यज्ञादि कर्म करने वाला पुत्र देय ॥ १ ॥

१२ २ ३१ २३१ २३१ २ ३ २ ३१२
उत न एना पवया पवस्वाधि श्रुते श्रवाय्यस्य
३२ ३२ ३१२ ३२ २र ३२उ
तीर्थे। षष्टिꣳसहस्रा नैगुतो वसूनि वृत्तं न
३१ २ ३१२
पक्वं धूनवद्रणाय ॥ २ ॥

अथ द्वितीया। हे सोम! उत अपि च श्रवाय्यस्य सर्वैः श्रवणीयस्य तव श्रुते प्रसिद्धे यद्वा, षष्ठ्यर्थे चतुर्थी श्रुतशब्दस्य तीर्थे स्थाने नः अस्माकं स्वभूते यज्ञे एना अनया पवया पूयमानया धारया अधिकं पवस्व क्षर। नैगुतः नीचीनं गन्तवे न शब्दायन्त इति निगुतः शत्रवः तेषां हन्तृत्वेन सम्बन्धी सोऽयं सोमः षष्टि षष्टिसंख्याकानि सहस्रा सहस्राणि वसूनि धनानि रणाय शत्रूणां जयार्थे धनवत् अस्मानकम्पयत् प्रायच्छदिति यावत्। कथमिव? वृक्षं न पक्व-फलं वृक्षं यथा कम्पयति फलार्थी, तद्वत्॥ २ ॥

हे सोम ( उत ) और ( श्रवाय्यस्य तीर्थे ) सबके सुननेयोग्य तेरे स्थान ( नः श्रुते ) हमारे प्रसिद्ध यज्ञमें ( एना पवया ) इस पवित्र धारासे ( पवस्व ) बरस ( नैगुतः ) सोम (षष्टि सहस्रा वसूनि ) साठ सहस्र धनोंको ( रणाय ) शत्रुओंके जीतनेके लिये ( धूनवत् ) हमें देताहुआ ( वृक्षं न पक्वम् ) जैसे पक्के फलों वाला वृक्ष फलार्थीको फल देता है॥ २ ॥

२३१ २३ २३ १२ ३१ २र ३
महीमे अस्य वृष नाम शूषे माꣳश्चत्वे वा
१२ ३ १२ १२ ३१२ ३२३
पृशने वा वधत्रे। अस्वापयन्निगुतः स्नेहय-
२ ३२३ २३१२ ३२
च्चापमित्राꣳ अपाचितो अचेतः॥ ३ ॥

अथ तृतीया। मही महते प्रभूते वृषनाम सुपां सुलुगिति (७,१,३९) सुपो लुक् वृषनामनी वर्षण—नमने, शराणां वर्षणं, शत्रूणां नमनम्, इमे एते द्वे कर्मणी अस्य सोमस्य शूषे सुखकरे भवतः ये च कर्मणी मांश्चत्वे अश्वनामैतत् ( निघ० १, १४, १८ ) अश्वैः क्रियमाणे युद्धे तत्साध्यत्वाद् युद्धमिह गृह्यते वा अपि वा पृशने स्पर्शनसाध्ये बाहु-

युद्धे वधत्रे शत्रूणां हिंसन-शीले भवतः । सोऽयं निगुतः नीचैः शम्या यमानान् शत्रून् अस्वापयत् असूषुपत् अवधीदित्यर्थः । किञ्च स्नेहयत् प्राद्रवयत् समामाच्छत्रून् । अथ प्रत्यक्षः । हे सोम ! स त्वम् अमित्रान् शत्रून् अपचित अपगमय । तथा च अपाचितः अग्निचयनमकुर्वतः मा॰स्त्विकादच्च इतः अस्मच्छकाशात् अपचित अपागमय अञ्चतिर्गतिकर्मा ( स्वा॰ प॰ ) ॥ ३ ॥

(मही) बहुत (सूपनाम) वाणोंका बरसाना और शत्रुओंको नमाना ( इमे अस्य शूरे ) यह दोनों कर्म इस सोमके सुखदायक होते हैं । जो कर्म ( मादचाये ) घोड़ोंके द्वारा होने वाले युद्धमें (वा वृहतें) या बाहु युद्धमें ( वा वधत्रे ) अथवा शत्रुनाशन युद्धमें ( निगुतः अस्वापयन् ) शत्रुओंको मारता हुआ ( स्नेहयत् ) युद्धके शत्रुओंको भगाता हुआ । हे सोम (अमित्रान् अपचित ) शत्रुओंको दूर कर ( अपाचितः इतः ) अग्निहोत्र न करने वालोंको हमारे पाससे अलग कर ॥ ३ ॥

२ ३ २ ३ १ २ ३२ ३ २ ३ १ १ ३क २र

## अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्य १

ऋ॰ बन्धुः । छ॰ द्विपदा—त्रिष्टुप् । दे॰ अग्निः । अथ सप्तम-खंडे प्रथमतृचे, प्रथमा । हे अग्ने ! वरूथ्य वरणीयः सम्भजनीयः । यद्वा वरूथैः परिधिभिर्वृतः त्वं नः अस्माकम् अन्तमः अन्तिकतमः भुवः भव । उत अपि च त्राता रक्षकः शिवः सुखकरश्च भव भुवः-भव—इति पाठौ ॥ १ ॥

( अग्ने ) हे अग्निदेव ! ( वरूथ्यः ) भजनेयोग्य ( त्वम ) तू ( नः अन्तमः ) हमारे अत्यन्त समीप ( उत ) और (त्राता) रक्षक ( शिवः ) सुखकारी ( भव ) हो ॥ १ ॥

१२३ १ २र ३ १ २ ३ १ २ ३ १ २

## वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिं दाः

अथ द्वितीया । वसुः वासकः अग्निः सर्वेषामग्रणीः वसुश्रवाः व्याप्तान्नस्त्वं अच्छ आभिमुख्येन नक्षि अस्मान् व्याप्नुहि । द्युमत्तमः अतिशयेन दीप्तिमान् त्वं रयिं पश्वादिलक्षणं धन दाः अस्मभ्य देहि ॥ द्युमत्तम —द्युमत्तमम्-इति पाठौ ॥ २ ॥

( वसुः ) व्यापक ( वसुश्रवाः ) व्यापक अन्नवाला ( अग्निः ) सब का अग्रणी अग्नि तू ( अच्छ नक्षि ) हमारे अभिमुख होकर व्याप्त हो ( द्युमत्तमः रयिं दाः ) अत्यन्त दीप्तिमान् तू हमें धन दे ॥ २ ॥

१ २ ३ १ २-३ १ २ ३ १ २
तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥

अथ तृतीया हे शोचिष्ठ अतिशयेन शोचिष्मन् ! दीदिवः स्वतेजोभिर्दीप्तश्च्ने ! तं त्वां सुम्नाय सुखाय सुम्नमिति सुखनामैतत् (निघ० ६, ३, १७ ) तदर्थं सखिभ्यः समानख्यातिभ्यः पुत्रेभ्यः सुखार्थञ्च नूनम् ईमहे याचामहे ।

(शोचिष्ठ दीदिवः) हे अत्यन्त कान्तिमान् अपने तेजोंसे दीप्तअग्निदेव ! (तं त्वा सुम्नाय सखिभ्यः) ऐसे तुम्हें सुखके लिये और पुत्रादि हितकारियोंके लिये ( नूनं ईमहे ) अवश्य ही प्रार्थना करते हैं ॥ ३ ॥

३ २३ ३ १ २ ३ १ २ ३ १ २ ३ २
इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः १

ऋ० आप्त्यः । छ० द्विपदा-त्रिष्टुप् । दे० विश्वेदेवाः अथ द्वितीयतृचे—प्रथमा इमा इमानि परिदृश्यमानानि भुवनानि नु क्षिप्रं सीषधेम साधयेम वशीकरवाम । वाम्-इति पूरकः यद्वा, इमानि सर्वाणि भूतजातानि अस्मभ्यं कं सखं सीषधेम साधयन्तु, पुरुषव्यत्ययः ( ३, १, ८५ ) इन्द्रश्च विश्वे सर्वे अन्ये देवाः च स्तुत्या प्रीत्या इमम् अर्थम् साधयन्तु सीषधेम-सीषधाम—इति पाठौ ॥ १ ॥

(इमा भुवनानि) यह सब भुवन (नु कं सीषधेम) शीघ्र ही हमारे सुखका साधन करें ( इन्द्रः च विश्वे देवाः च ) इन्द्र और विश्वेदेवा भी मेरे इस मनोरथको सिद्ध करें ॥ १ ॥

३ १ २ ३क २र ३ १ २ ३ १ २र ३ १ २
यज्ञं च नस्तन्वञ्च प्रजां चादित्यैरिन्द्रः सह सीषधातु २

अथ द्वितीया । नः अस्माकं यज्ञं ज्योतिष्टोमादिकञ्च यागं तन्वं शरीरञ्च प्रजां पुत्रादिकञ्च आदित्यैः अदिति-पुत्रैः अन्यैर्देवैः सह वर्त्तमानः इन्द्रः सीषधातु साधयतु । सहसीषधातु-सहचीक्लृपाति-इति पाठौ ॥ २ ॥

( आदित्यैः सह इन्द्रः ) अदितिके पुत्र अन्य देवताओं सहित इन्द्र ( नः यज्ञं च तन्वं च प्रजाञ्च सीषधातु ) हमारे यज्ञको भी शरीरको भी और सन्तानको भी सफलमनोरथ करे ॥ २ ॥

३ २उ ३ १ २ ३ १ २ ३ १ २ ३ १ २
आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत् ३

अथ तृतीया । आदित्यैः अदिति-पुत्रैः मित्रादिभिः मरुद्भिश्च सगणः

गण-सहित इन्द्रः अस्माकम् अस्मभ्यम् भेषजानि औषधानि करत् करोतु ॥ भेषजाकरत्-मृत्यधितासनूनाम्-इति पाठः ॥ ३ ॥

( आदित्यैः मरुद्भिः सगणः इन्द्रः ) अदितिके पुत्र मित्रादि देवता मरुत् और गणों सहित इन्द्र ( अस्मभ्य भेषजा करत ) हमारे लिये कार्यसाधक औषधोंका सम्पादन करें ॥ ३ ॥

१ २र

प्र वोऽर्चोप ॥ १ ॥

ऋ० सम्पात ऋषि । छ० द्विपदा-त्रिष्टुप । दे०उषा । अर्थकर्मात्मक सूक्तं प्रवोर्चोपेति, चतुरक्षरात्मिका काचिद्दियमिमं पा यथा यद्वाना मद्भ्रो अविषातयमन-इत्येक पद पाद भागात्मकश्च तद्वत् । हे ऋत्विग्यजमानाः वः यूयम् उप समीपे प्रार्च्चं प्रकर्षेणेन्द्रं पूजयत ॥ १ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ६ ॥

इति श्रीमद्राजाधिराज परमेश्वर-वैदिकमार्गप्रवर्त्तक श्रीवीर-बुक्क-भूपाल साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे उत्तराग्रन्थे सप्तमोऽध्यायः ॥ ७ ॥

हे ऋत्विक् यजमानो ! ( व उप प्रार्च ) तुम समीप होकर इंद्रका भले प्रकार पूजन करो ॥ १ ॥

सामवेदोत्तरार्चिके सप्तमोऽध्यायस्य सप्तमः खण्डः सप्तमाध्यायश्च समाप्तः ।

॥ श्रीहरिः ॥

# अथाष्टमोऽध्याय आरभ्यते

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ—महेश्वरम् ॥ ८ ॥

१ २र ३ १ २ ३ २ ३ २ ३ २ ३ १ २
प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा
१ २ ३ १ २ ३ २ ३ १
विवक्ति । महिव्रतः शुचिवन्धुः पावकः पदा
२ ३ २ ३क २र ३ १ २
वराहो अभ्येति रेभन् ॥ १ ॥

ऋ० असित-देवलौ । छ० गायत्री । दे० सोमः तत्र प्रकाव्यमिति प्रथमे खण्डे—द्वादशर्चे प्रथमे सूक्ते-प्रथमा । उशनेव एतन्नामक ऋषिरिव काव्यं कवि-कर्म स्तोत्रं ब्रुवाणः उच्चारयन् देवः स्तोता देवानाम् इन्द्रादीनां जनिमा जन्मानि प्र विवक्ति प्रकर्षेण ब्रवीति । वच परिभाषणे ( अदा० प० ) व्यत्ययेन विकरणस्य श्लुः ( ३, १, ३९ ) बहुलञ्छन्दसि ( ७, ४, ७८ )—इत्यभ्यासस्येत्त्वम् महिव्रतः प्रभूतकर्मा शुचिबन्धुः । बध्नन्ति शत्रूनिति बन्धूनि तेजांसि बलानि वा । दीप्ततेजस्कः पावकः पापानां शोधकः वराहः वरश्च तदहश्च वराहः राजाहःसखिभ्यष्टच् ( ५, ४, ९१ )—इति टच् समासांतः तस्मिन्नहनि अभिषूयमाणत्वेन तद्वान् अर्श आदित्वान्मत्यर्थीयोऽच् ( ५, २, १७ ) तादृशः सोमः रेभन् रेभनं शब्दं कुर्वन् पदा पदानि पात्राणि अभ्येति अभिगच्छति यद्वा, यथा कश्चन वराहः पदा पादेन भूमिं विक्रममाणः शब्दं करोति तद्वत् ॥ १ ॥

( उशना इव ) उशना ऋषिकी समान ( काव्यं ब्रुवाणः देवः ) स्तोत्रका उच्चारण करता हुआ स्तोता ( देवानां जनिमा प्र विवक्ति ) इन्द्रादि देवताओंके प्रकट होनेको उत्तमतासे कहता है ( महिव्रतः ) अनेकों पराक्रमवाला ( शुचिबंधुः पावकः वराहः ) दीप्त तेजवाला पापों का शोधक श्रेष्ठ दिनमें संस्कार किया हुआ सोम ( रेभन् पदा अभ्येति ) शब्द करता हुआ पात्रोंमें जाता है ॥ १ ॥

मातुर् न शक्नुवन्ति इत्यर्थः। किञ्च तिग्मशृङ्गः शृण्वन्ति हिंसन्ति तमांसीति शृङ्गाणि तेजांसि तीक्ष्ण—तेजस्कः परीणसम् बहुनामैतत् (निघ० ३, १, ७) बहुविधं तेजः कृणुते करोतु अन्तरिक्षे वर्त्तमानो यः सोमः दिवा अहनि हरिः हरितवर्णः ददृशे दृश्यते न प्रकाशत इत्यर्थः। नक्तं रात्रौ तु ऋज्रः ऋजुगामी विस्पष्टः प्रकाशयुक्तो दृश्यते। ददृशे—दृशेः कर्मणि लिटि रूपम्॥ ३॥

( सः उरुगायस्य जूतिम् योजते ) वह अनेकोंसे स्तुति किये हुए अपनी, गतिको अन्तरिक्षमें प्रेरणा करता है ( वृथा क्रीडन्तम् गावः न मिमते ) अनायास गमन करते हुए सोमकी गतिका अन्य गमन करने वाले माप नहीं कर सकते ( तिग्मशृङ्गः परीणसम् कृणुते ) तीक्ष्णतेज वाला अन्तरिक्षचारी सोम अनेकों प्रकारके तेजको फैलाता है ( दिवा हरिः ददृशे ) दिनमें हरे वर्णका दीखता है ( नक्तम् ऋज्रः ) रात्रि में स्पष्ट प्रकाशयुक्त दीखता है॥ ३॥

२ ३ २ ३ १२ ३१२ ३ १ २३ १२
प्र स्वानासो रथा इवार्वन्तो न श्रवस्यवः।
१ २ ३ १ २
सोमासो राये अक्रमुः॥ ४॥

अथ चतुर्थी। स्वानासः अभिषव—वेलायामुपरवेषु शब्दं कुर्वन्तः सोमासः सोमाः रथा इव यथा शब्दम् कुर्वन्तो रथाः तथा, अर्वन्तो न यथा शब्दम् कुर्वन्तो अश्वा तथा, श्रवस्यवः शत्रुभ्यः सकाशादन्नमिच्छन्तो राये यजमानानां धनाय प्राक्रमुः प्रगच्छन्ति॥ ४॥

(स्वानासः सोमासः)अभिषवके समय पात्रोंमें शब्द करते हुए सोम ( रथा इव ) शब्दायमाने रथोंकी समान ( अर्वन्तो न ) हींसते हुए घोड़ोंकी समान ( श्रवस्यवः ) शत्रुओंसे अन्न लेना चाहते हुए ( राये प्राक्रमुः ) यजमानोंके धनके लिए पराक्रम करते हैं॥ ४॥

३ २ ३ १ २ २ ३ १ २र
हिन्वानासो रथा इव दधन्विरे गभस्त्योः।
१ २ ३ १ २
भरासः कारिणामिव॥ ५॥

अथ पञ्चमी। रथा इव युद्धदेशं प्रति यथा रथाः तथा हिन्वानासः यागदेशम् प्रति गच्छन्तः सोमाः ऋत्विजाम् गभस्त्योः बाह्वोः दधन्विरे

धीयन्ते । तत्र दृष्टान्तः—भरासः भराः कारिणामिव यथा भारवाहानां बाहोर्धीयन्ते तद्वत् ॥ ५ ॥

यज्ञमें जातेहुए (रथा इव) रथोंकी समान (हिन्वानास) यज्ञमें जाते हुए सोम (गभस्त्योः दधन्विरे) ऋत्विजोंकी भुजाओंमें स्थापन किये जाते हैं (भरासः कारिणां इव) भारवाहियोंके हाथोंमें जैसे ॥५॥

१ २ ३ १ २र ३ १ २ ३ १ २

राजानो न प्रशस्तिभि सोमासो गोभिरञ्जते ।

३ २उ ३ २ ३ १ २

यज्ञो न सप्त धातृभि ॥ ६ ॥

अथ षष्ठी । सोमासः सोमाः प्रशस्तिभिः प्रशस्ताभि स्तुतिरूपाभिः वाग्भिः राजानो न तथा राजान सप्तधातृभिः सप्त—होत्राभिः यज्ञो न यथा च यज्ञ तथा गोभि गोर्विकारैः पयोभिः अञ्जते अज्यते संस्क्रियत इति ॥ ६ ॥

(सोमास) सोम (प्रशस्तिभिः राजानः न) स्तुति रूप वाणियों से राजे जैसे (सप्त धातृभि यज्ञः न) सात ऋत्विजोंसे यज्ञ जैसे (गोभि अञ्जते) गोघृतादिसे संस्कार किये जाते हैं ॥ ६ ॥

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २

परि स्वानास इन्दवो मदाय वर्हणा गिरा ।

१ २ ३ १ २

मधो अर्षन्ति धारया ॥ ७ ॥

अथ सप्तमी । स्वानास सुषाना अभिषूयमाणाः इन्दवः सोमा बर्हणा महत्या गिरा स्तुति—रूपया वाचा युक्ता सन्त मदाय मदार्थम् मधोः मधुर—रसस्य धारया परि अर्षन्ति परितो गच्छन्ति । परिस्वानास —परिसुवानास—इति पाठौ, मधोः सुतः—इति च ॥ ७ ॥

(स्वानास इन्दव) अभिषव किये जाते हुए सोम (वर्हणा गिरा) बड़ी भारी स्तुतिरूप वाणीसे युक्त होकर (मदाय मधोः धारया परि अर्षन्ति) मदके लिए मधुर रसकी धारासे चारों ओरसे बरसते हैं ॥ ७ ॥

२ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २

आपानासो विवस्वतो जिन्वन्त उषसो भगम् ।

२ ३ २ ३ १ २

सूरा अण्व वि तन्वते ॥ ८ ॥

अथ अष्टमी। विवस्वतः दीप्तिमतः इंद्रस्य आपानासः आपानभूताः उषसः भगम् शोभाम् जिन्वन्तः प्रेरयन्तः सूराः सरन्तः सोमाः अण्वम् वि तन्वते अभिषव-वेलायामुपरवेषु शब्दम् कुर्वन्ति। जिन्वन्तः-जनम् -इति पाठौ॥ ८॥

( विवस्वतः आपानासः ) इंद्रके पीनेकी वस्तुरूप ( उषसः भगम् जिन्वन्तः ) उषाकी शोभाको फैलाते हुए ( सूराः ) सोम ( अण्वं वितन्वते ) अभिषवके समय शब्दका करते हैं॥ ८॥

२ ३ १ २ ३ २ ३ १ २ ३ १ २
अप द्वारा मतीनां प्रत्ना ऋण्वन्ति कारवः।
२ ३ १ २ ३ १ २
वृष्णो हरस आयवः॥ ९॥

अथ नवमी। मतीनां कारवः स्तुतीनां कर्त्तारः प्रत्नाः पुराणाः वृष्णः सेचकस्य सोमस्य हरसः आहर्त्तारः आयवः मनुष्याः ऋत्विजः द्वारा यज्ञस्य द्वाराणि अप ऋण्वन्ति विवृण्वन्ति॥ ९॥

( मतीनाम् कारवः ) स्तुतियोंके कर्त्ता ( प्रत्नाः ) पुरातन ( वृष्णः हरसः ) सोमको लाने वाले ( आयवः ) मनुष्य ऋत्विज ( द्वारा अप ऋण्वंति ) यज्ञके द्वारोंको खोलते हैं॥ ९॥

३ १ २ ३ १ २ ३ १ २
समीचीनास आशत होतारः सप्तजानयः।
३ १ २र ३ १ २
पदमेकस्य पिप्रतः॥ १०॥

अथ दशमी। समीचीनासः समीचीनाः जामयः जाति-सदृशाः एकस्य सोमस्य पदम् स्थानं पिप्रतः पूरयन्तः सप्त होतारः दक्षे आशत व्याप्नुवंति। आशत-आसत-इति पाठौ,जानयः-जामय-इति च॥१०॥

( समीचीनासः ) श्रेष्ठ ( जानयः ) जातिमें सदृश ( एकस्य पदम् पिप्रतः ) सोमके स्थानको पूर्ण करते हुए ( सप्त आशत ) सात होता व्यापते हैं अर्थात् कर्मानुष्ठानमें लगते हैं॥ १०॥

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
नाभा नाभिं न आ ददे चक्षुषा सूर्यं दृशे।
३ १ २र ३ १ २
कवेरपत्यमा दुहे॥ ११॥

अथैकादशी। नाभि यज्ञस्य नाभिभूतं सोमं न अस्मार्कं नाभा नाभौ अहम् आ ददे सोमं पाययन् नाभिस्थानं परोमीत्यर्थः। किमयम ? चक्षुषा सूर्य्यं दृशे द्रष्टुम्। किञ्च यज्ञेः स्वात-कर्मणः सोमस्य अपत्यम् अंशुम् आ दुहे आ पूरयामि। चक्षुषा सूर्य्य दृशे—चक्षुश्चि सूर्य्यं सचा—इति पाठौ॥ ११॥

(चक्षुषा सूर्यं दृशे) चक्षुसे सूर्यके देखनेको (नाभिं न नाभा आददे) यज्ञकी नाभिरूप सोमको मैं अपनी नाभिमें ग्रहण करता हूँ अर्थात् सोमको पीकर नाभिस्थानमें पहुँचाता हूँ (यज्ञे अपत्यं आदुहे) सोमकी किरणको पूर्ण करता हूँ॥ ११॥

३ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २

# अभि प्रिय दिवस्पदम ध्वर्युभिर्गुहा हितम्।

१ २ ३ १ २

# सूर पश्यति चक्षसा॥ १२॥

अथ द्वादशी। सूरः सुवीर्य्यः इंद्रः चक्षसा चक्षुषा प्रियं दीप्तस्य आत्मनः प्रियं परम् अध्वर्युभिः गुहा गुहायां हृदये हितं निहितं पीतं सोमम् अभिपश्यति॥ प्रियम् प्रिया—इति पाठौ॥ १२॥

(सूरः) श्रेष्ठ पराक्रमवाला इन्द्र (चक्षसा) चक्षुसे (प्रियः प्रियं परम्) अपने प्रीतिपात्र (गुहाहितम्) अध्वर्युओं करके हृदयमें स्थापन किये हुए अर्थात् पिये हुए सोमको (अभिपश्यति) देखता है १२

सामवेदोत्तरार्चिकेऽष्टमाध्यायस्य प्रथमः खण्डः समाप्तः

१ २ ३ १ २ ३ १ २ र ३ १ २ ३ १ २

# असृग्रमिन्दव पथा धर्मन्नृतस्य सुश्रिय।

३ १ २ ३ १ २

# विदाना अस्य योजना॥ १॥

ऋ० जमदग्नि असित—देवलाः। छ० गायत्री। दे० सोमः। अथ द्वितीयखण्डे असृग्रमिति द्वादश र्चं प्रथमं सूक्तम् तत्र प्रथमा। अस्य अनेन यजमानेन एतान् योजना तद्देवतायोग्यान् सम्यग्धान् विदाना जानन्तः सुश्रियः शोभन-श्रयणाः इन्दवः सोमाः धर्मन् कर्मणे ऋतस्य यज्ञस्य पथा मार्गेण असृग्रम् हविर्धानात् सृज्यन्ते। योजना—योजनम्—इति पाठौ॥ १॥

(अस्य योजना विदाना) इस यजमानके किये हुए तीन देवताओं

के योग्य संबंधोंको जानते हुए ( सुश्रियः इन्दवः ) शोभायमान सोम ( धर्मन् ऋतस्य पथा असृग्रम् ) कर्ममें यज्ञके मार्गसे रचेजाते हैं ॥ १ ॥

२३ ३ १ २ ३२ ३२३ १ २र

प्र धारा मधो अग्रियो महीरपो विगाहते ।

३ २ ३ २ ३ १ २

हविर्हविःषु वन्द्यः ॥ २ ॥

अथ द्वितीया । हविःषु हविषां मध्ये वन्द्यः स्तुत्यः हविः हविरात्मकः यः सोमः महीः महतः अपः वसतीवरीः विगाहते तस्य मधोः सोमस्य अग्रियः मुख्या धाराः प्रपतन्तीत्यर्थः ॥ मधोः मध्वः-इति पाठौ

( हविःषु वन्द्यः हविः ) हवियोंमें प्रशंसाके योग्य हविरूप सोम ( महीः अपः विगाहते ) बहुतसे जलोंको विलोड़न करता है ( मधोः अग्रियः धाराः प्र ) सोमकी मुख्य धारें पड़ती हैं ॥ २ ॥

२ ३ २ ३ १ २ ३ १ २र ३ १ २

प्र युजा वाचो अग्रियो वृषो अचिक्रदद्वने ।

२ ३ २ ३ १ २ ३२

सद्माभि सत्यो अध्वरः ॥ ३ ॥

अथ तृतीया । अग्रियः हविषां मध्ये मुख्यः सोमः युजाः युक्ताः वाचः प्रकरोतीत्यर्थः । एतदेव दर्शयति वृषः कामानां वर्षकः सत्यः सत्यभूतः अध्वरः हिंसावर्जितः सोमः सद्म यज्ञगृहं अभि प्रति वने उदके अचिक्रदत् शब्दं करोतीत्यर्थः ॥ वृषो अचिक्रदत्-वृषावचिक्रदत्-इति पाठौ ॥ ३ ॥

( अग्रियः युजाः वाचः प्र ) हवियोंमें मुख्य सोम युक्त वाणियोंको प्रकट करता है ( वृषः सत्यः अध्वरः ) मनोरथपूरक सत्यस्वरूप हिंसा से रहित सोम ( सद्म, अभि, वने, अचिक्रदत् ) यज्ञशालाके प्रति जल में शब्द करता है ॥ ३ ॥

२ ३ १ २र ३ २ ३ १ २ ३ १ २र

परि यत्काव्या कविर्नृम्णा पुनानो अर्षति ।

२र ३ १ २

स्वर्वाजी सिषासति ॥ ४ ॥

अथ चतुर्थी कवि क्रांतकर्मा सोमः नृम्णा नृम्णानि बलानि पुनानः

शोभयन् काम्या कान्तानि कवि-कर्माणि स्तोत्राणि यद् यदा परि अपनि परिगच्छति तदा स्वः स्वर्गे वाजी बलवान् अन्नवान्वेन्द्र सिषा सति याग प्रत्याग तु स्वकीय बल सम्भक्तुमिच्छति ॥ पुनान-पवमान इति पाठौ ॥ ४ ॥

( कविः नृम्णा पुनानः ) सोम बलोंका शोधन करता हुआ ( काम्या यद् परिअर्पति ) स्तोत्रोंको जब प्राप्त होता है तब ( स्व वाजी सिषा सति ) स्वर्गमें बलवान् अन्नवान इन्द्र यज्ञमें अनेकों अपने बलका सेवन करना चाहता है ॥ ४ ॥

१२ ३ २उ ३ २३ १२
पवमानो अभि स्पृधो विशो राजेव सीदति ।
१२३ १ २ ३१२
यदीमृण्वन्ति वेधस ॥ ५ ॥

अथ पञ्चमी। यद् यदा ईम् एन सोम वेधस कर्मणा कर्त्तारः ऋत्विजः ऋण्वन्ति प्रेरयन्ति तदा पवमानः क्षरन्नेव सोमः स्पृधः स्पर्द्धमानान् याग-विघ्नकारिण राक्षसादीन् अभिसीदति नाशयितुमभिगच्छति। तत्र दृष्टान्त-विश राजा इव यथा राजा विशः स्पर्द्धमानान् मनुष्यान् नाशयितुमभिगच्छति तद्वत् ॥ ५ ॥

( यद् ईम् वेधसः ऋण्वन्ति ) जब इस सोमको कर्मोंके कर्त्ता ऋत्विज प्रेरणा करते हैं तब ( पवमान स्पृध अभिसीदति ) बरसता हुआ यह सोम स्पर्धा करनेवाले यज्ञमें विघ्नकारी राक्षसादिको नष्ट करनेको पहुँचता है ( विश राजा इव ) जैसे कि राजा स्पर्धा करने वाले मनुष्योंको नाश करनेको जाता है ॥ ५ ॥

२ ३ १३ १२ ३२उ ३१२
अव्या वारे परि प्रियो हरिर्वनेषु सीदति ।
३१ २ ३२
रेभो वनुष्यते मती ॥ ६ ॥

अथ षष्ठी। हरिः हरितवर्णः प्रियः देवानां प्रियतम एष सोमः वनेषु उदकेषु सम्पृक्तः अव्याः अवेः वारे वाले सीदति किञ्च रेभः अभिषव-वेलायाम् उपरवेषु शब्द कुर्वन् मती मत्या स्तुत्या वनुष्यते सेव्यते ॥ ६ ॥

(हरि प्रिय) हरे वर्णका और देवताओंका प्यारा सोम ( वनेषु ) जलोंमें मिला हुआ ( अव्या वारे परिसीदति) ऊनके पवित्रेमें छनता

है ( रेभः मती वनुष्यते ) अभिषवके सभय शब्द करता हुआ स्तुतिसे सेवन किया जाता है ॥ ६ ॥

२ ३ १ ३र ३ १ २ ३ १ २र

स वायुमिन्द्रमश्विना साकं मदेन गच्छति ।

२ ३ १ २ ३ १ २

रणा यो अस्य धर्मणा ॥ ७ ॥

अथ सप्तमी । यः यजमानः अस्य सोमस्य धर्मभिः कर्मभिः क्रयणाभिषवादिभिः रणा रमते, सः यजमानः वायुम्, इन्द्रम् अश्विना अश्विनौ च मदेन साकं सह गच्छति प्राप्नोति ॥ ७ ॥

( यः, अस्य, धर्मणा, रणा ) जो यजमान सोमके क्रयण अभिषव आदि कर्मोंसे क्रीड़ा करता है ( सः वायुं इन्द्रम् अश्विना मदेन साकं गच्छति ) वह यजमान वायु इंद्र और अश्विनीकुमारको मदके सहित पाता है ॥ ७ ॥

२ ३ १ २र ३ २ ३ १ २ ३ १ २

आ मित्रे वरुणे भगे मधोः पवन्त ऊर्मयः ।

३ १ २ ३ १ २

विदाना अस्य शक्मभिः ॥ ८ ॥

अथाष्टमी । येषां यजमानानां मधोः सोमस्य ऊर्मयः तरङ्गा मित्रावरुणा मित्रावरुणौ देवौ भगं भगाख्यं देवञ्च प्रति पवन्ते क्षरन्ति, ते यजमानाः अस्य सोमस्य इदं सोमं विदानाः जानन्तः शक्मभिः सुखैः सङ्गच्छन्तः इति शेषः ॥ ८ ॥

जिन यजमानोंकी ( मधोः ऊर्मयः ) सोमकी तरङ्गें ( मित्रावरुणा भगं पवन्ते ) मित्रावरुण देवता और भग देवताके अर्थ वरसी हैं वह यजमान ( अस्य सोमस्य विदानाः ) इस सोमको जानते हुए ( शक्मभिः ) सुखोंसे युक्त होते हैं ॥ ८ ॥

३ १ २ ३ २उ ३ १ २ ३ १ २

अस्मभ्यथ्ँ रोदसी रयिं मध्वो वाजस्य सातये ।

२ ३ १ २ ३ १ २

श्रवो वसूनि सं जितम् ॥ ९ ॥

अथ नवमी । हे रोदसी द्यावापृथिव्यौ ! युवां मध्वः देवानां मादयितुः वाजस्य सोमात्मकस्यान्नस्य सातये लाभाय अस्मभ्यं रयिं

धनं श्रव अन्नञ्च वसूनि वासकान्यन्यान्यपि पदार्थानि सञ्जित सञ्जयन्तं प्रयच्छतमित्यर्थ ॥ ९ ॥

( रोदसी ) हे द्यावापृथिवीके अधिष्ठात्री देवताओं ! तुम ( मध्व वाजस्य सातये ) देवताओंको हर्ष देनेवाले सोमरूप अन्नके लाभके लिये ( अस्मभ्य रयिं श्रव वसूनि सजितम् ) हम धन अन्न और पशु आदि सम्पत्तियें दो ॥ ९ ॥

२ ३ १२ ३ २ ३ १ २ ३ १ २

आ ते दक्ष मयोभुव वह्निमद्या वृणीमहे ।

२ ३ १ २ ३ १ २

पान्तमा पुरुस्पृहम् ॥ १० ॥

अथ दशमी । हे सोम ! वयारो वयं ते तव स्वभूत दक्षं बलम् अद्य अस्मिन् यागदिने आ आभिमुख्येन वृणीमहे सम्भजामहे । कीदृशम् ? मयोभुवं सुखस्य भावकम् वह्निं धनादीनां प्रापकम् पान्तं शत्रुभ्यो रक्षकम् पुरुस्पृहं बहुभिः स्पृहणीय कामानाम् ॥ १० ॥

हे सोम ! हम यजन करनेवाले ( ते दक्ष अद्य आवृणीमहे ) तेरे बलकी आज अभिमुख होकर आराधना करते हैं । वह तेरा बल ( मयोभुवम् ) सुखको उत्पन्न करनेवाला ( वह्निम् ) धनादिकी प्राप्ति करानेवाला ( पान्तम् ) शत्रुओंसे रक्षा कराने वाला और (पुरुस्पृहम् ) कामनासिद्धिके निमित्त अनेकों के चाहने योग्य है ॥ १० ॥

२ ३ १ २र २उ ३ १ २ ३ १ २

आ मन्द्रमा वरेण्यमा विप्रमा मनीषिणम् ।

२ ३ १ २ ३ १ २

पान्तमा पुरुस्पृहम् ॥ ११ ॥

अथैकादशी । हे सोम ! मन्द्रं मदकर स्तुत्य वा त्वाम् आ वृणीमहे वरेण्यं सर्वैर्वरणीयं सम्भजनीयञ्च किञ्च विप्र मेधाविन त्वां तथा मनीषिण मनस ईषा मनीषा तद्वन्तं स्तुतिमन्तं वा त्वामावृणीमहे प्रत्येकं विशेषणापेक्षया आ-इत्युपसर्गः कृतः किञ्च पान्तं सर्वेषां रक्षकम् पुरुस्पृहं बहुभिः स्पृहणीय च त्वां सम्भजामहे ॥ ११ ॥

हे सोम ! ( मन्द्रम् आ ) मदकारी तेरी आराधना करते हैं ( वरेण्य आ ) सबके सेवनीय तेरी सेवा करते हैं ( विप्रम् आ ) तुझ बुद्धिमान्की आराधना करते हैं ( मनीषिणम् आ ) तुझ स्तुतिवाले की आराधना करते हैं ( पान्त पुरुस्पृहं आ ) सबकी रक्षा करने वाले और अनेकोंके चाहने योग्य तेरी आराधना करते हैं ॥ ११ ॥

२ ३ १ २२३ २ ३ १ २ ३ २
आ रयिमा सुचेतुनमा सुक्रतो तनूष्वा ।
२ ३ १ २ ३ १ २
पान्तमा पुरुस्पृहम् ॥ १२ ॥

अथ द्वादशी । हे सुक्रतो ! शोभन-प्रज्ञ ! सोम ! त्वदीयं रयिं धनम् वयम् आ पृणीमहे । किञ्च सुचेतनम् चिती सञ्ज्ञाने ( भ्वा० प० ) भावे औणादिक उन् प्रत्ययः सुज्ञानञ्च । किञ्च तनूषु अस्मत्पात्रेषु च धनं सुज्ञानञ्च त्वम् आ विधेहि यद्वा पुत्रार्थं वयमावृणीमहे । तथा पान्तं सर्वस्य रक्षकं पुरुस्पृहं बहुभिर्यष्टृभिः काम्यमानं त्वां सम्भजामहे ॥ १२ ॥

( सुक्रतो ) हे श्रेष्ठ बुद्धिवाले सोम ! ( रयिं आ ) धनकी प्रार्थना करते हैं ( सुचेतनं आ ) श्रेष्ठ ज्ञानकी प्रार्थना करते हैं ( तनुषु आ ) अपने पुत्रोंमें धन और श्रेष्ठ ज्ञानकी प्रार्थना करते हैं ( पान्तं पुरुस्पृहं आ ) सबकी रक्षा करनेवाले और अनेकोंके चाहने योग्य तेरी हम आराधना करते हैं ॥ १२ ॥

सामवेदोत्तरार्चिकेऽष्टमाध्यायस्य द्वितीयः खण्डः समाप्तः

३ १ २ ३ १ ३ २ १ २ ३ १ ३ २ ३ २ उ
मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ
३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
जातमग्निम् । कविᳬं सम्राजमतिथिं जनाना-
३ २ ३ १ २ ३ २
मासन्नः पात्रं जनयन्त देवाः ॥ १ ॥

ऋ० भरद्वाजः । छ० त्रिष्टुप् । दे० वैश्वानरः अग्निः । अथ तृतीय-खण्डे प्रथमतृचे—प्रथमा । मूर्द्धानम् शिरोभूतम् कस्य ? दिवः द्युलो—कस्य पृथिव्याः प्रथितायाः भूमेः अरतिं गन्तारम् यद्वा गन्तव्यम् स्वा-मिनं वैश्वानरं विश्वेषाम् नराणां सम्बंधिनम् ऋते ऋतमिति सत्यस्य यज्ञस्य वा नाम ( निघ० ३, १०, ६ ) । निमित्त-सप्तम्येषा (२, ३, ३६ वा० ) ऋतनिमित्तम् आ आभिमुख्येन जातम् सृष्ट्यादावुत्पन्नं कविम् क्रांतदर्शिनम् सम्राजम सम्यग्राजमानं जनानाम् यजमानानाम् अतिथिं हविर्वहनाय सततम् गन्तारं यद्वा अतिथिवत पूज्यम् । आसन् आसनि द्वितीयार्थे सप्तमी ( ३, १, ८५ ) अग्निलक्षणेनास्येन हि देवा हवींषि भुञ्जते नः अस्माकम् पात्रं पातारं रक्षकं वैश्वानरमग्निं देवाः स्तोतारः

